श्री त्रिदण्डिदेवग्रन्थमालाया एकोनचत्वारिंशत्तमं प्रसूनम्

❀ श्रीमते रामानुजाय नमः । श्रीवादिभीकरमहागुरवे नमः ❀



# क्रियाकैरवचन्द्रिका

[श्री वराहगुरुविरचित पाद्मतन्त्रानुसारिणीप्रयोगपद्धतिः]

सा च

श्री १००८ श्रीमद्वेदमार्गप्रतिष्ठापनाचार्योभयवेदान्त-
प्रवर्त्तकाचार्य सत्सम्प्रदायाचार्य श्रीमत्परमहंस-
परिव्राजकाचार्य जगद्गुरुभगवदनन्तपादीय
श्रीमद्विष्वक्सेनाचार्य श्री त्रिदण्डि-
स्वामिचरणाश्रितवेदान्तमार्त्तण्ड

**स्वामिरामनारायणाचार्यैः**

मन्त्रासाङ्केतिकपद-
विवृतिपुण्याहवाचनविविधसूक्तादिभिः परिष्कृत्य
परिशिष्टे तिलकधारणसन्ध्यावन्दनभगवदारा-
धनविधींश्च संगृह्य संशोध्य च प्रकाशिता

प्रथम संस्करणम्-१[illegible]०] [गुरुपूर्णिमा, सं० [illegible]१७

श्री त्रिदण्डिदेवग्रन्थमालाया एकोनचत्वारिंशत्तमं प्रसूनम्

❀ श्रीमते रामानुजाय नमः । श्रीवादिभीकरमहागुरवे नमः ❀



# क्रियाकैरवचन्द्रिका

[श्री वराहगुरुविरचित पाद्मतन्त्रानुसारिणीप्रयोगपद्धतिः]

सा च

श्री १००८ श्रीमद्वेदमार्गप्रतिष्ठापनाचार्योभयवेदान्त-
प्रवर्त्तकाचार्य सत्सम्प्रदायाचार्य श्रीमत्परमहंस-
परिव्राजकाचार्य जगद्गुरुभगवदनन्तपादीय
श्रीमद्विष्वक्सेनाचार्य श्री त्रिदण्डि-
स्वामिचरणाश्रितवेदान्तमार्तण्ड

**स्वामिरामनारायणाचार्यैः**

मन्त्रासाङ्केतिकपद-
विवृतिपुण्याहवाचनविविधसूक्तादिभिःपरिष्कृत्य
परिशिष्टे तिलकधारणसन्ध्यावन्दनभगवदारा-
धनविधींश्च संगृह्य संशोध्य च प्रकाशिता

प्रथम संस्करणम्-१०००] [गुरुपूर्णिमा, सं० २०१७



स्वामी श्रीरामनारायणाचार्य शास्त्री वेदान्ती

शाण्डिल्याह्वयवंशवारिधिविधुं लक्ष्मीशपूजारतम्,
वेदान्तद्वयपारगं श्रितनिधिं वादीभसिंहायितम्।
विष्वक्सेनयतीन्द्रदेशिककृपालब्धैकसञ्जीवनम्,
वन्देऽहं करुणाकरं गुरुवरं श्रीरामनारायणम्॥

॥ श्री मैथिल्यै नमः ॥

❈ श्रीमतेरामानुजायनमः ❈

# आमुखम्

दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्तये ।
स्वानुभूत्येकमानाय नमः शान्ताय तेजसे ॥

दक्षिणभारते समुपलब्धापि क्रियाकैरवचन्द्रिका देवनागराक्षरे नासीदतो महती कठिनताऽऽसीदुत्तरभारतीयानाम् ।

त्रिगुणातीतानां पाञ्चरात्रागमप्रतिष्ठापकानां श्रीमतां १००८ श्रीत्रिदण्डिस्वामिमहोदयानां शिष्योऽनन्त श्री संवर्धितः श्रीरामनारायणाचार्यो धन्यवादार्हो यस्य सफलप्रयासेनेयं क्रियाकैरवचन्द्रिकाऽस्माकमपि सुलभा सुबोधगम्या च जाता ।

यद्यपि समस्तवेदस्मृतिपुराणेतिहासप्रभृतयो भगवन्नारायणचरणस्तुतौ संलग्नाः वर्तन्ते परन्तु ते परोक्षवादिनो न च प्रत्यक्षवादिनः । यथा—

"परोक्षवादा ऋषयः परोक्षं मम चेन्द्रियम्" ॥
(श्रीमद्भा० स्कं० ११ अ० २१ श्लो० ३५)

स्वयमपि भगवान् श्रीकृष्णः उद्धवोपदेशकाले श्रीमद्भागवते प्रतिपादितवान् यत्—

किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत् ।
इत्यस्या हृदयं लोके नान्यो मद्वेद कश्चन ॥४२॥
मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते त्वहम् ।
एतावान्सर्ववेदार्थः शब्द आस्थाय मां भिदाम् ॥
मायामात्रमनूद्यान्ते प्रतिषिध्य प्रसीदति ॥४३॥

(श्रीमद्भा० स्कं० ११ अ० २१ श्लो० ४२-४३)

सर्वे वेदोपनिषदादयो भगवन्तं श्रीमन्नारायणमेव स्तुवन्ति, वेदप्रतिपाद्योऽपि भगवान् नारायण एव यथा भागवतस्य नवमस्कन्धे प्रतिपादितम्—

एक एव पुरा वेदः प्रणवः सर्ववाङ्मयः ।
देवो नारायणो नान्य एकोऽग्निर्वर्ण एव च ॥

(श्रीमद्भा० स्कं० ९ अ० १४ श्लो० ४८)

एतस्यैव वेदप्रतिपाद्यस्य परमपुरुषोत्तमस्यैवाराधनस्योत्तमवर्णनं श्रीपाञ्चरात्रागमे प्रतिपादितम् । तस्याराधनस्य क्रमबद्धा पद्धतिः विरलैवोपलभ्यते । तासु विरलास्वपि पद्धतिषु "श्रीक्रियाकैरवचन्द्रिका" अन्यतमा वर्तते ।

एतस्मिन्ग्रन्थे ग्रामसंस्थापनायाः, भूपरिग्रहस्य, मन्दिरनिर्माणस्य, मूर्तिनिर्माणस्य, प्रतिष्ठाविधानादिकस्यैदृशमपूर्वं वर्णनं विद्यते यादृशं वर्णनमुत्तरभारतेऽद्यापि पूर्वप्रकाशितेषु ग्रन्थेषु नोपलभ्यते ।

मूलग्रन्थलेखकेन श्रीवराहगुरुमहोदयेन श्रीपाद्मसंहितामनुसृत्य विषयविधानं साधु समुल्लिखितम्। यत्र मूलग्रन्थे संक्षेपता वर्तते तत्र प्रकाशकः यथासाध्यं विशदीकरणस्य प्रयासं कृतवान् यथाऽस्त्रमन्त्रस्य समावेशः।

ग्रन्थस्यास्य प्रकाशनेन विविधानां विवादग्रस्तविषयाणां स्पष्टीकरणं भवति। संदेहस्य निराकरणञ्च भवति। यथा "चक्राब्जमण्डल" विषये एकेषामाग्रहोऽस्ति अष्टावराण्येव भवन्ति तद्वीथ्यादीनामलङ्करणं च न भवतीति तत्र ग्रन्थकारः कथयति यत् "द्वादशाराणि रक्तेन वीथिका लतावितानयुतेति" (क्रि० कै० च० पृ० १७२)।

एवमन्यत्राप्यनेकस्थलेषु मौलिकविषयस्यापि समावेशो वर्तते। अस्माकं मते तु माननीयानां पूज्यपादप्रातः स्मरणीयानां त्रिगुणातीतानां वेदमार्गप्रतिष्ठापनाचार्यादिविरुदाङ्कितानाम् १००८ श्रीत्रिदण्डिस्वामिमहोदयानां चरणस्यैवायं प्रसादो येन श्रीमता रामनारायणाचार्येणेदृशं ग्रन्थरत्नं प्रकाश्य लोकलोचनतां नीतम्।

यद्यपि श्रीक्रियाकैरवचन्द्रिकायां समागतविषयाणां वर्णनं ईश्वर, पाद्म, पौष्कर, पारमेश्वरसंहितास्वन्यत्रापि चोपलभ्यते तथापि ग्रन्थोऽयं सुबोधरीत्या जनमनांस्यनुरञ्जयन् पाञ्चरात्रागममार्गे समेधमानानां जनानां प्रकाशको वर्तते नात्र कश्चन सन्देहलवः।

आशास्महे यदियं "क्रियाकैरवचन्द्रिका" क्रिया उपासना पथं प्रकाशमाना चन्द्रिकावज्जनैरुपास्या भविष्यति ।

पं० आद्याचरण झा व्याकरणाचार्यः
साहित्याचार्यश्च बी० ए०
प्रधानाध्यापकः
छपरास्थ राजकीय संस्कृतोच्चविद्यालयीयः
तथा
अवैतनिकप्राचार्यः
भा० मा० सं० महाविद्यालयस्थः



॥ श्रीवादिभीकरमहागुरवे नमः ॥

# सम्पादकीय निवेदन

वैदिकधर्मावलम्बी सज्जनों !

अखिल ब्रह्माण्डनायक अपारकरुणावरुणालय श्रीमन्-नारायण की असीमानुकम्पा से भगवदाराधन लक्षण कर्मकांड में श्रद्धा रखनेवाले सहृदय पाठकों के समक्ष श्री वराहगुरु विरचित पाद्मतन्त्रानुसारिणी "क्रियाकैरव चन्द्रिका" प्रकाशन करते अपार हर्ष हो रहा है। पाञ्चरात्र की १०८ संहिताओं में पाद्मसंहिता अन्यतम है। पाञ्चरात्र की सभी संहिताओं का प्रादुर्भाव "पांञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्" के अनुसार भगवान श्रीमन्नारायण के श्रीमुख से ही हुआ है। अतः यह सकल दोषो से रहित और परम पुरुषार्थ मोक्ष की प्राप्ति के साधन वर्णन में तत्पर है। वेदों की दुरूह साधनाओं को देखकर तपस्या करके शाण्डिल्यादि ऋषियों ने भगवान संकर्षण की कृपा से मोक्षोपयोगी सुगम धर्म बतानेवाले "वेदेषुनिष्ठामलभमानः शाण्डिल्यः पञ्चरात्रमधीतवान्" के अनुसार पाञ्चरात्र तन्त्र का ज्ञान प्राप्त किया। पाञ्चरात्र शब्द की व्याख्या परमसंहिता में इस तरह से की गई है।

महाभूत गुणाः पञ्च रात्रयो देहिनः स्मृताः।
तद्योगात् विनिवृत्तेर्वा पञ्चरात्रमिति स्मृतम् ॥

(परमसंहिता अ० १)

जिन मनुष्यों के शब्द-स्पर्श-रूप-रस-गन्ध स्वरूप पञ्च-महाभूतों की निवृत्ति हो उसे पञ्चरात्र कहते हैं।

पाञ्चरात्र की संहिताओं में से कुछ संहितायें उपलब्ध हैं जिनमें अधिकांश ग्रन्थाक्षर और आन्ध्र लिपि में हैं। अभी तक ६-१० संहिताओं का प्रकाशन देवनागरी लिपि में हो चुका है।

पाद्मसंहिता जिसके चर्या, क्रिया आदि चार पाद हैं इसका अभी तक देवनागरी लिपि में प्रकाशन नहीं हो सका है। पाद्मसंहिता के चर्या पाद में पाञ्चरात्र के मन्त्र, आगम, तन्त्र और तन्त्रान्तर सिद्धान्तों का उल्लेख मिलता है। उन चार सिद्धान्तों में पाद्मसंहिता विशेषकर मन्त्र सिद्धान्त का ही वर्णन करती है। मन्त्र सिद्धान्त उसे कहते हैं जहां भगवान के किसी एक विशेष मूर्ति की प्रधानतया तथा इतर श्री भूदेव्यादि की परिवारवत् पूजा होती है।

इस मन्त्र सिद्धान्त प्रतिपादक पाद्मतन्त्र (संहिता) के आधार पर पाञ्चरात्र के प्रकाण्ड विद्वान् श्री वराहगुरु ने आज से बहुत पहले जिज्ञासुओं के अभीष्ट सिद्धि के लिए पाद्मतन्त्र की प्रयोग पद्धति के रूप में क्रियाकैरव चन्द्रिका की रचना की। यह ग्रन्थ ग्रन्थाक्षर में होने के कारण उत्तर देशीय विद्वानों को दुर्लभ था। मेरी बहुत दिनों से अभिलाषा थी कि देवनागरी लिपि मे इसका प्रकाशन हो। जब मैं दक्षिण गया तब वहां के विद्वानों के सहयोग से देवनागरी लिपि में इसे लिखा। जिसमें पण्डित श्री वासुदेवाचार्य मैलापुर मद्रास तथा मेरे परम सुहृद् श्री श्री निवासाचार्य का सहयोग महत्वपूर्ण रहा है। अतः मैं उनका बहुत बड़ा आभारी हूँ। इसमें मन्दिर

निर्माण सम्बन्धी कर्षणादि प्रतिष्ठान्त समस्त विधियां बड़े रोचक ढङ्ग से लिखी गई हैं। प्रतिष्ठादि कर्म करानेवाले विद्वानों को सुविधा के लिए इस क्रियाकैरव चन्द्रिका में केवल नाम मात्र से दिये गये सूक्त-मन्त्र-न्यास-पुण्याहवाचन और सांकेतिक पदों का विवरण जहां तक हो सका है टिप्पणी के रूप में दे दिये गये हैं।

इसके परिशिष्ट में श्री वैष्णवों के उपयोग के लिए द्वादशतिलक धारणविधि, सन्ध्यावन्दनविधि और भगवदाराधनविधि भी संग्रथित है।

इस कार्य में पं० श्री रामदेवाचार्य (श्री रामदेव शुक्ल) वेदाचार्य, पोष्टाचार्य, उपप्रधानाध्यापक राजकीय संस्कृतोच्च विद्यालय छपरा तथा पाञ्चरात्रागमविशारद ज्योतिर्वेदवित् पं० श्री श्रीनाथ प्रपन्नाचार्य दधीचाश्रम छपरा एवं पं० श्री लक्ष्मीनारायणाचार्य पुजारी वराहघाट पुष्कर से अत्यधिक सहयोग प्राप्त हुआ है। अतः इन विद्वानों को मैं हृदय से धन्यवाद देता हूँ।

इस ग्रन्थ का प्रकाशन दक्षिण हैदराबाद तथा उसके समीपवर्ति ग्राम के प्रमुख माननीय धर्मवीर श्रेष्ठिजनों के आर्थिक सहयोग से हुआ है। जिनके नाम निम्नलिखित हैं।

| | | |
|---|---|---|
| १ | श्रीमान् राजा बहादुर मोतीलाल वंशीलाल जी (वेगम बाजार हैदराबाद) | २०१) |
| २ | " " हीरानन्द रामसुख जी (महाराजगंज हैदराबाद) | १५१) |
| ३ | " " नन्दलाल श्री निवास जी (उस्मानगंज हैदराबाद) | १०१) |

४ श्रीमान् राजा द्वारकादास दामोदर जी (महाराजगंज हैदराबाद) १०१)

५ " " रामगोपाल दामोदरलाल जी (महाराजगंज हैदराबाद) १०१)

६ " " तुलसीराम गिलड़ा (महराजगंज हैदराबाद) १०१)

७ " " पन्नालाल हीरालालजी (नगारखाना " ) १५१)

८ " " जेठमल गंगाविशनजी (महाराजगंज " ) १०१)

९ " सेठ मोतीलाल जी बलदवा (ताण्डूर) १०१)

१० " " जेठमल जी लक्ष्मी निवास (सेलम् ) १०१)

११ " " प्रेमसुखजी सोनी (महाराजगंज " ) ५१)

१२ " " राधाकृष्ण भवरीलाल मनिहार (नगारखाना हैदराबाद) ५१)

१३ " " मनीराम रामरतनजी (बेगम बाजार " ) ५१)

१४ " " लक्ष्मीनारायणजी ट्रेडिङ्ग कंपनी (हैदराबाद) ५१)

१५ " " मुरलीधरजी कासट् के मारफत (हैदराबाद) १०१)

मैं इन दानवीर श्रेष्ठिजनों का हार्दिक अभिनन्दन करता हुआ भगवान श्रीमन्नारायण से प्रार्थना करता हूँ कि इस तरह के शुभ कार्यों में ये लोग बराबर प्रवृत्त होते रहें।

पाठकों से निवेदन है कि इस अलभ्य ग्रन्थ को अपनाकर प्रतिष्ठादि कार्यों में अपने तथा मेरे परिश्रम को सफल करें।

निवेदक—

स्वामी रामनारायणाचार्य वेदान्ती

# क्रियाकैरवचन्द्रिका में आये हुए विषयों की सूची

संग्रहकर्ता—
रामदेवाचार्य (रामदेवशुक्ल)
उपप्रधानाध्यापक
राजकीय संस्कृतोच्चविद्यालय
छपरा



श्री १००८ जगद्गुरु त्रिदण्डिस्वामीजी महाराज

श्रीः

श्रीमत्प्रणतार्तिहरवरदपरब्रह्मणे नमः

श्रीमते हयग्रीवाय नमः

श्रीमते रामानुजाय नमः

—×—

# क्रियाकैरवचन्द्रिका

[ श्रीमता वराहगुरुणा विरचिता, पाञ्चतन्त्रानुसारिणी प्रयोगपद्धतिः ]

—:o:—

श्रीनिधिं कौशिकानन्तदेशिकाब्धिसुधाकरम् ।
प्रपद्ये सर्वशास्त्रज्ञं पेट्रारार्यं गुरुं मम ॥ १ ॥
अमृताध्मातमेवाभं अमृताहरणं विभुम् ।
पाञ्चरात्रागमाचार्यं वन्दे वैकुण्ठभूपतिम् ॥ २ ॥
अस्तु मेधाप्रदं नित्यं वस्तु कौस्तुभलक्षणम् ।
कारणं जगतामासीत् कमलं यस्य नाभिजम् ॥ ३ ॥

भद्राण्युन्निद्रयन्तु प्रबलतरसुधासिन्धुकल्लोलमाला-
पारंपर्यप्रचारप्रहसितनिपुणप्राग्र्यकान्तिप्ररोहाः ।
निर्मर्यादं सदा नः त्रिभुवनजननतानन्दसन्दोहदान-
प्रावल्यप्रौढचारप्रकटितविभवाः पद्मवल्लीकटाक्षाः ॥४॥
श्रीमत्कौशिकवंशाब्धिचन्द्रेण गुरुसेविना ।
तन्यते श्रीवराहेण क्रियाकैरवचन्द्रिका ॥ ५ ॥
पाञ्चरात्राब्धिसंजातपद्मतन्त्रसुधाकरात् ।
क्रियासुधां समुद्धृत्य करोमि विबुधप्रियाम् ॥ ६ ॥

—×—

अथ प्रथमः परिच्छेदः

# भूपरीक्षाविधिः

आदौ तावत् भूपरीक्षाविधिः उच्यते—

"श्रद्धावान् आस्तिको भक्तः धनधान्यैः समेधितः ।
महोत्साहः शुचिः दक्षः कृतज्ञो लोभवर्जितः ॥
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वाप्यनुलोमजः ।"
इत्याद्युक्तैः समस्तगुणैः समेतः यजमानः,

"पाञ्चरात्रविदं शान्तं सिद्धान्तेषु[१] कृतश्रमम् ।

१—मन्त्र तंत्र तन्त्रान्तरागमाख्येषु चतुर्षु सिद्धांतेषु

भगवद्वंशजं शुद्धं अलोलुपमदांभिकम् ॥
अपापमृजुमव्याधिमदृष्टपरमास्तिकम् ।"

इत्याद्युक्तलक्षणम् आचार्यं प्रथमं वरयेत् ।

ततः आचार्यो यजमानश्च दैवज्ञेन सह शुभे दिने ग्रामादिस्थापनाय आदौ निमित्तानि परीक्ष्य शुभे निमित्ते ग्रामादीन् आरभेत। तदर्थं रथकारेण सह आचार्यः भुवं परीक्षेत।

अथ भूमिलक्षणम् उच्यते—सुपद्मा, भद्रका, पूर्णा, धूम्रा च इति भूमिश्चतुर्विधा।

सुपद्मा, चंपकागरुखर्जूरकदंबतिलकार्जुनक्रमुकनारिकेरकुशकाशकमलकुवलययुता प्रागुदक्प्रवणा शुभतोयावृता।

भद्रका, नदीसागरपार्श्वस्था तीर्थायतनम्–आश्रिता क्षीरवृक्षफलवृक्षसमाकुला उद्यानोपवनोपेता लतागुल्मयवृक्षकुशकाशव्रीहिक्षेत्रैः अधः जलेन च उपेता।

पूर्णा, कुलुत्थकंगुनिष्पावकोद्रवश्यामाकान्विता अप्रभूतोदका गिरिपार्श्वं गिरिशिखरं वा आश्रिता।

धूम्रा, यववेणुस्नुहिरलेष्मातकविभीतकार्कसङ्कीर्णा कठिनशर्करान्विता वायसश्येनगृध्रगोमायुवृकसंकुला ऊषरान्विता।

सुपद्मा शान्तिदा। भद्रका सुखदा। पूर्णा पुष्टिदा। धूम्रा क्षयदा।

भूमिम् एवंविधां ज्ञात्वा, तां दण्डमानेन विस्तारायामयोः सदृशं जानुदघ्नं खात्वा, पुनः ताभिरेव मृद्भिः पूरिते,

समधिके उत्तमाम्, समे मध्यमां, न्यूने अधमाम् ज्ञात्वा अधमां वर्जयित्वा अन्ययोः शालिमुद्गयवादीनाम् बीजान्युप्त्वा परीक्षेत।

त्रिरात्राभ्यन्तरे यद्यङ्कुराः समुद्भूताः तदा उत्तमा, पञ्चरात्राभ्यंतरे चेत् मध्यमा, सप्तरात्राभ्यंतरे चेत् अधमा। अङ्कुरेषु अप्ररूढेष्वपि अधमैव। अधमां वर्जयेत्। अन्ये गृह्णीयात्। कुशपलाशहरिणाः यत्र विद्यन्ते सा अधमा अपि उत्तमा। मधुरेण रसेन युक्ता उत्तमा। कटुका मध्यमा। आम्लाद्यन्यरसा अधमा। श्वेता उत्तमा। पीतलोहिता मध्यमा। कृष्णा अधमा।

सम्यक् एवं विचार्य पाञ्चरात्रवित् आचार्यः यजमानेन रथकारेण च साकम्, वास्तुसीमनि नृत्तगीतवाद्यमङ्गलपाठपूर्णकुंभदीपध्वजछत्रसमन्वितम् सवेदाध्ययनं स्वस्तिवाचनेन सह प्रदक्षिणं परिक्रम्य सर्वास्वपि दिक्षु विदिक्षु च प्रागादि पिशाचादीनां पायसैः ब्रह्मस्थानांतं बलिकर्म कुर्यात्।

"भूताः पिशाचाः नागाश्च असुराः राक्षसाः ग्रहाः।
सर्वे ते व्यपगच्छन्तु बलितुष्टाः यथातथम्॥
देवानां च द्विजानां च स्थानं सम्यक् करोम्यहम्।
वासुदेवस्य देवस्य सर्वभूतात्मकस्य च॥"

इति मंत्रं उदीरयन्, अस्त्रमन्त्रेण[१] संसिद्धान् सिद्धार्थान्[२]

---

१ अस्त्रमंत्रः—ओं नमोऽस्त्राय फट।

२ सिद्धार्थः श्वेतसर्षपः।

सर्वतः विकीर्य, यथाविधि बलिं दत्वा, तत्र सूत्राणि निपात्य, सूत्रसंधिषु शङ्कून् संस्थाप्य, ततः यथाविधि वास्तुपूजां कुर्यात्।

अधोमुखं प्राक्शिरसं कोणप्रसारितपाणिपादम वास्तुपुरुषं विलिख्य आवाह्य अभ्यर्च्य, वास्तुपुरुषस्य दक्षिणतः अग्निकुण्डे स्थण्डिले वा विधिवत् संस्कृतम् अग्निं दीपयित्वा तस्मिन् तमग्वाह्य पञ्चोपनिषदा[१] घृतेन आहुतीनां सहस्रं शतं वा अपामार्गशमीखदिराणां समिद्भिश्च तावत् हुत्वा, यक्षरक्षःपिशाचानाम् पूर्वोक्ताभिः समिद्भिः पूर्वोक्तसंख्यया स्वयं हुत्वा ततः मूलमंत्राभ्यां पृथक् अष्टोत्तरशताहुतीः वास्तुनाथमंत्रेण[२] चरुणा आहुतीनां शतं च हुत्वा, पूर्णाहुतिं च हुत्वा, अग्निस्थम् उद्वास्य, अष्टासु दिक्षु यथाविधि इन्द्रादीनां स्वस्वमन्त्रेण बलिं दद्यात्।

---

१ पञ्चोपनिषन्मन्त्राः—

१ ओं षां नमः पराय परमेष्ठ्यात्मने नमः।

२ ओं यां नमः पराय पुरुषात्मने नमः।

३ ओं रां नमः पराय विश्वात्मने नमः।

४ ओं वां नमः पराय नित्यात्मने नमः।

५ ओं लां नमः पराय सर्वात्मने नमः।

२ ओं वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशो अनमीवो भवानः यत्वे महे प्रतितन्नो जुषस्व शन्नोभव द्विपदे शञ्चतुष्पदे।

इति श्रीमत्कौशिककुलतिलकेन
पेट्टाराचार्यतनयेन श्रीवराहगुरुणा
विरचितायां क्रियाकैरवचन्द्रिकायाम्
भूपरीक्षाविधिः नाम प्रथमः परिच्छेदः

---

द्वितीयः - परिच्छेदः

# कर्षणम्

अथ कर्षणविधिः उच्यते—

एवं ग्रामादि कल्पयित्वा, तन्मध्ये मन्दिरनिर्माणार्थम् पूर्वोक्तां भूमिं प्रवेशबलिपूर्वकम् आसाद्य तां प्रदक्षिणीकृत्य,

"यक्षाः पिशाचाः नागाश्च येऽत्र तिष्ठन्ति सर्वदा।
सर्वे प्रयांतु तेऽन्यत्र विष्णोः स्थानं करोम्यहम् ॥

इति मंत्रेण अस्त्रमंत्रसंसिद्धान् सिद्धार्थान् सर्वतः दिक्षु विकीर्य, पूर्ववत् वास्तुपूजां होमं च बल्यन्तम् कृत्वा; अनतरम् आचार्यः वक्ष्यमाणेन विधिना हलेन भूमिं विलिखेत् ।

यजमानः ब्राह्मणश्चेत् अनड्वाहौ गौरवर्णौ, यदि क्षत्रियः लोहितौ, यदि वैश्यः पीतौ, यदि शूद्रः मेचकौ, उक्तवर्णानाम् अलाभे कपिलौ गौरौ रक्तौ वा, तौ महान्तौ बलशालिनौ वृषभौ क्षालयित्वा खुरशृङ्गादीनि कनकमयैः भूषणैः भूषयेत् ।

ब्राह्मणो यजमानः चेत्, युगं हलं च पालाशम्, क्षत्रियः यदि नैयग्रोधम्, यदि वैश्यः शूद्रश्च प्लाक्षम्, सर्वेषां वर्णानां नैयग्रोधपैप्पले वा स्याताम्।

सर्वेषां कौशिकः सौवर्णं योक्त्रं राजतं ताम्रं वा।

कुशाः, धनुर्ज्या, वीरण्यः, काशाश्च यथावर्णम् क्रमात् रज्जुः।

हलभूतमेध्यौ एकयोनिके।

सर्वम् एवं कृत्वा, ततः स्नातः नवांबरधरः सर्वालङ्कार-संयुक्तः आचार्यः, पादौ प्रक्षाल्य आचम्य प्राणायामैः भूतशुद्धिं कृत्वा, ब्राह्मणैः अनुज्ञातः, मन्त्रज्ञैः वैष्णवैः सह पुण्याहं वाचयित्वा, तज्जलेन सर्वं द्रव्यजातं आत्मानं च प्रोक्ष्य, मूलमन्त्रेण वृषस्कन्धे युगं संयोज्य, तेनैव मन्त्रेण हलं युगे संयोज्य, सुमुहूर्ते भेरीपटह-शङ्खादिवाद्यघोषपुरस्सरम् शाकुनसूक्तादिवेदघोषसहितं प्राङ्मुखः गुरुः हृदयकमले नारायणं ध्यायन्, पालाशादि-दण्डं प्रवहणं कृत्वा, ततः तोदनं आदाय हुंफडादिना आपीड्य प्राङ्मुखः मूलविद्यया प्रथमं कर्षयेत्; पौरुषेण सूक्तेन द्वितीयम्; विष्णुसूक्तेन तृतीयम; विष्णुगायत्र्या तुरीयम्; नारायणानुवाकेन पञ्चमम्; पञ्चोपनिषन्मन्त्रैः षष्ठम; भूसूक्तेन सप्तमम् कर्षणम्; सर्वं प्रादक्षिण्यक्रमेण।

दक्षिणोत्तरतश्च एवं कर्षयेत्।

१—अथ शाकुनसूक्तम्—

अनूहवं परिहवं परीवादं परिक्षयम् ।
दुःस्वप्नं दुर्हितं तद्विषद्भ्यो दिशाम्यहम् ॥१॥
अनुहूतं परिहूतं शकुने यदशाकुनम ।
मृगस्य श्रुतमक्षया तद्विषद्भ्यो दिशाम्यहम् ॥२॥
आरात्ते अग्निस्त्वारात्परशुरस्तु ते निवाते त्वाभिवर्षतु ।
स्वस्तितेऽस्तु वनस्पते स्वस्तिमेऽस्तु वनस्पते ॥३॥
नमः शकृत्सदे रुद्राय नमो रुद्राय शकृत्सदे ।
गोष्ठमसि नमस्ते अस्तु मा मा हिꣳसीः ॥४॥
सिगसिनसि वज्रो नमस्ते मा मा हिꣳसीः ॥५॥
उद्गातेव शकुने साम गायसि ब्रह्मपुत्र इव सवनेषु
शंससि वृषेव वाजी शिशुमतीरपीत्या सर्वतोनः
शकुने भद्रमावद विश्वतोनः शकुने पुण्यमावद
स्वस्तिनः शकुने अस्तु प्रतिनः सुमना भव ॥६॥

२-पुरुषसूक्तम्—

ओं सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
सभूमिꣳ सर्वतस्पृत्वा ऽत्यतिष्ठद्दशाङ्गुलम् ॥१॥
पुरुष एवेदꣳसर्वं यद्भूतं यच्च भाव्यम् ।
उतामृतत्वस्येशानो यदन्ने नातिरोहति ॥२॥
एतावानस्य महिमातो ज्यायांश्च पूरुषः ।

पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतन्दिवि ॥३॥
त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः ।
ततो विष्वङ् व्यक्रामत्साशनानशने अभि ॥४॥
ततो विराडजायत विराजो अधिपूरुषः ।
स जातो अत्यरिच्यत पश्चाद् भूमिमथो पुरः ॥५॥
तस्माद्यज्ञात्सर्वहुतः सम्भृतं पृषदाज्यम् ।
पशूंस्तांश्चक्रे वायव्या नारण्यान्ग्राम्याश्च ये ॥६॥
तस्माद्यज्ञात्सर्वहुत ऋचः सामानि यज्ञिरे ।
छन्दाꣳसि यज्ञिरे तस्माद्यजुस्तस्मादजायत ॥७॥
तस्मादश्वा अजायन्त ये के चोभयादतः ।
गावो ह यज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥८॥
तं यज्ञं बर्हिषि प्रौक्षन्पुरुषञ्जातमग्रतः ।
तेन देवा अयजन्त साध्या ऋषयश्च ये ॥९॥
यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।
मुखङ्किमस्यासीत्किम्बाहू किमूरू पादा उच्येते ॥१०॥
ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्याꣳ शूद्रो अजायत ॥११॥
चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥१२॥
नाभ्या आसीदन्तरिक्षꣳ शीर्ष्णो द्यौः समवर्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाꣳ२॥ अकल्पयन् ॥१३॥

यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तोऽस्यासीदाज्यङ्ग्रीष्म इध्मः शरद्धविः ॥१४॥
सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः ।
देवा यद्यज्ञन्तन्वाना अबध्नं पुरुषं पशुम् ॥१५॥
यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः
सन्ति देवाः ॥१६॥

विष्णुसूक्तम्—

ओं विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजा ꣳसि । यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधो-रुगायः ॥१॥ विष्णोरराटमसि विष्णोः पृष्ठमसि विष्णोः श्नप्त्रेस्थः ॥ विष्णोः स्यूरसि विष्णोर्ध्रुवमसि वैष्णवमसि विष्णवे त्वा ॥२॥ तदस्य प्रियमपि पाथो अस्यां नरो यत्र देवमयो मदन्ति ॥ उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः ॥३॥ प्रतद्विष्णुस्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ॥ यस्योरुषु त्रिषु विक्रमणेषु अधि-क्षियन्ति भुवनानि विश्वा ॥४॥ परो मात्रया तनुवा वावृधान न ते महित्वमन्वश्नुवन्ति ॥ उभे ते विद्म रजसी पृथिव्या विष्णोर्देवत्वं परमस्य वित्से ॥५॥ विचक्रमे पृथिवीमेष एतां क्षेत्राय विष्णुर्मनुषे दशस्यन् ॥ ध्रुवासो अस्य कीरयो जनास उरुक्षितिं सुजनिमा चकार ॥६॥ त्रिर्देवः पृथि-वीमेष एतां विचक्रमे शतर्चसं महित्वा ॥ प्रविष्णुरस्तु

तवसस्तवीयान् त्वेष ठं ह्यस्य स्थविरस्य नाम ॥७॥
अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे, पृथिव्या सप्तधाम-
भिः ॥८॥ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य
पा ठं सुरे ॥९॥ त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः
ततो धर्माणि धारयन् ॥१०॥ विष्णोः कर्माणि पश्यत यतो
व्रतानि पस्पसे । इन्द्रस्य युज्यः सखा ॥११॥ तद् विष्णोः
परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥१२॥
तद्विप्रासो विपण्यवो जागृवांसः समिन्धते ॥ विष्णोर्यत्
परमं पदम् ॥१३॥

विष्णुगायत्री—

ओं नारायणाय विद्महे वासुदेवाय धीमहि ।
तन्नो विष्णुः प्रचोदयात् ॥

नारायणानुवाक—

ओं सहस्रशीर्षं देवं विश्वाक्षं विश्व शम्भुवम् ॥
विश्वं नारायणं देवमक्षरं परमं प्रभुम् ॥१॥
विश्वतः परमं नित्यं विश्वं नारायणं हरिम् ॥
विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति ॥२॥
पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम् ॥
नारायणं महाज्ञेयं विश्वात्मानं परायणम् ॥३॥
नारायणः परं ब्रह्म तत्वं नारायणः परः ॥
नारायणः परो ज्योतिरात्मा नारायणः परः ॥४॥

यच्च किञ्चिज्जगत्यस्मिन्दृश्यते श्रूयतेऽपि वा ॥
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥५॥
अनन्तमव्ययं कविं समुद्रेऽन्तं विश्वशम्भुवम् ॥
पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखम् ॥६॥
अधोनिष्ट्या वितस्त्यान्ते नाभ्यामुपरि तिष्ठति ॥
हृदयं तद्विजानीयाद्विश्वस्यायतनं महत् ॥७॥
सन्ततꣳ शिराभिस्तु लम्बत्याकोशसन्निभम् ॥
तस्यान्ते सुषिरं सूक्ष्मं तस्मिन्सर्वं प्रतिष्ठितम् ॥८॥
तस्य मध्ये महाग्निर्विश्वार्चिर्विश्वतोमुखः ॥
सोऽग्रभुग्विभजन् तिष्ठन्नाहारमजरः कविः ॥९॥
सन्तापयति स्वं देहमापादतलमस्तकम् ॥
तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थिता ॥१०॥
नीलतो यदमध्यस्था विद्युल्लेखेव भास्वरा ॥
नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा ॥११॥
तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः ॥
स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमस्वराट् ॥१२॥
ऋतं सत्यं परब्रह्म पुरुषं कृष्णपिङ्गलम् ॥
ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः ॥१३॥
ओं नारायणाय विद्महे वासुदेवाय धीमहि ॥
तन्नो विष्णुः प्रचोदयात् ॥१४॥

षडक्षोपनिषन्मन्त्राः—

ओं षां नमः पराय परमेष्ठ्यात्मने नमः ॥१॥

ओं यां नमः पराय पुरुषात्मने नमः ॥२॥
ओं रां नमः पराय विश्वात्मने नमः ॥३॥
ओं वां नमः पराय निवृत्यात्मने नमः ॥४॥
ओं लां नमः पराय सर्वात्मने नमः ॥५॥

भूसूक्तम्—

भूमिर्भूम्ना द्यौर्वरिणान्तरिक्षं महित्वा ॥
उपस्थे ते देव्यदिते ऽग्निमन्नादमन्नाद्यायादधे ॥१॥
आयं गौः पृश्निरक्रमीदसदन्मातरं पुनः ॥ पितरञ्च
प्रियन्त्सुवः ॥२॥ त्रिंशद्धाम विराजति वाक् पतङ्गाय
शिश्रिये ॥ प्रत्यस्य वहद्युभिः ॥३॥ अस्य प्राणाद-
पानन्त्यन्तश्चरति रोचना ॥ व्यख्यन्महिषः सुवः ॥४॥
यत्वा क्रुद्धः परो वप मन्युना यदवत्या ॥
सुकल्पमग्नेतत्तव पुनस्त्वो द्दीपयामसि ॥५॥
यत्ते मन्यु परोप्तस्य पृथिवी मनुदध्वसे ॥
आदित्या विश्वे तद्देवा वसवश्च समाभरन् ॥६॥
मेदिनी देवी वसुन्धरा स्याद्वसुधा देवी वासवी ॥
ब्रह्मवर्चसः पितृणां श्रोत्रं चक्षुर्मनः ॥७॥
देवी हिरण्यगर्भिणी देवीप्रसूवरी रसने
सत्यायने सीद ॥८॥
समुद्रवती सावित्री ह्नो देवी मह्यवी मही ॥
धरणिमहो व्यधिष्ठा शृङ्गे यज्ञे यज्ञे विभीषणी ॥९॥

तत्काले निमित्तानि परीक्षेत । आचार्यस्य मनस्तुष्टिः मन्दिरयजमानयोः शर्मणे भवेत् । तद्विपर्ययश्च असुखाय । अनडुहोः शयने, योक्त्रादिभेदने, व्यत्यासभ्रमणे, अन्यनिमित्तोदये च सर्वदोषशान्त्यर्थं पञ्चोपनिषदा सर्पिषा शतम् आहुतीः जुहुयात् ।

ततः आचार्यः यजमानश्च ब्राह्मणान् तोषयित्वा, तां भुवं महता यत्नेन समीकृत्य, पृथक् पृथक् आलवालानि जलकुल्यायुतानि कारयित्वा, तोयेन आसिच्य, तत्र शालिमुद्गयवादिबीजानि वापयेत् ।

तदभिवृद्ध्यर्थं प्रतिदिनम् महता जलेन संसिच्य परिपाकावसानिकं रक्षेत् ।

ततः फलानि पक्वानि लूत्वा, फलरहितम् क्षेत्रम् गाः समानीय चारयेत् ।

---

इन्द्रपत्नी व्यापिनी सुरसरीरिह वायुमती जलशायनी ।।
श्रियन्धा राजा सत्यन्धोपरि मेदिनी श्वोपरिधत्त
गायत्री ।।१०।।

विष्णुपत्नीं क्षमां देवीं माधवीं माधवप्रियाम् ।।
लक्ष्मीं प्रियसखीन्देवीं नमाम्यच्युतवल्लभाम् ।।११।।
ओं धनुर्धरायै विद्महे सर्वसिध्यै च धीमहि ।।
तन्नोधरा प्रचोदयात् ।।१२।।

ओं शान्तिः शान्तिः शान्तिः ।

सस्ये भूरिफले, तद्धाम दीर्घकालं भविष्यति; अल्पे तु अल्पतरं कालम् । हरेः सन्निधानं च पूर्ववदेव । फलहीने क्षीणधनधान्यकम् ।

तत्र सहस्रं शतं वा ब्राह्मणान् भोजयित्वा तेभ्यश्च गोधनादिदक्षिणां वितीर्य, पञ्चगव्येन पञ्चोपनिषदा तत् क्षेत्रं संप्रोक्ष्य, कुद्दालैः खनित्रैः वा, यावदंभः तावत् भूमिं खनेत् ।

यावत् प्रथमावरणविस्तारः तावत् दण्डमात्रम् वा क्षेत्रदोषानुरूप्येण, मन्दिरोच्छ्रायानुगुण्येन वा, भूतले खन्यमाने; भस्माङ्गारतुषदुष्टसत्त्वकृमिकीटादिदर्शने घृतादिना शान्तिहोमं कृत्वा; ब्राह्मणेभ्यः यथाशक्ति सुवर्णादिदक्षिणां दद्यात् । रत्नादिदर्शने धाम सदा समृद्धं भवेत् ।

खातात् बहिः चतुरश्रे स्थण्डिले अग्निं प्रतिष्ठाप्य, मूलमन्त्रेण आज्येन नृसूक्तेन चरुणा गुग्गुलुतिलनीवारैः मूलमन्त्रेण च खातहोमं कृत्वा पुण्याहं[1] वाचयित्वा प्रोक्ष्य शालीन् खाते प्रक्षिप्य,

---

१–पुण्याहवाचनम्—पुण्याहं स्वस्ति ऋद्धिमित्योङ्कार पूर्वं त्रिस्त्रिरेकैकमाशिषःवाचयेत् इतिबोधायनः ।

सुवर्णादि कलश को रक्तासूत्र से वेष्टन कर ।

ओं ब्रह्मयज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः । सबुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च

न्विवः ॥ अनेन मन्त्रेण सप्तधान्योपरि कलशं स्थापयित्वा ओं आपो वा इद ठं सर्वं विश्वा भूतान्यापः प्राणा वा आपः पशव आपोऽमृतमापो ऽन्नमापः सम्राडापो विराडापः स्वराडापः छन्दांस्यापो ज्योति ठं ष्यापः सत्यमापः सर्वा देवता आपः ओं भूर्भुवः स्वरोम् ॥ अनेन मन्त्रेण सुगन्धितजलं प्रपूर्य ।

ओं श्रीमते नारायणाय नमः ओँ श्रियै नमः

इस मन्त्र से पञ्चरत्न छोड़कर तुलसीदल, पूगीफल, सर्वौषधि मूलमन्त्र से छोड़कर २१ इक्कीस कुशा का कूर्च बनाकर—

कूर्चाग्ररात्तसान् घोरान् छिन्धि कर्मविघातिनः ।
त्वामर्पयामि कुम्भेऽस्मिन् साफल्यं कुरु कर्मणि ॥

इस मन्त्र से कुर्च को कुम्भ में छोड़ देवे—

वृक्षराजसमुद्भूता शाखायाः पल्लवस्त्वचः ।
युस्मान् कुम्भेष्वर्पयामि सर्वपापापनुत्तये ॥

इस मन्त्र से पञ्चपल्लव छोड़े—

नारिकेल समुद्भूत त्रिनेत्र हर सम्भव ।
शिखया दुरितं सर्वं पापं पीडाञ्च मे नुद ॥

इस मन्त्र से उर्ध्व शिखा नारियल रखकर—

वस्त्रेणाच्छाद्य—श्रीभगवदाज्ञया भगवत्कैङ्कर्यार्थं, आत्मशुद्ध्यर्थं, स्थलशुद्ध्यर्थं, सर्वोपकरणशुध्यर्थंश्चामुकमाङ्गभूतं पुण्याहं वाचयिष्ये इतिं सङ्कल्प्य"

दो या चार या इससे भी अधिक सम संख्यक श्रीवैष्णव ब्राह्मण जल, गन्ध, पुष्प, अक्षत, ताम्बूल, पूगीफल और दक्षिणा देकर अंजली बांधकर निम्नलिखित वचनों को बोले—

भो श्री वैष्णवा अस्मिन् पुण्याहे मनः समाधीयताम्, इति सम्प्रार्थ्य समहित मनसः स्म

यह श्रीवैष्णव बोले पुनः यजमान बोले...

भो श्री वैष्णवाः प्रसीदन्तु भवन्तः ते ब्रूयुः प्रसन्नाः स्मः ; भवद्भिरनुज्ञातः पुण्याहं वाचयिष्ये' वाच्यताम्।

कलश के नीचे सव्य हाथ लगाकर दक्षिण' हाथ से ढांक कर यह बचन बोले—

भो श्री वैष्णवाः मया क्रियमाणस्य अमुक कर्मणः पुण्याहं भवन्तो ब्रुवन्तु।

इसको स्वयं बोले पुनः श्रीवैष्णवाः पुण्याहम् ३ ऐसा तीन बार बोले अनन्तर यजमान बोले—

भो श्रीवैष्णवाः मया क्रियमाणस्य अमुककर्मणः कल्याणं भवन्तो ब्रुवन्तु। तब वे ब्राह्मण तीन बार पुनः बोले—

कल्याणं कल्याणं कल्याणमस्तु। पुनः यजमानः—

भो श्रीवैष्णवाः मया क्रियमाणस्य अमुककर्मणः ऋद्धिं भवन्तो ब्रुवन्तु। ते श्रीवैष्णवा ब्रुवुः – कर्म ऋद्धयताम् ३। पुनः यजमानः — भो श्रीवैष्णवाः मया क्रियमाणस्य अमुककर्मणे स्वस्ति भवन्तो ब्रुवन्तु। पुनस्ते त्रिवारं ब्रूयुः स्वस्ति रस्तु ३।

इस प्रकार वाक्य योजना होने पर कुम्भ को पृथ्वी में धर देवे। अनन्तर—

पुण्याहं समृद्धिरस्तु, शिवं कर्मास्तु, प्रजापतिः प्रीयताम् इति भवन्तो ब्रुवन्तु, इति सम्प्रार्थ्य प्रीयतां भगवान् प्रजापतिरिति प्रति ब्रूयुः।

पुनः कुर्च तथा पंचपल्लवों से मृदादि किसी एक पात्र में नीचे लिखे वचनों को आचार्य बोलता भया थोड़ा थोड़ा जल गिरावे।

ओं शान्तिरस्तु, पुष्टिरस्तु, तुष्टिरस्तु ऋद्धिरस्तु, अविघ्नमस्तु, आयुष्यमस्तु, आरोग्यमस्तु,धनधान्य समृद्धिरस्तु, गोब्राह्मणेभ्यः शुभं भवतु।

फिर दूसरे पात्र में—

ईशान्यां वहिर्देशे अरिष्टनिरसनमस्तु, दक्षिणस्यां यत्पापं तत्प्रतिहतमस्तु।

पुनः प्रथम पात्र में—

उत्तरे कर्मण्यविघ्नमस्तु, उत्तरोत्तराभिवृद्धिरस्तु, सर्वशोभनमस्तु, सर्वाः सम्पदः सन्तु। ओं शुभानि वर्द्धन्ताम्, ओं शान्तिः शान्तिः — इति सर्वे ब्रूयुः।

फिर उसी पात्र के जल को कुम्भ में छोड़ देवे और निम्न वाक्य को बोले—

अस्मिन् कुम्भे वरुणरूपिणं भगवन्तमावाहयिष्ये। इमम्मे वरुण श्रुधी हवमद्या च मृडय। त्वामवस्युराचके॥

तदुपरि वस्त्रसूत्रादिवेष्टितान् लोहमयान् मृण्मयान् वा कुंभान् नव संस्थाप्य, आधारशक्तिं सौवर्णीं मध्यकुंभे निक्षिप्य, प्राच्यां बीजानि आग्नेय्यां सर्वलोहानि दक्षिणे सर्वधातून्, नैरृते पुण्यतीर्थमृदम्, वारुणे मधु, वायवीये सर्पिः, उत्तरस्यां दिशि रत्नानि, ऐशाने शैलमृत्तिकां च निक्षिप्य, पुनश्च मध्ये शालिक्षेत्रमृदम् आशोष्य ह्रदसंभूतं मृदम् वल्मीकमृदम् उत्पलकन्दानि च प्राङ्मुखः स्थित्वा निक्षिप्य, तत्र लोहानि रत्नानि दर्भकूर्चं च निक्षिप्य शरावेण पिधाय,

मध्यकुंभस्य उपरि अन्यं कुंभं निधाय, तस्मिन् सौवर्णम् कूर्मकालाग्निं निक्षिप्य, तस्य उपरि कुंभम् अन्यं निधाय, तस्मिन् सौवर्णीं अनन्तप्रकृतिम् निक्षिप्य, तदुपरि च अन्यं कुंभं तस्मिन् सौवर्णीं वसुधां तदुपरि च अन्यं कुंभं तस्मिन् सौवर्णं अम्बुजं च निक्षिप्य सर्वान् गन्धोदकेन संपूर्य, पुण्याभिः खातमृद्भिः अदुष्टाभिः वालुकाभिश्च पूरयित्वा, जलैः खातभूतलं सम्पूर्य हस्तिपादैः दृढीकृत्य पुनः जलेन परिपूरयेत् ।

---

इस मन्त्र से वरुण देव का आवाहन कर पुनः "ओं श्रीमते वरुणाय नमः" षोडशोपचार पूजन कर सम्पूर्ण वस्तु का प्रोक्षण करे ।

इति पुण्याहवाचन प्रयोगः ।

इति श्रीवराहगुरुणा विरचितायाम्
क्रियाकैरवचन्द्रिकायाम् कर्षणविधिर्नाम
द्वितीयः परिच्छेदः

---

## अथ तृतीयः परिच्छेदः

# "बालालयप्रतिष्ठा

अथ बालालयप्रतिष्ठाविधिः उच्यते—

आरम्यमाणप्रसादस्य इन्द्रेशानांतरे सोमेशयोः इन्द्राग्न्योः अग्नियमयोः यमनिऋत्योः निऋतिवरुणयोः वरुणवाय्वोः वायुसोमयोः वा अन्तरे स्वाभिमते देशे बालालयम् प्रकल्पयेत्। तत्र सप्तभिः पञ्चभिः त्रिभिः वा हस्तैः बालालयं कल्पयेत् ।

मूलमन्दिरस्य वलजं यस्यां दिशि तस्यामेव बालालयस्यापि विदध्यात् ।

लोहजं शैलजं दारुजं वा चतुर्भुजं शङ्खचक्रगदापद्मधरं उत्सेधतो ह्रासे पञ्चाङ्गुलं वृद्धौ त्रयोविंशत्यङ्गुलं यजमानसुखावहमानानुगुणं वा बालबिम्बं कार्यम् ।

मूलालयस्थाप्येषु मत्स्याद्यवतारेषु बालबिम्बं च तथारूपं, विश्वरूपे तु चतुर्भुजं, स्थित्यासनशयनेषु च तथैव ( स्थित्यासनशयनरूपं ) बालबिंबं कारयित्वा, तदङ्कुरार्पणपूर्वकं जले अधिवास्य यागमण्डपे शयने च अधिवास्य कुंभस्थापनाधिवासहोमादि कृत्वा, 'बालगेहस्य मध्ये दिव्यंशे वा हस्तमात्रसमुच्छ्रितां मेखलात्रययुतां वेदिकां कल्पयित्वा प्रभाते सुमुहूर्ते शक्तिन्यासचतुर्थस्नपनवर्जं तस्यां देवं मूलमन्त्रेण यथाविधि संस्थाप्य संप्रोक्ष्य मन्त्रान् विन्यस्य संपूजयेत । ततः,

"आमूलधामप्रारंभात् आसमाप्तेः हरे विभो ।
पूजां गृह्णीष्व भगवन् अस्मिन् त्वं बालमन्दिरे ॥
शमयन् मूलधिष्ण्यस्य विघ्नकृद्दैत्यसंहितम् ।"

इति मन्त्रेण प्रार्थ्य विज्ञाप्य प्रणम्य, चण्डप्रचण्डक्षेत्रपालखगेशान् द्वारे इन्द्रादिलोकपालान् तत्तद्दिक्षु ईशानभागे सेनेशं नैरृते गणेशं च अशरीरिणः सर्वान् एतान् बालमन्दिरस्य परितः हस्तमात्रासु मेखलात्रययुतासु वृत्तासु चतुरश्रासु वा वेदिकासु स्थण्डिले वा तादृशे संपूज्य सर्वान् कुमुदादिगणान् महापीठे अभ्यर्च्य गुरुः एवं बालालयं प्रतिष्ठाप्य, अन्ते ध्वजारोहणपूर्वकं पुष्पयागावसानिकं उत्सवं अथवा एकाहोत्सवं कुर्यात् ।

बालबिम्बं लोहजं चेत् तेनैव सकलं नित्यादि कर्म कुर्यात् । उत्सवार्थं न चेत् बिम्बम् , बालेनैव कुर्यात् ।

बालबिम्बं शिलादारुमयं चेत्, दारुसंग्रहशिलासंग्रहपूर्वकं बालबिम्बं प्रतिष्ठापयेत्।

**आलयनिर्माणविधिः —**

पश्चात् रथकारः स्थपतिभिः सह मन्दिरनिर्माणमारभेत ।

तत्र मुख्यमध्यमाधमसञ्चितासञ्चितोपसञ्चितकल्पनभेदं शिलेष्टकादार्वादिषु गर्भादिदोषलक्षणानि देवतान्तरालयगतत्वादिदोषान् च सम्यक् ज्ञात्वा मूलमन्दिरं कल्पयेत्।

खातभूतले जलेन समतां वीक्ष्य प्रकृतिं क्षितौ विन्यस्य शास्त्रचक्षुषा प्रथमां फलकामादाय; सुधया तां दृढीकृत्य जलेन समतां वीक्ष्य तस्योपरि उपपीठं तदुपरि अधिष्ठानं उपपीठेन विना अधिष्ठानं वा परिकल्प्य उपानहं कल्पयित्वा अधिष्ठानं वा यद्वा पूर्वमधिष्ठानं तदुपरि उपानहं तदुपरि पादं ततः प्रस्तरं पश्चात् ग्रीवां तदनु शिखरं एवं यथाक्रमं एकतलकल्पेन यावत्स्थूपि एवं कुर्यात्।

द्वितलकल्पेन तु अधिष्ठानचरणप्रस्तरकूटशालासंस्थानपञ्जरप्रस्तरवेदिकाग्रीवाशिखराणि एवं क्रमेण त्रितलादि आद्वादशतलमेवमेव । ततः अधिकेषु उपानजगतीकुमुदपट्टिका-कण्ठपट्टिका-महतीपट्टिका-वाजनवेदिका चरणतलोत्तरहंसमालाकपोतप्रतिप्रतिवेदिकाकण्ठशिखराणि इति एवं अष्टाद-

शाङ्कुकल्पनमिति यावत्स्थूपि यजमानानुगुण्येन वा कुर्यात् । पूर्वमेवं सर्वं यथाविधि पटादौ निर्माय अनन्तरं मन्दिर-निर्माणं च कुर्यात् ।

इति श्रीवराहगुरुविरचितायां
क्रियाकैरवचन्द्रिकायां
बालालयप्रतिष्ठाविधिः नाम तृतीयः परिच्छेदः ।

अथ चतुर्थः परिच्छेदः

# प्रथमेष्टकाविधिः

अथ प्रथमेष्टकाविधिः उच्यते—

आदौ तावत् आचार्यः शास्त्रोक्तवर्त्मना प्राचीं परीक्ष्य प्राच्यदिग्विभागेन द्वारादिं कल्पयित्वा चतुर्विंशाङ्गुलायतं द्वादशाङ्गुलायतं वा अङ्गुष्ठपरिणाहं शुभं ऋजुं क्षीरवृक्षजं शङ्कुं समानीय प्रासादस्थानमध्यभागे मूलमन्त्रेण[1] संस्था-

1. टि० ओं नमो नारायणाय ।

प्य शङ्कुद्विगुणमानेन परितः मण्डलं आलिख्य मण्डलान्ते पूर्वापराह्णयोः छायामालोक्य छायान्तमण्डलान्ते पूर्वतः पश्चिमतः बिन्दुद्वयं विलिख्य तयोः मध्यतः पूर्वबिन्दुमारभ्य अपरबिन्दुपर्यन्तं सूत्रमापात्य तयोरन्तरं यथा कच्छपाननपुच्छवत् भवेत् तथा विधाय तदन्वेवमेव उत्तरतः दक्षिणतश्च कृत्वा एवं चतसृषु दिक्षु च त्रिपञ्चसप्तहस्तं यथाभिमतं अधिकं वा सूत्र निपात्य दिक्सूत्रभ्रमणेनैव यथा चतुरश्रं भवेत् तथा समालिख्य दिक्षु अष्टासु यथान्यायं शङ्कून् संस्थापयेत् ।

शङ्कुस्थापनवेलायां निमित्तानि परीक्षेत । शुभानि चेत् शुभं फलम् । विपरीतानि चेत् शान्तिमाचरयेत् ।

स्थितासनशयनयानविश्वरूपबिंबानुगुण्येन चतुरश्रवृत्तवृत्तायतचतुरश्रायतभेदान् ज्ञात्वा यजमानः भुक्तिकामश्चे १ युग्मैः हस्तैः, मोक्षार्थी यदि अयुग्मैः एकहस्तमारभ्य दशहस्तपर्यन्तं यथाभिमतं प्रासादं द्वादशतलान्तं यथावित्तानुसारतः मानयित्वा तत्र विमानं च निर्माय प्रथमेष्टकां आरभेत ।

इष्टका शिलाकाष्ठमृण्मयभेदेन त्रिविधा । विमाने शैलजे शिलया, काष्ठजे काष्ठेन, पक्वेष्टकामये सुपक्वेष्टकया आमेष्टकामये च आमेष्टकया, शैलेष्टकामये शिलाकाष्ठमये च शिलया, इष्टकाकाष्ठमये [धाम्नीष्ठकया च प्रथमेष्टका कार्या ।

प्रतिमार्थशिलासंग्रहकल्पेन शिलां संगृह्य तासु पुंलिङ्गादिपरीक्षां कृत्वा पुंलिङ्गशिलया पादादिस्थूप्यन्तं, स्त्रीशिलया प्रथमेष्टकां, नपुंसकशिलया मूर्धेष्टकां च कुर्यात्।

दार्विष्टकाः अपि प्रतिमादारुसंग्रहवत् ग्राह्याः। विपरीतकरणे महान् दोषः। राजराष्ट्रक्षयश्च।

छेदे कांस्यघण्टाध्वनिः मूर्ध्नि, मध्ये कांस्यसध्वनिः, मूले तालध्वनिः यस्यां सा पुंशिला। तस्मात् किंचिदूनध्वनिः स्त्रीशिला। नादहीना नपुंसकशिला भवति।

अथ मृण्मयेष्टकाविधिः—

पूर्वमाचार्यः रथकारनिर्दिष्टं देशं समासाद्य, तत्र पुण्याहपूर्वकं अग्निं प्रतिष्ठाप्य, ज्वलिते अस्मिन् मूलमन्त्रेण अष्टोत्तरशताहुतीः आज्येन चरुणा पुरुषसूक्तेन षोडशाहुतीः समिद्भिः अष्टोत्तरशतसंख्यकाभिः भूयोऽपि च मूलमन्त्रेण हुत्वा चरुणा विष्णुपारिषदान् उद्दिश्य, क्षेत्रपालाय भूतेभ्यः वास्तुनाथाय देवेभ्यः ऋषिभ्यः देवगणाय' इति च आज्येन स्वाहान्ताभिः भूरादिसमव्याहृतिभिश्च हुत्वा, पूर्णाहुतिं च हुत्वा, पूर्वादिषु चतसृषु दिक्षु, 'विष्णुपार्षदेभ्यः सर्वभूतेभ्यः वास्तुनाथाय क्षेत्रपालाय' इति नमोन्तैः एतैः मन्त्रैः चरुणा बलिं च कृत्वा, अग्निमुद्वास्य, कुलालेन इष्टकाः कारयेत्।

तास्वपि च ऋजुः अयुग्मा रेखा यस्यां सा पुरुषेष्टका प्रथमा। तिरश्चीना युग्मा रेखा यस्यां सा स्त्रीष्टका द्वितीया। नीरेखा पार्श्वयोः वक्ररेखा वा नपुंसकेष्टका तृतीया। प्रासादादि

करणे प्रथमा। पीठादिकरणे द्वितीया। प्रासादगर्भाधानादि करणे तृतीया। तदायामस्तु हस्तमानः चेत् उत्तमः। अष्टादशाङ्गुलायामः मध्यमः; षोडशाङ्गुलायामः अधमः। आयामार्धेन विस्तारः; विस्तारार्धेन घनम्। आयामसमविस्तारा स्यात् आच्छादनकेष्टका। इदं महामानम् प्रासादतुल्यः विस्तारः, तद्द्विगुणः आयामः इदं अल्पमानम्।

एवमिष्टकाः कारयित्वा ताः पक्वाः शुभाः दृढाः संपादयेत्। देवालये चतस्रः प्रथमेष्टकाः, मनुष्यालये पञ्च पक्वेष्टकामये धाम्नि पक्वा प्रथमेष्टका इत्यादि वेद्यम्। ततः मण्डपं प्रपां वा कल्पयित्वा वितानादिभिः अलङ्कृत्य तन्मध्ये सप्ततालायतां हस्तमात्रसमुच्छ्रितां वेदिकां कल्पयित्वा मृत्संग्रहणपूर्वकं अङ्कुरान् अर्पयित्वा ततः वेदिकामध्ये शालीनां भारचतुष्टयेन तदुपरि तदर्धेन तण्डुलानां तस्योपरि तदर्धेन तिलानां स्थण्डिलं कृत्वा अन्तरान्तरयोगेन आहतैः वासोभिः आच्छाद्य तदुपरि सलक्षणान् सूत्रवस्त्रादिवेष्टितान् सरत्नहेमकूर्चपिप्पलदलान् कुंभान् नव विन्यस्य, तद्वेदिकोत्तरभागे पूर्ववत् धान्यपीठं परिकल्प्य, इष्टकाधिवासार्थं दर्भानास्तीर्य, पुण्याहं वाचयित्वा प्रोक्ष्य, स्नपनार्थं पूर्वोक्तलक्षणयुक्तान् नव कलशान् धान्यपीठे संस्थाप्य, ब्रह्मादि ईशानान्तं घृतक्षीरदधिगुडपञ्चगव्य फलरसगन्धलोहमधुभिः संपूर्य, वस्त्रेण आवेष्ट्य, क्रमेण परवासुदेवपुरुषसत्याच्युतानन्तकेशवनारायणमाधवगोविन्दान् आवाह्य अभ्यर्च्य, चतस्रः स्त्रीलिङ्गेष्टकाः समादाय, पुण्याहपुरस्सरं

वासुदेवादीन् आवाह्य अभ्यर्च्य, पीठे संस्थाप्य, पयोव्रतसाम्ना पयसा, मधुवातेति गुडेन, याःफलिनीरिति[१] फलवारिणा, हिरण्यगर्भमन्त्रेण[२] लोहवारिणा, दधिक्राविण्णेति[३] दध्ना, पञ्चवारुणिकेनेति[४] पञ्चगव्येन,

---

१ टि० याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः। बृहस्पति प्रसूतास्तानो मुञ्चन्त्वठं हसः॥

२ हिरण्य गर्भः सम वर्त्तताग्रे भूतस्य यातः पतिरेक आसीत्। सदाधार पृथ्वीं द्यामुतेमाङ्कस्मै देवाय हविषा विधेम॥

३ दधि क्राव्णोऽअकारिषञ्जिष्णोरश्वस्य वाजिनः सुरभिनो मुखा करत्प्रण आयू ठं षिता रिषत्।

४ पञ्चवारुणिकमन्त्राः—

(१) इमम्मे वरुण श्रुधी हवमद्या च मृडय। त्वामवस्युराचके॥

(२) तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः अहेडमानो वरुणेह बोध्युरुशठं समान आयुः प्रमोषीः॥

(३) त्वन्नोऽअग्ने वरुणस्य विद्वान् देवस्य हेडो अवया सिसीष्ठाः। यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषा ठं सि प्रमुमुग्ध्यस्मत्॥

(४) स त्वं नो अग्नेऽवमो भवोती ने दिष्ठो अस्या उषसो व्युष्टौ। अवयद्व नो वरुण ठं रराणो वीहि मृडीक ठं सुहवो न एधि॥

(५) त्वमग्ने अयासि०

गन्धद्वारेति[१] गन्धांबुना, मधुवातेति[२] मधुना, घृतस्नातेति[३] साम्ना घृतेन च अभिषिच्य पृथक् पृथक् इष्टकाः सदर्भेण वस्त्रयुग्मेन संवेष्ट्य, पुण्याहं वाचयित्वा प्रोक्ष्य, इष्टकाः शयने अधिवास्य, पूर्वादिद्वारेषु तोरणकुंभान् संस्थाप्य, तत्तद्दैवतानि आवाह्य अभ्यर्च्य, पूर्वस्थापितमध्यकुंभे परमात्मानं उपकुंभाष्टके विष्ण्वादीन् आवाह्य अभ्यर्च्य, पायसगुडोदनानि निवेद्य, तस्य पूर्वे उत्तरे वा कुण्डे स्थण्डिले वा अग्निमानीय, समिदाज्यचरुभिः यथाविधि च पुनः समिदाज्य-तिलपुष्पैः पृथक् अष्टोत्तरशताहुतीः च नृसूक्तेन[४] चरुणा च हुत्वा, संपाताज्यं पात्रान्तरे संगृह्य; तेन इष्टकाः स्पर्शमन्त्रेण[५] संस्पृशेत् ।

## "प्रतिसरः"

अथ 'प्रतिसरबन्धकर्म करिष्ये' इति संकल्प्य, प्रतिसरं पुण्याहजलेन प्रोक्ष्य, हेममयैः कार्पासादिमयैः वा प्रतिसरैः

---

१ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्व-भूतानां तामिहोपह्वये श्रियम् ॥

२ मधुव्वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ॥

३ घृत स्नातेति साम्ना ।

४ सहस्र शीर्षेति षोडश मन्त्रैः ।

५ इदम्विष्णु र्विचक्रमे त्रेधा निदधे पदम् समूढमस्य पांसुरे ॥

अस्त्रमन्त्रेण[१] संबध्य, 'ओं ह्रीं स्वं स्वप्नाधिपतये स्वाहा' इति मन्त्रेण सर्पिषा अष्टोत्तरशताहुतीः हुत्वा, ततः आचार्यः यजमानेन सह दर्भशय्यायां स्वप्नार्थं शयीत । स्वप्ने शुभे शुभं फलम् । अशुभे शान्तिहोमं कृत्वा विभातायां विभावर्यां शुभे मुहूर्ते ऋत्विग्भिः सह इष्टकाः समादाय, धाम प्रदक्षिणीकृत्य अन्तः प्रविश्य, क्लृप्तद्वारदेशस्य दक्षिणतः पादमूले वेदघोषैः वाद्यघोषैः च सह निक्षिपेत् । प्रादक्षिण्येन इन्द्रादिसोमान्तं इष्टकाः मूलमन्त्रेण[२], श्रियः मन्दिरे श्रीसूक्तेन[३] निदध्यात् ।

---

३ ओं नमो अस्त्राय फट् ॥

४ ओं नमो नारायणाय ।

## ३ श्रीसूक्तम्—

ओं हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजां । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१॥ तां म आ वह जातवेदो लक्ष्मीमनपगामिनीम् । यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥२॥ अश्वपूर्वां रथमध्यां हस्तिनादप्रमोदिनीम् । श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् ॥३॥ कांसोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् । पद्मे स्थितां पद्मवर्णां तामिहोप ह्वये श्रियम् ॥४॥ चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् । तां पद्मनेमिंशरणमहं प्रपद्ये अलक्ष्मीर्मे नश्यतां त्वां वृणे ॥५॥ आदित्यवर्णे

तपसोऽधि ज्ञातो वनस्पतिस्तव वृक्षोऽथ बिल्वः। तस्य फलानि तपसा नुदन्तु या अन्तरा याश्च बाह्या अलक्ष्मीः ॥६॥ उपैतु मां देवसखः कीर्तिश्च मणिना सह। प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे ॥७॥ क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम्। अभूतिमसमृद्धिञ्च सर्वान्निर्णुद मे गृहात् ॥८॥ गन्ध द्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥९॥ मनसः काममाकूतिं वाचः सत्यमसीमहि। पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥१०॥ कर्दमेन प्रजाभूता मयि संभव कर्दम श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥११॥ आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे। नि च देवीं मातरं श्रियं वासय मे कुले ॥१२॥ आर्द्रां पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम्। चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१३॥ आर्द्रां यः करिणीं यष्टिं सुवर्णां हेममालिनीम्। सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१४॥ तां म आ वह जातवेदो लक्ष्मीमनपगामिनीम्। यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान् विन्देयं पुरुषानहम् ॥१५॥ यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम्। सूक्तं पञ्चदशर्चञ्च श्रीकामः सततं जपेत्।

दक्षिणपश्चिमयोः मूलं पूर्वोत्तरयोः अग्रं च कुर्यात्। उपानत् विषमो यथा न भवेत् तथा निदध्यात्। सर्वं कर्म पुण्याहपुरस्सरं विदध्यात्। तदा यजमानः गुरवे वस्त्राभरणपूर्वां शतनिष्कपरिमितां दक्षिणां तदर्धं ऋत्विग्भ्यः तदर्धं परिचारकेभ्यश्च दद्यात्।

इति श्रीवराहगुरुविरचितायां
क्रियाकैरवचन्द्रिकायां प्रथमेष्टकाविधिर्नाम
चतुर्थः परिच्छेदः



## पञ्चमः परिच्छेदः

# गर्भन्यासः

अथ गर्भन्यासविधिः उच्यते—

पूर्ववत् समध्यवेदिकं मण्डपं कल्पयित्वा, मध्यवेदिकां गोमयेन उपलिप्य, तस्यां भारचतुष्टयपरिमितया व्रीह्या तदुपरि तदर्धेन तण्डुलेन तदुपरि तदर्धेन तिलेन च अन्तरान्तरयोगेन वस्त्राच्छादनसहितं स्थण्डिलं कृत्वा, मध्ये वस्त्ररत्नलोहकूर्चपिप्पलदलपिधानं महाकुम्भं परितः ताम्रजान् अष्टौ कुम्भान् च संस्थाप्य, गन्धोदकैः आपूर्य, मध्यकुम्भे शङ्खचक्रगदाखड्गशार्ङ्गमुसलानि सौवर्णानि निक्षिप्य, तस्मिन्, 'ओं ह्रीं वसुधायै नमः आगच्छ आगच्छ' इति वसुधां

आवाह्य, गन्धादिभिः अभ्यर्च्य; कुम्भेषु अष्टसु च इन्द्रादीनावाह्य अभ्यर्च्य पर्वतह्रदपुण्यतीर्थवल्मीककर्कटाशयननदीवृषवृषाणाग्रदन्तिदन्तपयोनिधिहलसंस्थिताः मृत्तिकाः दश च कुमुदारविन्दकशेरूत्पलनीलोत्पलानां पञ्च कन्दान् मनश्शिलाहरितालाञ्जनश्यामसीससौराष्ट्ररोचनागैरिकपारदान् सप्त धातून्, वज्रवैदूर्यमौक्तिकस्फटिकपुष्यरागचन्द्रकान्तमहानीलपद्मरागशङ्खाभिधानानि नव रत्नानि, शालिनीवारकङ्कुप्रियङ्गुतिलमाषमुद्गयववैणवानि नव बीजानि, हिरण्यरजतताम्रायसत्रपुसीससौवर्णकूर्मशङ्खचक्राणि नवैतानि च संगृह्णीयात्।

सौवर्णं राजतं ताम्रमायसं वा गर्भपात्रं अलाभे दारुजं वा षोडशाङ्गुलायतं द्वादशाष्टचतुरङ्गुलान्यतमविस्तारं तदर्धोच्छ्रायं पादचतुष्टयेन उपेतं तत्त्रितयेन वा सापिधानं वृत्तं चतुरश्रं वा तन्मध्यगर्तानां षोडशभिः नवभिर्वा सहितं कारयित्वा पुण्याहं वाचयित्वा प्रोक्ष्य; पञ्चगव्येन प्रक्षाल्य; वेदिकासंस्थितनवकुम्भजलैः वेदादिना अभिषिच्य, तस्यामेव वेदिकायां पूर्ववत् स्थण्डिलं कल्पयित्वा, सदर्भवस्त्रेण तद्भाजनं आवेष्ट्य वेदिकामध्ये निदध्यात्।

षोडशसु तद्गर्तेषु सुवर्णादीनि समुद्रमृदन्तानि द्रव्याणि, तदभावे केवलं सुवर्णं वा विन्यसेत्। नवगर्तविधाने तु नवसु गर्तेषु च सामुद्रिकमृदं पूर्वं आपात्य, प्राचीनगर्ते पर्वतमृदुत्पल-

---

पुण्याहवाचन १५ पृ० में देखिये।

कन्दमनशिलावज्रशालिहिरण्यानि, दक्षिणे तीर्थमृत्कुमुदकन्दहरितालवैदूर्यनीवाररजतानि, पश्चिमे नदीमृत्मरतकनीलोत्पलकन्दाञ्जनकङ्कुताम्राणि, उत्तरे ह्रदमृत्वशेरुकन्दश्यामधुण्यरागप्रियङ्गु-अयांसि, आग्नेये कुलीराशयमृत्सीसस्फटिकमाषत्रपूणि, नैऋते वल्मीकमृत्सौराष्ट्र मौक्तिकतिलकांस्यानि, मारुते हलमृत्तिकारोचनाचन्द्रकान्तमुद्गसौवर्णकूर्मप्रतिकृतीः ऐशाने दन्तिदन्तमृत्तिकामहानीलगैरिकवेणुधान्यसौवर्णशङ्खान्, ब्रह्मपदे वृषविषाणाग्रमृत्तिकापद्मकन्दपद्मरागपारदयवसौवर्णचक्राणि च मूलमन्त्रेण विन्यस्य, तत्पात्रं विष्णुगायत्र्या[1] अभ्यर्च्य, कुण्डे स्थण्डिले वा अग्निं विधिवत् उपसमिध्य, समिद्भिः सर्पिषा च विष्णुषडक्षरेण अष्टोत्तरशताहुतीः हुत्वा पात्रान्तरे संपाताज्यं संगृह्य चरुणा नृसूक्तेन[2] षोडशाहुतीः हुत्वा, अनन्तरं तिलाज्यमिश्रचरुणा, 'इन्द्रादिलोकपालेभ्यः भुवनेभ्यः पर्वतेभ्यः समुद्रेभ्यः आदित्येभ्यः वसुभ्यः मरुद्भ्यः ऋषिभ्यः वेदेभ्यः सर्वशास्त्रेभ्यः पुराणेभ्यः पातालेभ्यः दिग्भ्यः नागेभ्यः गणेभ्यः सर्वभूतेभ्यः नरेन्द्रेभ्यः नक्षत्रेभ्यः सर्वेभ्यः ग्रहेभ्यः' इति प्रणवादि स्वाहान्तं हुत्वा, पूर्वगृहीतसंपाताज्येन गर्भभाजनं,'ओं धीं नमः पराय लोहितवर्णाय स्पर्शतन्मात्रात्मने' इति संसिच्य, पूर्णाहुतिं हुत्वा, रजन्यां सुमुहूर्ते सवेदवाद्यघोषं

---

१ ओं नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् ।

२ पुरुष सूक्तेन सहस्रशीर्षेत्यादि षोडशमन्त्रेण ।

तद्भाजनमादाय देवागारं प्रदक्षिणीकृत्य, गर्भगेहं प्रविश्य, द्वारस्य अन्तर्मुखस्य दक्षिणपार्श्वं त्रिभागीकृत्य भागद्वयं विसृज्य द्वारनिकटस्थैकभागे पादपार्श्वे देवानां पट्टिकायां ब्राह्मणः यजमानश्चेत् पट्टिकाधस्तात्, राजा चेत् कुमुदोपरि, वैश्यः यदि कुमुदाधः शूद्रः यदि जगतौ गर्भन्यासं कुर्यात्। उक्तविपर्ययन्यासे महान् दोषः भवति; तस्मात् स्थानभ्रंशं न कारयेत्।

तदा आचार्यः भूमण्डलं सपर्वतद्वीपसमुद्रदिग्गजं शेषफणीन्द्रफणामण्डलस्थितं ध्यात्वा, द्विभुजां श्यामां सर्वाभरणभूषितां ऋतुस्नातां वसुधां आत्मानमपि सर्वभूषणभूषितं केशवं ध्यात्वा गर्भभाजनस्थानगर्तं गोमूत्रेण अनुलिप्य,

"सर्वभूतधरे कान्ते पर्वतस्तनमण्डिते।
समुद्रपरिधानीये देवि गर्भं समाश्रय॥"

इति मन्त्रेण तस्मिन् गर्ते गर्भभाजनं विन्यस्य, विधानेन विधाय, सुधया दृढीकृत्य, समन्ततः रक्षां कुर्यात्। तदा गर्भस्य स्खलने दुर्निमित्ते च पूर्ववत् प्रायश्चित्तं कुर्यात्। गर्भन्यासं अकृत्वा ग्रामं प्रासादं वा कुर्यात् यदि, तदा नचिरादेव उभौ क्षयं यायाताम्। तदानीं यजमानः गुरवे पूर्वोक्तसंख्यया दक्षिणां दद्यात्।

इति श्रीवराहगुरुविरचितायां
क्रियाकैरवचन्द्रिकायां
गर्भन्यासविधिः नाम
पञ्चमः परिच्छेदः

"षष्ठः परिच्छेदः"

# मूर्धेष्टकाविधिः

अथ मूर्धेष्टकाविधिः उच्यते—

पूर्वं मण्डपं प्रपां वा, मध्ये वेदिकाद्वयेन सह कल्पयित्वा, मध्यवेदिकायां पूर्ववत् व्रीहिशालितण्डुलतिलैः सवस्त्राच्छादनं स्थण्डिलं कृत्वा, तस्मिन् पूर्वोक्तलक्षणयुतान् नव कुम्भान् पुण्याहपूर्वकं संस्थाप्य, इष्टकाधिवासार्थं द्वितीयवेदिकायां च स्थण्डिलं पूर्ववत् कृत्वा, दर्भान् आस्तीर्य, मूर्धेष्टकाशुद्ध्यर्थं, 'स्नपनकर्म करिष्ये' इति संकल्प्य पुण्याहं वाचयित्वा; तत्र नव कलशान् सलक्षणान् संस्थाप्य तान् च पूर्वोक्तविशेषणविशिष्टान् विधाय, ब्रह्मादि ईशानान्तं पूर्ववत् घृतादिद्रव्यैः आपूर्य, तेषु पूर्ववत् तदधिदैवतानि आवाह्य अभ्यर्च्य, नपुंसकेष्टकाः चतस्रः संगृह्य, पुण्याहं वाचयित्वा प्रोक्ष्य, तेषु वासुदेवादीन् आवाह्य अभ्यर्च्य, पीठे संस्थाप्य, नवकलशैः तत्तन्मन्त्रेण ताः क्रमेण पृथक् अभिषिच्य, सदर्भनववासोभिः पृथक् पृथक् संवेष्ट्य, पुण्याहं वाचयित्वा प्रोक्ष्य, पूर्वकृतद्वितीयवेदिकास्थण्डिलोपरि ताः शाययित्वा पूर्ववत् द्वारतोरणकुम्भान् संस्थाप्य, तत्तद्दैवतानि आवाह्य अभ्यर्च्य मध्यवेदिकाकुम्भेषु मध्ये परमात्मानं, उपकुम्भाष्टके विष्ण्वादीन् आवाह्य अभ्यर्च्य, पायसान्नं निवेद्य, वेदिकायां चतसृषु दिक्षु

अधिवासहोमं, धाम्नः अष्टसु दिक्षु शान्तिहोमं च कृत्वा संपाताज्यं संगृह्य, तेन स्पर्शमन्त्रेण ताः स्पृष्ट्वा पूर्ववत् संकल्पादिपूर्वंसूत्रैः प्रतिसरं बध्नीयात्।

ततः 'पञ्चविंशतिकलशस्नपनकर्म करिष्ये' इति सङ्कल्प्य, पुण्याहं वाचयित्वा, पूर्वायतानि दश उदगायतानि तावन्ति सूत्राणि निपातयेत्। तथा कृते एकोत्तराशीतिपदानि भवन्ति। तेषु मध्यपदनवके कुम्भनवकं तत्परितः द्वे द्वे पंक्ति वीथ्यर्थं परिमार्ज्य, तद्बहिः पूर्वादिसोमान्तं दिक्षु त्रीणि त्रीणि आग्नेयादीशानान्तं एकैकं कुम्भानां व्रीहितण्डुलतिलकृतस्थण्डिलोपरि विन्यस्य, मध्यकुम्भनवकं घृतोष्णोदकनारत्नफलसप्तलोहमार्जनगन्धाक्षतयवैः ब्रह्मादीशानान्तं क्रमेण आपूर्य पूर्वादिदिक्स्थमध्यकुम्भान् चतुरः क्रमेण पाद्यार्घ्याचमनपञ्चगव्यैः आग्नेयादि कोणस्थितान् चतुरः दधिक्षीरमधुकषायैः पार्श्वस्थितकुम्भाष्टकं शुद्धोदकेन च आपूर्य, पूर्वोक्तविशेषणविशिष्टान् आधाय, द्रव्यकुम्भेषु परवासुदेवादिदामोदरान्तान् शुद्धोदककुम्भेषु नारायणं च आवाह्य अभ्यर्चयेत्।

ततः सयजमानः आचार्यः स्नात्वा वस्त्राङ्गुलीयकादि भूषणैः भूषितः उपोषितः, तत्र दर्भान् आस्तीर्य, परमपुरुषं ध्यायन् शयीत। श्वभूते सुमुहूर्ते कृतकृत्यः गुरुः इष्टकाः पञ्चविंशतिकलशैः मूलमन्त्रेण महाकुंभस्थतोयेन च स्नापयित्वा अभ्यर्च्य, मूलेन नवैः वासोभिः वेष्टयित्वा, सर्वालङ्कारयुतानां

ऋत्विजां मूर्ध्नि विन्यस्य, सवेदवाद्यघोषं ग्राम प्रदक्षिणीकृत्य, विमानोपरितले इष्टकाः आरोप्य, पुण्याहं वाचयित्वा, आचार्यः प्राङ्मुखः हृदयकमले नारायणं ध्यायन् पूर्वादिदिक्क्रमेण प्रणवेन इष्टकाः स्थापयेत्। तदानीं पापरोगयुतान् प्रतिलोमजान् अपि बहिः निर्वासयेत्। तदनु यजमानः शिरसा गुरुं प्रणम्य गोभूहिरण्यभूषणदासीदासवाहनछत्रचामरपादुकादीन् महादक्षिणां च दद्यात्। रथकारं च तथा वस्त्रान्नधनधान्यादिभिः तोषयेत्।

अथ स्थूपिकाकीलविधिः उच्यते—

सौवर्णं राजतं ताम्रं वा दारुजं वा वक्रग्रन्थिवर्जितं स्थूपिका कीलं मूर्धभूम्यङ्घ्रिप्रमाणविस्तारायामं भवेत्। तदग्रमङ्गुलीप्रमाणं विमानकण्ठतुल्यप्रमाणं अध्यर्धप्रमाणं द्विगुणप्रमाणं वा वृत्तं चतुरश्रं पञ्चाश्रं वा कल्पयेत्। वृत्तायते चतुरश्रायते च विमाने स्थूपिकाकीलानि युग्मानि स्युः; इतरेषु विमानेषु अयुग्मानि। विंशतिं यावत् युग्मानि; एकोनविंशतिं यावत् अयुग्मानि। चतुरश्रषडश्राष्टाश्रवृत्तेषु धामसु स्थूपिकाकीलं एवमेव स्यात्। एवं कीलं कृत्वा आचार्यः तस्य मूर्धेष्टकाविधिवत् अधिवासस्नपनाद्यारोपणान्तं सर्वं कर्म कृत्वा, कीलं विमानाग्रं प्रापय्य, ततः आचार्यः तत्र पुण्याहं वाचयित्वा, स्थूपिकागर्ते नवरत्नानि धातुलोहबीजानि च यथाविधि निक्षिप्य, सनववस्त्रोत्तरीयः धृतपञ्चाङ्गभूषणः प्राङ्मुखः मूलमन्त्रेण स्थूपिकाकीलं गर्ते संस्थाप्य, सुधया दृढीकृत्य, ततः विमानदिग्देवता-

कल्पनं कुर्यात् । तदनु यजमानः यथावित्तं आचार्यमूर्तिपानां दक्षिणां दद्यात् ।

## अथ शिखाकुम्भम्—

सौवर्णं राजतं ताम्रं पैत्तलं मृण्मयं वा शिखाकुम्भं वृत्ते धाम्नि वृत्तं अश्रे अश्रं संस्थाप्य, तं नानारत्नैः लौहैः च आपूर्य तदग्रं मुकुलाकृतिं दीपाकृतिं वा कल्पयित्वा, तदधः विकचकमलाकृतिं कुर्यात् ।

## अथ विमानदिग्देवताकल्पनविधिः उच्यते—

विमानस्य ऐन्द्र्यां श्यामलं इन्द्रं रक्तं कुमारं वा, दक्षिणस्यां रक्तवर्णं उमापतिं दक्षिणामूर्तिं वा, प्रतीच्यां श्वेतवर्णं नृहरिं श्रीधरं वा, उदीच्यां कनकवर्णं ब्रह्माणं धनपतिं वा अथवा पुरुषसत्याच्युतानन्तान् यद्वा श्यामरक्तकनकश्यामलवर्णान् वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धान् यदि वा नरनारायणहरिकृष्णान आहोस्वित् वराहनृसिंहश्रीधरहयवक्त्रान् एतान् चतुर्भुजान् शङ्खचक्रधरान् ब्रह्माद्यान् अपि स्वायुधधरान् ध्रुवबेरे स्थिते स्थितान् आसीने आसीनान् शयिते तु स्थितान् आसीनान् वा यानारूढे यानारूढान् स्थितान् वा विश्वरूपे विश्वरूपान् स्थितान् वा चतुर्भुजान् इन्द्रादीन् च सर्वेष्वपि प्राकारेषु आसीनान् विमाने शैलजे शैलजान् कुर्यात् ।

तेषां जलाधिवासादिशयनाधिवासान्तं कर्म यथाविधि कृत्वा सुमुहूर्ते स्वस्वस्थानेषु संस्थाप्य एलेपनं च कुर्यात् । इष्ट-

कामये धाम्नि तु शूलानां जलाधिवासादि शयनाधिवासान्तं कर्म कृत्वा स्वस्वस्थानेषु संस्थाप्य त्रिवस्तुकमयं कृत्वा यस्य यः वर्णः विहितः तेनैव रञ्जयेत्। ते सर्वे भित्तिभागस्थाः सपद्मविष्टराः अर्धचित्राः आभासचित्राः वा कल्पनीयाः।

एकनासायुते धाम्नि दिङ्मूर्तिरपि एकैव। नासिकाहीने तु दिङ्मूर्तिः न इष्यते चतुरश्रायते वृत्ते वृत्तायते च धाम्नि आग्नेयादिषु विदिक्षु क्रमेण वीरसेनसुषेणभद्रसुभद्राख्याबाहुभिः चतुर्भिः खड्गधारिणः स्थाप्याः। चतुरश्रायते धाम्नि दक्षिणोत्तरतः नासिकाद्वययुते पूर्णपुष्करौ शङ्खचक्रधरौ यवनिकास्पर्शिहस्तौ कल्पनीयौ। विमानस्य प्रतितलं नृत्यतः सुरविद्याधरान् किन्नरोरगान् वीणापणवधारिणश्च सर्वत्र भगवदवतारान् च वृत्तेः उपरि कण्ठस्य अधस्तात् कोणेषु चतुर्षु कनकवर्णं गरुडं सिंहं वा कण्ठमात्रोन्नतं पादमात्रोन्नतं अध्यर्धोन्नतं त्रिपादमात्रोन्नतं वा कल्पयेत्। अधस्तात् विमानाधिष्ठाने आग्नेये स्थितं हस्तिवदनं, दक्षिणस्यां शोणमीशं ऋषिभिः सेवितं दक्षिणामूर्तिं वा, प्रतीच्यां विश्वरूपं, उत्तरे कमलासनं कनकवर्णं, ऐशान्यां महिषासुरमर्दिनीं अथवा पूर्ववत् सर्वा अपि दिङ्मूर्तीः, तस्य अधस्तात् उपपीठेऽपि पूर्ववत् अथवा तत्कथोपेतान् प्रादुर्भावान् परिकल्पयेत्।

पाषाणशर्करातक्रसुधया त्रिप्रकारया त्रिफलांशोभिः त्रिवारं द्विवारं एकवारं वा पिष्टया खदिरार्जुनशाल्मलीक्षीरशाखिनां कषायाम्भोभिः तथाकृतया घटे भूयः पिष्टया माषीयत्वक्काथ-

मिश्रया गुडपाकरसैः सैकतैः च पुनः भृशं कुट्टितया धाम स्थूल-सूक्ष्मरूपपराख्येन त्रिविधेन क्रमेण लिम्पेत। एवं कृते धाम चिरस्थायि भवति। पाषाणशर्करातक्रसुगन्धचूर्णं द्विगुणवालुकया युक्तं सम्यक् पिष्ट्वा कुर्यात्।

एकवारं क्षुण्णं स्थूलम्। द्विवारं क्षुण्णं सूक्ष्मम्; त्रिवारं क्षुण्णं परम्। एवंक्रमेण लेपनक्रमः। तद्धाम पञ्चवर्णैः यथाविधि शोभितं कृत्वा उपानदादि स्थूप्यन्तं कनकादिभिः भूषयेत्।

**अथ कवाटस्थापनविधिः उच्यते—**

कवाट द्वारशाखाः समानीय, 'ओं लां नमः पराय सर्वात्मने' इति संक्षाल्य, पुण्याहं वाचयित्वा, कवाटद्वारशाखाः चतस्रः पञ्चोपनिषन्मन्त्रैः[1] अद्भिः संप्रोक्ष्य, अहतैः वासोभिः आच्छाद्य, पूर्ववत् धान्यराशिं कृत्वा, तत्र कवाटद्वारशाखाः संस्थाप्य, कुंभस्थापनार्थं च पूर्ववत् स्थण्डिलं कृत्वा, तत्र सरत्नलोहकूर्चाश्वत्थपल्लवापिधानं सकरकं महाकुम्भं मध्ये तत्परितः तादृशविशेषणविशिष्टं कलशाष्टकं च क्रमात्

---

१ पञ्चोपनिषन्मन्त्राः—

ओं षां नमः पराय परमेष्ठ्यात्मने पुरुषाय नमः ॥१॥

ओं यां नमः पराय पुरुषात्मने सङ्कर्षणाय नमः ॥२॥

ओं रां नमः हराय विश्वात्मने प्रद्युम्नाय नमः ॥३॥

ओं वां नमः पराय निवृत्त्यात्मने अनिरुद्धाय नमः ॥४॥

ओं लां नमः पराय सर्वात्मने नारायणाय नमः ॥५॥

विन्यस्य, द्वारतोरणकुम्भेषु तत्तद्दैवतानि आवाह्य अभ्यर्च्य, पुण्याहवाचनपुरस्सरं अधिवास होमं कृत्वा, प्रभाते गुरुः कवाटाधारशिलागर्तयोः पूर्ववत् रत्नन्यासं विधाय, तदुपरि कवाटाधारशिले संस्थाप्य पुण्याहं वाचयित्वा आधारशिले पञ्चगव्येन प्रक्षाल्य सुलग्ने कवाटे संस्थाप्य महाकुम्भस्थकूर्चेन कवाटयोः देवताविन्यासं कारयेत्।

तत्क्रमः—अधश्शाखायां शान्तिं दक्षिणशाखायां वाग्देवीं उपरि श्रियं औत्तरशाखायां रतिं दक्षिणकवाटे विश्वदृग्भूतनाथौ उत्तरे विश्वचक्रप्रतापवन्तौ च। तत्रस्थाः मत्स्यादिदशमूर्तीः स्वस्वविद्यया प्रोक्ष्य वेत्रेषु वेदशास्त्रपुराणानि नाराचेषु त्रयस्त्रिंशत् देवताः कीलेषु ऋषीन् कवाटपट्टिकायां भूतनाथं कवाटकन्दपट्टे विश्वभावनं च प्रणवादिनमोन्तैः स्वस्वमन्त्रैः महाकुम्भजलैः न्यसेत्। ततः आचार्यादिभ्यः यथाविभवं दक्षिणां दद्यात्।

इति श्रीवराहगुरुविरचितायां क्रियाकैरवचन्द्रिकायां
मूर्धेष्टकाकवाटस्थापनविधिः नाम
षष्ठः परिच्छेदः



## अथ सप्तमः परिच्छेदः

# शिलादारुसंग्रहः

अथ तावत् शिलासंग्रहणविधिः उच्यते—

प्रतिमा रत्नलोहशिलामृद्दारुस्फटिकरूपप्रकृतिद्रव्यभेदेन षड्विधा। आद्या माणिक्यप्रमुखरत्नकृतकरचरणाद्यवयवयुता चित्ररूपा अर्धचित्ररूपा वा पटलत्रासादिदोषरहिता समर्चने सर्वकामफलप्रदा।

लोहजास्तु सुवर्णरजतताम्ररूपप्रकृतिद्रव्यभेदतः त्रिविधाः। आद्या सर्वसम्पत्करी; द्वितीया वित्तयशोविजयविज्ञानकरी; तृतीया ऋद्धिशान्तिसौभाग्यदायिनी। शिलाश्च सितपाटलपीत-कृष्णभेदेन चतुर्विधाः। आद्या ब्राह्मणस्य; द्वितीया क्षत्रियस्य। तृतीया वैश्यस्य; तुरीया शूद्रस्य। यथाक्रमं मुख्याः उदीरिताः।

अथवा एताः चतस्रः ब्राह्मणस्य; राज्ञः पाटलपीतकृष्णाः; वैश्यस्य पीतकृष्णे; तुरीयस्य कृष्णमात्रमिति गौणः अयं विधिः। शङ्खचक्रगदापद्मशक्तिवन्दनमालिकासिंहमातङ्ग सारङ्ग वराहाङ्कुशकुण्डिकाश्रीवत्सचामरछत्रध्वजमत्स्य विहङ्गमतिल-तण्डुलवालुकाः यासु दृश्यन्ते ताः शुभदाः। तासु गर्भवत्यः शिलाः अग्राह्याः। गर्भः तु अन्तः अवस्थितः दोषाः। माहिषं नवनीतं मेषशृङ्गचूर्णं कुरुविन्दचूर्णयुतं गोक्षीरेण सम्पेष्य शिलायां दारौ च लिम्पेत्। तदा गर्भः दृश्यते। वीथिका मण्डलावर्तकानि यासु यासु शिथिलः ध्वनिः स्पर्शे सत्यौष्ण्यं

वा जायते ताः गर्भवत्यः इति मन्तव्याः। तं यत्नेन निरीक्ष्य उत्पाटयेत्। तस्यां मण्डले पाटले दृष्टे तत्र पाटलाः पांसवः पाटले श्वेतपङ्कजे श्वेताः पांसवः कपिलवर्णे स्निग्धे च कमठः [कालायससमे वर्णे स्निग्धे च तत्र कमठः] कपोतवर्णे गौली मञ्जिष्ठवर्णे लोहित दर्दुरः पाण्डरवर्णे शुक्लदर्दुरः रक्तपीते कच्छपः कुसुम्भपीतवर्णे पीतो वर्षाभूः शुक्ल हेमवर्णे क्षुद्र-विहङ्गमः कालायससमे वर्णे गोधा गुडवर्णे पाषाणः मधुवर्णे खद्योतः सारङ्गवर्णे वृश्चिकः खड्गसन्निभे सलिलं नीले शलभः रूक्षे फेनं कपिले मूषिकः कृष्णे कृष्णाहिः बालतृणसन्निभे मत्स्यः इति एवमादयः दृश्यन्ते।

एवं गर्भं निश्चित्य रथकारः गर्भमुद्धरेत्। मोहात् लोभात् वा सगर्भशिलादारुभ्यां प्रतिमाः यदि कृता तदा राजराष्ट्र यजमानानां विनाशः भवति। कृते गर्भोद्धारे तद्दोषपरिहाराय स्थापकः यथाविधि शान्तिं कृत्वा ब्राह्मणान् भोजयित्वा आशिषः वाचयित्वा तेभ्यः दक्षिणां दद्यात्। यदि शीतल-शिलया बिम्बकरणं तदा तत्र देवस्य सान्निध्यमचिरादेव भवति।

शिलाच्छेदे तु यच्छिरःप्रदेशे कांस्यघण्टाध्वनिः मूले च तालध्वनिः सा पुंशिला। किञ्चित् न्यूनध्वनिः यदि सा स्त्री-शिला। नादहीना नपुंसकशिला भवति। बिम्बं पुंशिलया पीठं स्त्रीशिलया कुर्यात्। रत्नन्यासं नपुंसकशिलायां कुर्यात्। श्यादि देवीनां विधानं तु स्त्रीशिलया, पीठं पुंशिलया च कुर्यात्। रत्न-

न्यासं नपुम्सकशिलायां कारयेत्। सौम्या शीतला वैष्णवी महाफलप्रदा। उष्णा आग्नेयी रौद्री रोगप्रदा। सौम्याग्नेयोभयात्मिका ब्राह्मी वृष्टिकरी। धर्मकाले शीतला प्रावृषि च उष्णा एकवर्णा शुद्धा शिला प्रतिमाविधौ ग्राह्या। सङ्कीर्णा अनेकवर्णा दुःखदा।

प्रतिमाकृते प्रशस्तपर्वतेषु शिला ग्राह्या। तत्रापि भूगतां वर्जयेत्। या कुसुमवनसङ्कीर्णा जलाशयसमावृता सा भूः वारुणी। तत्रत्या शिला कामदा। यस्याश्च उत्तरतः जलं दक्षिणे सस्यसमृद्धानि क्षेत्राणि पश्चिमे क्षीरवृक्षाः सा भूः माहेन्द्री। तत्रत्या पुष्टिदा। बहुफलप्रदा च। यस्यां पूर्वतः दक्षिणतः च खदिरकाश्मर्यादिभूरुहाः झिल्लिकाटिट्टिभगृध्रवराहश्वापदादयश्च यस्यां अन्तर्गतं अल्पजलं सा आग्नेयी। तत्रत्या स्वल्पविभवदा।

या विभीतकादिपादपमृगसिंह्मयुता त्यक्तोदकतृणकण्टकद्रुमसंवृता सा वायवी। तत्रत्या शिला शून्यदा।

नदीह्रद तटभूतिभूमिचतुष्पथग्रामश्मशानवल्मीकलवणोदकामेध्यभूमिशबर चण्डालाधिष्ठितशर्करोषरसम्बाध निस्तृणजलवर्जितदेवतालयसमीपवातातपतप्रदेशेभ्यः शिलाः न ग्राह्याः।

"पुण्यक्षेत्रे शुभे देशे ब्रह्मवृक्षनिरन्तरे।
कुशकाशोदकयुते कृष्णमृग[1]निषेविते॥
पद्मोत्पलसमाकीर्णे व्रीहिक्षेत्रानिरन्तरे।

---

१ कृष्णासारेति पाठः वृत्तानुकूल इति भाति।

हिन्तालपूगपुन्नागनालिकेरसमावृते ॥
तपस्विजनसम्बद्धे देशे ग्राह्या शिला भवेत् ॥"

एवं वर्ज्यावर्ज्यगुणदोषादिकं विदित्वा देशभूलिङ्गवर्ण-भेदान् च जानीयात्। अथ आचार्यः यजमानानुगुणे शुभे दिने तेन साकं ब्राह्मणान् भोजयित्वा तेभ्यः दक्षिणां च वितीर्य रथ-कारेण स्थपतिभिः च शिलासंग्रहणदेशं समासाद्य, तत्र प्रपां कारयित्वा, तत्र विधिवत् अङ्कुरार्पणं च कृत्वा, तन्मध्ये वेदि-कामुत्पाद्य, तस्यां व्रीहितण्डुलतिलैः स्थण्डिलं च निर्माय, तस्मिन् मध्ये महाकुम्भं, तद्दक्षिणे करकं तत्परितः कलशाष्टकं च ससूत्रवस्त्रवेष्टनं संस्थाप्य, "ओं षौं नमः पराय परमेष्ठ्या-त्मने नमः" इति सरत्नलोहाश्वत्थपल्लवकूर्चापिधानं विधाय, "सहस्रार हुं फट्" इति सिद्धार्थान् विकीर्य, पुण्याहं वाचयित्वा प्रोक्ष्य, चक्रमुद्रां प्रदर्श्य, अञ्जलिना प्रणम्य, मूलमन्त्रेण महा-कुम्भे देवं, करके सुदर्शनं, उपकुम्भेषु विष्ण्वादिमूर्तीश्च आवाह्य, परमान्नं निवेद्य, चतसृषु दिक्षु कुण्डेषु स्थण्डिलेषु वा पालाश-समित्पुष्प फलाज्यपल्लवैः पञ्चभिः मूलमन्त्रेण पृथक् अष्टोत्तर-शताहुतीः चरुणा नृसूक्तेन षोडशाहुतीश्च हुत्वा, प्राचीनकुण्डे सर्पिषा, "ओं बनदेवताभ्यः स्वाहा, ओं पर्वतेभ्यः स्वाहा, ओं गण्डशैलेभ्यः स्वाहा, ओं तटेभ्यः स्वाहा, ओं शृङ्गेभ्यः स्वाहा, ओं निर्झरेभ्यः स्वाहा, ओं समुद्रेभ्यः स्वाहा, ओं वृक्षेभ्यः स्वाहा, ओं ओषधिभ्यः स्वाहा, ओं वनस्पतिभ्यः स्वाहा, ओं जरायुजेभ्यः स्वाहा, ओं अण्डजेभ्यः स्वाहा, ओं स्वेदजेभ्यः

स्वाहा, ओं उद्भिज्जेभ्यः स्वाहा, ओं सर्वेभ्यः भूतेभ्यः स्वाहा, ओं भूर्भुवस्सुवः स्वाहा" इति हुत्वा, संपाताज्यं सगृह्य, पूर्णाहुतिं च हुत्वा, सम्पाताज्यं शिलियां स्पर्शमन्त्रेण विस्राव्य, पललरजनीचूर्णलाजापूपकरम्भचरुभिः गन्धद्रव्याणि संयोज्य, "ओं सर्वेभ्यः भूतेभ्यः नमः" इति भूतबलिं दत्त्वा, स्वप्नाधिपतिमन्त्रेण आज्येन अष्टोत्तरशताहुतीः हुत्वा, अग्निमुद्वास्य, निशि सवेदवाद्यघोषं आचार्यः उपोषितः अष्टोत्तरशतसंख्यया स्वप्नाधिपतिमन्त्रं जपित्वा, दर्भशय्यायां स्वापं कुर्यात्।

ततः स्वप्ने यदि पर्वतं समुज्ज्वलं पश्येत्, प्रातः एव उत्थाय, आचार्यः तत्र शिलासंग्रहणं विधिवत् कुर्यात्। स्वप्नादर्शने दुःस्वप्नदर्शने वा शान्तिं कृत्वा, तदनु सुमुहूर्ते शिलां वीक्ष्य अस्त्रमन्त्रेण संसिद्धान् सिद्धार्थान्,

"यक्षाः पिशाचाः नागाः च ये अत्र तिष्ठन्ति नित्यशः।
सर्वे ते व्यपगच्छन्तु सन्निधत्तां सदा हरिः"॥

इति मन्त्रेण तत्र विकीर्य पुनः अपि, "ओं लां नमः पराय सर्वात्मने नमः। सर्वभूतेभ्यः बलिं ददामि" इति प्रतिदिशं।

बलिं दत्त्वा, ततः पुण्याहं वाचयित्वा प्रोक्ष्य, "ओं यां नमः पराय पुरुषात्मने नमः" इति शिलां सम्स्पृश्य, मूलमन्त्रेण अर्घ्यं दत्त्वा, अष्टोत्तरशतसंख्याकं मूलमन्त्रं जपेत्।

प्रासादप्रतिमानुगुण्येन सूत्रं निपात्य, रथकारानुज्ञया स्थपतयः शिलाः छिन्द्युः।

सा शिला पूर्वदक्षिणपश्चिमोत्तरदिक्षु यत्र शिरसा पतति

तद्दिक्क्रमेण जयशान्तिश्रीपुष्टिप्रदा स्यात्। यदि कोणेषु तां वर्जयेत्।

अथवा धाम्नो मुखं यस्यां तस्यां यदि, सा च ग्राह्या।

एवं संवीक्ष्य, शिलां उद्धृत्य, वेदिकाकलशतोयैः॥ पुरुषसूक्तेन अभिषिच्य, करकजलेन परिषिच्य, देवीनामपि बिम्बसिद्ध्यर्थं पूर्ववत् पृथक् कुम्भान् अधिवास्य, मध्यकुम्भे त्रैलोक्यमातरं श्रियं, उपकुम्भाष्टके वागीश्वरीक्रियाकीर्तिलक्ष्मी-सृष्टिप्रभ्वीसत्याब्राह्म्याख्याः अष्टौ शक्तीः वर्धन्यां सुदर्शनं च आवाह्य, पूर्ववत् "ओं श्रीं श्रियै स्वाहा" इति मन्त्रेण समिदा-ज्यचरुभिः हुत्वा, स्त्रीलिङ्गशिलां संगृह्य, कुम्भजलैः श्रीसूक्तेन अभिषिच्य, वर्धनीजलेन "सहस्रार हुं फट्" इति परिषिच्य, परिवारदेवताकल्पनार्थं एवमेव तत्तन्मन्त्रेण शिलाः संगृह्य शकटादिकं आरोप्य धाम नयेत्। तदनु रथकारानुज्ञया स्थपतयः यथाविधि प्रतिकृतीः कुर्युः।

## दारुसंग्रहः—

अथ दारुसंग्रहणविधिः उच्यते—

वृश्चिकादिमिथुनान्तेषु मासेषु अष्टसु दारुसंग्रहणं कुर्यात्। शिलासंग्रहणं तु सर्वदैव।

संग्रहयोग्यवृक्षाः तु चन्दागरुकाश्मर्यं हरिचन्दनकेशर खदिरकुरवकासनमधुकदेवदारुजातीबिल्वशमीशाककदम्बतिल-कनमेरुफलिनिसुरभिचंपकशिंशुपाक्षीरिकासालबीजककुरुविन्द -

तिनिशस्यन्दनचूततमाल सरलार्जुन कुटजकङ्केली सप्तपर्णमधुष्ठीलूरण निचुल पुन्नाग खदिरराजवृक्षादयः प्रशस्ताः।

सारवद्भिः सर्वदोषविवर्जितैः घनोपेतैः एव दारुभिः प्रतिमां कारयेत्।

स्वयं शुष्कदग्धभग्नहृतत्वक्वक्र घुणक्षतकोटरपक्षिसेवित-शश्वच्छण्डालाद्यधमसेवित प्रतिलोमजसेवितनिवासभूतचैत्य-स्थदेवताधिष्ठितश्मशानस्थमार्गस्थदेवालयकूपतटाकसमीपस्थ-विकृताद्याः वृक्षाः वर्जनीयाः।

दारुसंग्रहस्य अपि शिलासंग्रहवत् पूर्वं ब्राह्मण भोजना-शीर्वादानुग्रहदक्षिणावितरण मृत्संग्रहणाङ्कुरार्पणादिकं कर्म सकलं कृत्वा आचार्यः दारुसंग्रहदेशं आसाद्य, तत्र षोडशस्त-म्भयुतां समध्यवेदिकां प्रपां कारयित्वा, मध्यवेदिकायां धान्य-राशौ सलक्षणं सकरकं सकलशाष्टकं महाकुम्भं सगन्धोदकं सूत्रवस्त्रादिवेष्टितं निधाय, परमेष्ठिमनुना सरत्न लोहाश्वत्थपल्लव-कूर्चपिधानं विधाय, पूर्ववदस्त्रमन्त्रेण सिद्धार्थान् विकीर्य, पुण्याहं वाचयित्वा प्रोक्ष्य, चक्रमुद्रां प्रदर्श्य, अञ्जलिना प्रणम्य, कुम्भकरक कलशेषु च आधारादि पद्मान्तं पीठं परिकल्प्य, तेषु पूर्ववत् देवताः आवाह्य अभ्यर्च्य, परमान्नं निवेद्य, चतुर्दिक्कुण्डेषु अग्निमुपसमिध्य, वासुदेवादीन् आवाह्य-अभ्यर्च्य, पालाशसमित्पुष्पफलाज्यपक्वैः मूलेन अष्टोत्तरशताहुतीः चरुणा नृसूक्तेन षोडशाहुतीः हुत्वा, पूर्ववत् प्राचीनकुण्डे सर्पिषा, "ओं वनदेवताभ्यः स्वाहा, ओं पर्वतेभ्यः स्वाहा, ओं

गण्डशैलेभ्यः स्वाहा, ओं शिलादेवताभ्यः स्वाहा, ओं तट-देवताभ्यः स्वाहा, ओं शृङ्गदेवताभ्यः स्वाहा, ओं निर्झर-देवताभ्यः स्वाहा, ओं समुद्रेभ्यः स्वाहा, ओं वृत्तेभ्यः स्वाहा, ओं ओषधिभ्यः स्वाहा, ओं वनस्पतिभ्यः स्वाहा, ओं जरायु-जेभ्यः स्वाहा, ओं अण्डजेभ्यः स्वाहा, ओं स्वेदजेभ्यः स्वाहा, ओं उद्भिज्जेभ्यः स्वाहा, ओं सर्वेभ्यः भूतेभ्यः स्वाहा" इति हुत्वा उत्थाय, वृत्तमूलं प्रक्षाल्य, नवेन वाससा मूलमन्त्रेण आवेष्ट्य, तेनैव (तैरेव) दर्भैः आच्छाद्य, तदनु केशवादि[1]दामोदरान्तं मत्स्यादिकल्कयन्तं च प्रणवादिस्वाहान्तैः तत्तन्नाममन्त्रैः हुत्वा सम्पातं संगृह्य, "ओं भूः स्वाहा, ओं भुवः स्वाहा, ओं सुवः स्वाहा, ओं भूर्भुवस्सुवः स्वाहा" इति च हुत्वा, "सप्त ते अग्ने समिधः सप्तजिह्वाः सप्तऋषयः सप्तधाम प्रियाणि सप्तहोत्राः सप्तधात्वा यजन्ति सप्तयोनीराव्रृणस्वाघृतेन स्वाहा" इति पूर्णाहुतिं हुत्वा सम्पातेन स्पर्शमन्त्रेण वृत्तं संस्पृश्य ।

"कर्मणा पूर्ववृत्तेन स्थावराकारमाश्रित ।
वृणोमि विष्णोः कर्मार्थं सर्वसम्पत्करं तव ॥
स्थावरत्वादितो गच्छ दिव्यरूपमनुत्तमम् ।

---

१ ओं केशवायनमः, नारायणायनमः, माधवायनमः, गोविन्दायनमः, विष्णवेनमः, मधुसूदनायनमः त्रिविक्रमायनमः, वामनायनमः, श्रीधरायनमः, हृषीकेशायनमः, पद्मनाभायनमः, दामोदरायनमः ।

भुङ्क्ष्व भोगान् च विपुलान् वासुदेवप्रसादतः ॥
हिनस्मि नाहं त्वां वृक्ष किन्तु मुञ्चामि जन्मतः ।"

इति पादपं उपस्थाय, रक्तसूत्रेण मूलमन्त्रेण वेष्टयित्वा, पललरजनीचूर्णकरम्भलाजचरुगव्यैः "ओं सर्वेभ्यः भूतेभ्यः नमः" इति भूतबलिं दत्त्वा, स्वप्नाधिपतिमन्त्रेण पूर्ववत् हुत्वा, अग्निमुद्वास्य, सवेदवाद्यघोषं स्वप्नार्थं, "ओं ह्रीं नमः स्वप्नाधिपतये सुस्वप्नाधिपतये सुस्वप्नं मम कुरु स्वाहा" इति मन्त्रं अष्टोत्तरशतवारं जपित्वा, आचार्यः दर्भशय्यायां शयीत ।

स्वप्ने दारौ प्रज्वलिते प्रातः एव आचार्यः स्नात्वा दारुसंग्रहणं विधिवत् कुर्यात् । अदर्शने दुस्स्वप्नदर्शने च कृत्वा शान्तिहोमम् ।

ततः गुरुः सुमुहूर्ते वृक्षं पश्यन् "यक्षाः पिशाचाः" इति गाथां उदीर्य अस्त्रमन्त्रेण सिद्धार्थान् विकीर्य, भूतेभ्यः बलिं दत्त्वा, पुण्याहं वाचयित्वा, प्रोक्ष्य, पुरुषमन्त्रेण[1] वृक्षं सम्स्पृश्य, मूलमन्त्रेण अर्घ्यं प्रदाय, तमेव मनुं अष्टोत्तरशतवारं जप्त्वा, प्राङ्मुखः गुरुः कुठारेण स्वयं वृक्षं छिन्द्यात् ।

ततः गुर्वनुज्ञया रथकाराः छेदनं कुर्युः ।

यदि प्राच्यामुदीच्यां वा पतितः तदा अभ्युदयावहः । ततः गुरुः छिन्नं वृक्षं हरिस्वरूपं ध्यायन् मूलमन्त्रेण वेदिकासंस्थितकुम्भतोयेन अभिषिच्य, वर्धनीवारिणा परिषिच्य, तं आलयं नीत्वा, तेन बालबिम्बादि प्रतिकृतीः कारयेत् ।

---

१ पुरुष एवदेम् इत्यादि मन्त्रेण ।

तदनु यजमानः गुरवे पञ्चाङ्गभूषणं निष्कशतं च तदर्धं ऋत्विजां च दक्षिणां दद्यात् ।

असंस्कृतेन तरुणा यथोक्तविधिना यदि ।
कुर्यात् मोहात् प्रतिकृतिं तदानर्थाय कल्पते ॥
यथोक्तविधिना ब्रह्मन् कुर्यादभ्युदयावहम् ॥

इति श्रीवराहगुरुणा विरचितायां क्रियाकैरवचन्द्रिकायां
शिलादारुसंग्रहणविधिः नाम
सप्तमः परिच्छेदः

---

## अष्टमः परिच्छेदः

# प्रतिष्ठाविधिः

अथ प्रतिष्ठाविधिः उच्यते--

नूतनप्रतिष्ठाकर्मसिद्ध्यर्थं तत्कर्मारम्भदिनात् अर्वाक् द्वादशाहे नवाहे सप्तमाहे पञ्चमे अथ तृतीये अहनि वा पालिका-घटिकाशरावेषु यथोक्तविधिना अङ्कुरान् अर्पयेत् ।

तेषां लक्षणानि क्रमेण वक्ष्यन्ते ।

पालिकादि-लक्षणम् — पालिकाः तावत् साङ्गुलहस्तोत्सेधाः षोडशाङ्गुलविस्तारमुखाः सप्ताङ्गुलबिलयुताः अष्टाङ्गुलपादपीठविस्ताराः धुत्तूरकुसुमसमाः अम्भोजसदृक्षमुखाः । घटिकास्तु द्वाविंशत्यङ्गुलोत्सेधयुताः पञ्चवदनाः मध्ये घटिकाकाराः चतुर्दिक्षु चतुरङ्गुलविस्तीर्ण-

वदन चतुष्टया मध्यभागविलसत्षडङ्गुलविस्तीर्णवदनयुताः च। शारावास्तु विंशत्यङ्गुलोत्सेधाः द्वादशाङ्गुलविस्ताराश्च।

यथाविभवविस्तरं हेमादिलोहजाः मृण्मयाः वा शरावघटपालिकाः सम्पादनीयाः।

मुख्यक्लृप्तौ तेषां प्रत्येकशः षट्त्रिंशत् यदि तदा अष्टोत्तरशतं भवति। जघन्यक्लृप्तौ पृथक् षोडश यदि तदा अष्टाचत्वारिंशत् भवति। यद्वा द्वादश द्वादश अष्टौ अष्टौ चत्वारि चत्वारि वा ग्राह्याः। यद्वा सर्वार्थेऽपि पालिकाः एव षोडशाष्टौ चतस्रः वा ग्राह्याः। ते च दैवेकार्ये सर्वेणापि प्रकारेण युग्माः एव भवेयुः। मानुषे तु अयुग्माः।

मृत्संग्रहणविधिः—

तदनु अङ्कुरावापनार्थं शुभे विविक्ते अभिमते देशे षोडशस्तम्भयुतं चतुर्दिक्चतुर्द्वारं मण्डपं कल्पयित्वा, तं गोमयेन अनुलिप्य, चन्दनमालिकादर्भमालिका मुक्तादामक्षौमवितानदीपमालाक्षतसुधाचूर्णाद्यैः अलङ्कृत्य ततः मृत्संग्रहणार्थं आचार्यः स्नात्वा अलङ्कृतः धृतोर्ध्वपुण्ड्रः, प्रक्षालितपाणिपादः, त्रिः आचम्य, खनित्रमानीय, अद्भिः प्रक्षाल्य, नवेन वाससा आच्छाद्य, पुष्पैः अलङ्कृत्य, स्नातं अलङ्कृतं ऋत्विजमाहूय, तन्मूर्ध्नि निक्षिप्य, तं गजस्कन्धं रथमश्वं वा आरोप्य।

सध्वजच्छत्रपताकावाद्यवेदघोषं शाकुनसूक्तपाठकैः[१] साङ्कुरपालिकाबहुदीपैः भक्तैः भागवतैः साकं प्राचीमुदीचीं वा दूरात्

---

१ पृष्ठ ८ में शाकुन सूक्त।

मनोहरां दिशं गत्वा, तत्र प्रपां कल्पयित्वा, अलङ्कृत्य, तत्र आसने प्राङ्मुखः उपविश्य, प्रतिष्ठाकर्मसिद्ध्यर्थं "मृत्संग्रहण-कर्म करिष्ये" इति सङ्कल्प्य।

प्राणानायम्य, आत्मशुद्धिं मानसयागान्तां कृत्वा, गलन्तिकायां, "ओं नमोभगवते सुदर्शनाय चक्रराजाय ज्वालामालिने हुं फट् स्वाहा आगच्छ आगच्छ" इति आवाह्य अभ्यर्च्य, पुण्याहं वाचयित्वा,[1] तज्जलेन "सहस्रार हुं फट्" इति धरणीं विष्णुगायत्र्या[2] प्रक्षालितं खनित्रं च सम्प्रोक्ष्य, तत्र ऊर्ध्व-वक्त्राम्, ऐशाने न्यस्तमौलिकां नैर्ऋते न्यस्तपादां भुवं नवतालमानेन आलिख्य, दर्भैः परिस्तीर्य, 'ओं भूमिः भूम्नेति'[3] सूक्तेन भुवं कूर्चेन स्पृशन्, वराहं ध्यात्वा, अभिमन्त्र्य, तत्र "ओं भूं भूम्यै नमः आगच्छ आगच्छ" इति आवाह्य,

"भां ज्ञानाय हृदयाय नमः" इति षडङ्गन्यासं कृत्वा कलारमुद्रां प्रदर्श्य, भूमन्त्रेणैव[4] अर्घ्यादिभिः अभ्यर्च्य, खनित्रं

---

१ पुण्याहवाचन पृष्ठ १५ में।

२ ओं नारायणाय विद्महे वासुदेवाय धीमहि।
तन्नो विष्णुः प्रचोदयात्।

३ भूसूक्त पृष्ठ १३ में।

४ भूमन्त्रः— भूं भूम्यै नमः अर्घ्यं समर्पयामि ॥१॥
पं पृथिव्यै नमः पाद्यं प्रकल्पयामि ॥२॥
अं अचलायै नमः आचमनीयं समर्पयामि ॥३॥
सं सर्वधात्र्यै नमः स्नानं समर्पयामि ॥४॥
अं अनन्तायै नमः नैवेद्यं समर्पयामि ॥५॥

दर्भैः परिस्तीर्य, तस्मिन् "ओं नमः भगवते हुं वराहाय आगच्छ आगच्छ" इति आवाह्य, "ओं ह्रीं ह्रीं" इत्यादिषडङ्ग-न्यासं कृत्वा वराहमुद्रां प्रदर्श्य, अर्घ्यादिभिः अभ्यर्च्य पूर्वादिदिक्षु इन्द्रादीशानान्तं आवाह्य अभ्यर्च्य, सर्वेभ्यः निवेद्य, भूम्या मुखबाहूरुस्थलस्तनजठरमध्यजघनाङ्घ्रिषु सवे-दवाद्यघोषं वराहमन्त्रेण[1] मृदं खात्वा, लोहजे वेत्रजे वा भाजने मूलमन्त्रेण[2] संगृह्य, अस्त्रमन्त्रेण[3] अहतवाससा आच्छाद्य पश्चात् एवमेव नद्याः गोकुलाच्च वालुकां गोकरीषं च संगृह्य पृथक् पृथक् भाजनयोः निक्षिप्य वासोभ्यां पिधाय, गुरुः स्वयं भाजनत्रयमपि वहन् गजं वा स्यन्दनं वा आरुह्य सवेदवाद्य-घोषं ग्रामं प्रदक्षिणीकृत्य अङ्कुरार्पणमण्डपं प्रविशेत् ।

इति श्रीवराहगुरुणा विरचितायां क्रियाकैरवचन्द्रिकायां
मृत्संग्रहणविधिः नाम
अष्टमः परिच्छेदः

---

१ ओं वराहाय नमः ।

२ ओं नमो नारायणाय ।

३ ओं नमो अस्त्रायफट् ।

## नवमः परिच्छेदः

# अङ्कुरार्पणम्

अथ अङ्कुरार्पणविधिरुच्यते—

आचार्यः स्नातः नूतनक्षौमपरिधानोत्तरीयः उष्णीषगन्धमाल्यपवित्रकुण्डलहारकटकादिभूषाविशेषाङ्कृतः मूर्तिपैः अपि एवंविधैः साकं पादौ आजानु आमणिबन्धात् हस्तौ च प्रक्षाल्य आचम्य अङ्कुरार्पणमण्डपं पुण्याहजलेन प्रोक्ष्य तत्र चन्दनार्द्राणि सूत्राणि प्रागायतानि द्वादश उदगायतानि पञ्चदश च पातयित्वा, तत्र चतुःपञ्चाशदुत्तरशतपदेषु ब्रह्मादीशानान्तं द्वादश द्वादश पदानि पालिकाघटिकाशरावस्थापनार्थं संगृह्य शेषाणि षट्चत्वारिंशत्पदानि सम्मृज्य ब्रह्मेन्द्रवरुणस्थानेषु घटिकाः आग्नेययमनैर्ऋतस्थानेषु पालिकाः, मारुतसौम्यरौद्रेषु शरावान् च पृथक् पृथक् षट्त्रिंशत् एवमष्टोत्तरशतसंख्यया स्थापयेत् ।

प्रत्येकं षोडशग्रहणविधाने तु प्रागायतानि नव, उदगायतानि द्वादश सूत्राणि निपात्य, तेषु अष्टोत्तराशीतिपदेषु पूर्वादिपश्चिमान्तेषु स्थानेषु चत्वारि चत्वारि पदानि एवं षोडश आग्नेयादिनैर्ऋतान्तेषु चतुर्षु स्थानेषु चत्वारि चत्वारि एवं च षोडश रौद्रादिवायव्यान्तेषु चतुर्षु च चत्वारि चत्वारि एवमपि षोडश एवमष्टचत्वारिंशत् पदानि पात्रस्थापनार्थं संगृह्य,

शेषाणि चत्वारिंशत्पदानि सम्मृज्य, पूर्वोक्तविधिना पात्राणि स्थापयेत्।

त्रिविधपात्राणां प्रत्येकं द्वादशग्रहणविधौ तु प्रागायतानि नव उदगायतानि च नव सूत्राणि निपात्य, तेषु चतुष्षष्टिपदेषु बाह्यतः द्वे द्वे पङ्क्ती विसृज्य, एकैकां पङ्क्तिं विलुप्य, ब्रह्मादीशानान्तं चत्वारि चत्वारि पात्राणि स्थापयेत्।

चतुर्विंशतिपात्रविधाने तु प्रागायतानि नव उदगायतानि षट् सूत्राणि निपात्य, तेषु चत्वारिंशत्पदेषु बाह्यतः द्वे द्वे पङ्क्ती विसृज्य, अन्तरान्तरा एकां पङ्क्तिं विलुप्य च, ऐशानैन्द्राग्नेयनैर्ऋतवारुणमारुतभागेषु, चत्वारि चत्वारि पात्राणि स्थापयेत्।

द्वादशपात्रस्थापनविधाने तु प्रागायतानि चत्वारि उदगायतानि पञ्च सूत्राणि निपात्य, द्वादशपदेषु चतस्रः पालिकाः चतस्रः घटिकाः चत्वारः शरावाश्च स्थाप्याः।

अथवा परितः सोमकुम्भं षोडश अष्टौ चतस्रः वा पालिका एव स्थाप्याः।

एवं कृत्वा पालिकादीनि पात्राणि विष्णुगायत्र्या[1] प्रक्षाल्य, तेषां कण्ठेषु सहदेवीदूर्वाश्वत्थपल्लवानि बध्वा कुशकाशतृणैः बिलमूलानि अवरुध्य, तानि प्रथमं मृद्भिः, अनन्तरं वालुकाभिः, तदनु करीषचूर्णैश्च पूरयित्वा, तेषु कूर्चं निधाय,

---

१ ओं नारायणाय विद्महे वासुदेवाय धीमहि।
तन्नो विष्णुः प्रचोदयात्॥

पालिकादिस्थानेषु प्रतिपदं शालितण्डुलतिलैः क्रमेण आढक-तदर्धप्रस्थपरिमितैः वृत्तं चतुरस्रं वा,

"ओं रां नमः पराय विश्वात्मने नमः" इति पीठं कृत्वा, तदुपरि पद्ममालिख्य, प्राङ्मुखः उदङ्मुखः वा "ओं षौं नमः पराय परमेष्ठ्यात्मने नमः" इति वारुण्यादि ऐन्द्रान्तं घटिकाः, "ओं यां नमः पराय पुरुषात्मने नमः" इति नैर्ऋत्यादि आग्नेयान्तं पालिकाः,

"ओं रां नमः पराय विश्वात्मने नमः" इति वायव्यादि ऐशानान्तं शरावान् अपि संस्थाप्य, ततः दर्भैः परिस्तीर्य, सोमकुम्भमुद्धृत्य, इन्द्रं नत्वा,

"वाजिनं मां बृहतायां द्रष्टृभाजने योगानां
ब्राह्मणानां इति मन्त्रेण तन्तूनां वेष्टितानां

अन्तरालं यवान्तरं अर्धाङ्गुलान्तरं अङ्गुलान्तरं वा यथा भवेत् तथा तन्तुना आवेष्ट्य, पालिकादीनां पश्चिमे प्रदेशे धान्यपीठं व्रीहितण्डुलतिलैः कल्पयित्वा तत्र पद्मं विलिख्य, तस्मिन् सोमकुम्भं विन्यस्य,

पालिकादीन प्रत्यग्रैः वासोभिः प्रत्येकं, अशक्तौ प्रति-व्यूहं वा, सोमकुम्भं च नवाभ्यां वासोभ्यां "युवासुवासाः"[1] इति संवेष्ट्य, तं गन्धोदकेन आपूर्य, सरलकूर्चपिध नाश्वत्थ-

---

१ ओं युवा सुवासाः परिवीत आगात्, स उ श्रेयान् भवति जायमानः तन्धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः ॥

पल्लवं कृत्वा, दर्भैः परिस्तीर्य, नीवारशालिमुद्गश्यामाकप्रियङ्गु-यवतिलगोधूमादीन् याज्ञिकान् धान्यजातान् नूतने पात्रे निक्षिप्य,

तत् परिचारकमूर्धनि निधाय सतूर्यघोषं धाम प्रदक्षिणी-कृत्य यागमण्डपं प्रविश्य, पालिकादीनां पूर्वभागे द्रोणशाल्यादि धान्यकल्पितपीठे विन्यस्य, तानि बीजानि गोक्षीरैः विष्णु-गायत्र्या[1] प्रक्षाल्य दर्भैः परिस्तीर्य,

"ओं यवाधिदैवताय ब्रह्मणे नमः, ओं सर्षपाधिदैवताय रुद्राय नमः, ओं प्रियङ्ग्वधिदैवताय सुब्रह्मण्याय नमः, ओं निष्पावाधिदैवताय वायवे नमः, ओं मुद्गाधिदैवताय विष्णवे नमः, ओं शाल्यधिदैवतायै श्रियै नमः, ओं गोधूमाधिदैवताय यमाय नमः, ओं माषाधिदैवताय यक्षाय नमः, ओं तिलाधि-दैवताय जलाधिपाय नमः, ओं वेणुधान्याधिदैवताय विनाय-काय नमः" इति,

तत्तद्बीजाधिदैवतानि आवाह्य अभ्यर्च्य, नवेन वाससा आच्छाद्य,

सोमकुम्भे च आधारादि पद्मान्तं पीठं परिकल्प्य, अभ्यर्च्य तस्मिन् ,

'सों सोमाय नमः, आगच्छ, आगच्छ' इति सोममावाह्य, 'ओं सां' इत्यादि षडङ्गन्यासं कृत्वा, अर्घ्यादिभिः अभ्यर्च्य,

पुनः पुण्याहं वाचयित्वा[2] प्रोक्ष्य, बहिः शङ्खभेर्यादिवाद्यानि आघोष्य,

---

१ ५६ पृष्ठे। २ १५ पृष्ठे।

घटिकासु, "ओं कं ब्रह्मणे नमः, आगच्छ, आगच्छ" इति ब्रह्माणं, पालिकासु "ओं अं विष्णवे नमः, आगच्छ, आगच्छ" इति विष्णुं च,

शरावेषु "ओं ईं ईशानाय नमः आगच्छागच्छेति" ईशानं च आवाह्य अभ्यर्च्य,

'द्वारतोरणध्वजकुम्भदेवतापूजनं करिष्ये' इति सङ्कल्प्य,

पूर्वादिद्वारेषु चतुर्षु धान्यपीठं परिकल्प्य, तत्तत्तोरण-ध्वजान् "इदं विष्णुः" इति कुम्भानपि संस्थाप्य,

पूर्वे ऋग्रूपे सुशोभननाम्नि अश्वत्थतोरणे, "ओं लं इन्द्राय नमः", तत्पार्श्वस्थितरक्तध्वजयोः "ओं कुमुदाय नमः, कुमुदाक्षाय नमः", तत्र कुम्भयोः प्रवालं पद्मरागं च क्रमेण निक्षिप्य, तयोः "ओं पूर्णाय नमः, ओं पुष्कराय नमः" इत्यावाह्य, गन्धादिभिः अभ्यर्च्य,

दक्षिणे यजूरूपे सुभद्रनाम्नि औदुम्बरतोरणे "ओं यमाय नमः",

तत्पार्श्वस्थितपीतध्वजयोः, "ओं पुण्डरीकाय नमः", "ओं वामनाय नमः", तत्र कुम्भयोः क्रमेण सवज्रवैदूर्ययोः "ओं आनन्दाय नमः", "ओं नन्दाय नमः", इत्यावाह्य अभ्यर्च्य,

पश्चिमे सामरूपे सुधन्वनाम्नि न्यग्रोधतोरणे, "ओं वं वरुणाय नमः", तत्पार्श्वस्थितनीलध्वजयोः "ओं शङ्कुकर्णाय नमः", "ओं सर्वनेत्राय नमः", तत्र कुम्भयोः क्रमेण सपुष्य-

रागनीलयोः "ओं वीरसेनाय नमः", "ओं सुषेणाय नमः", इति आवाह्य अभ्यर्च्य,

उत्तरे अथर्वरूपे सुहोत्रनाम्नि रत्नतोरणे, "ओं सं सोमाय नमः", तत्पार्श्वस्थित पाण्डरध्वजयोः, "ओं सुमुखाय नमः", "ओं सुप्रतिष्ठाय नमः", तत्र कुम्भयोः क्रमेण समुक्तास्फटिकयोः "ओं सम्भवाय नमः", "ओं प्रभवाय नमः", इति आवाह्य अभ्यर्च्य,

सर्वान् पिधाय, द्वारतोरणकुम्भान् प्रत्येकं नवैः वासोभिः आच्छाद्य; पालिकाधिदेवताः सोमकुम्भं च पुनः अपि सम्पूज्य, पायसान्न शुद्धान्न वा निवेद्य, ततः कुण्ड स्थण्डिल वा विधिवत् अग्निप्रतिष्ठादि अग्निमुखान्तं कृत्वा, अग्निमध्ये आधारादि पद्मान्तं पीठं हंसेन परिकल्प्य,

तस्मिन् पूर्ववत् सोममावाह्य ध्यात्वा अभ्यर्च्य, अर्घ्यादि नैवेद्यान्तं च घृतेन दत्त्वा, तत्तन्मन्त्रेण सर्पिषा अष्टोत्तरशताहुतीः, पालाशखदिराश्वत्थबिल्वसमिद्भिः मूलमन्त्रेण[1] अष्टोत्तरशताहुतीः, नृसूक्तेन[2] चरुणा षोडशाहुतीश्च, पुनः सर्पिषा सोममन्त्रेण[3] अष्टोत्तरशताहुतीश्च हुत्वा, सम्पाताज्यं सगृह्य,

१ ओं नमो नारायणाय ।

२ पुरुषसूक्तेन सहस्रशीर्षेत्यादि मन्त्रैः ।

३ ओं इमन्देवा असपत्न ठँ सुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय । इममुष्य पुत्रममुष्यै पुत्रमस्यै विश एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणाना ठँ राजा ।

स्पर्शमन्त्रेण हस्ताभ्यां पालिकादिपात्रेषु अवशिष्टं बीजपात्रे च निक्षिप्य,

पूर्णाहुतिं कृत्वा, अग्निमथं सोममुद्वास्य, सोममन्त्रं[1] शतवारं जप्त्वा, पुण्याहं वाचयित्वा प्रोद्य, आचार्यः स्वस्थमनाः सुमुहूर्ते सदस्यैः वैष्णवैः अनुज्ञातः,

द्वादशाक्षरविद्यया पालिकादिपात्रेषु बीजावापं कृत्वा, "मूर्धानं[2] दिवो अरतिं" इति मन्त्रेण मृद्भिः आच्छाद्य. "इमं[3] मे" इति आरभ्य "प्रमोषीः" इत्यन्तेन सोमकुम्भजलेन संसिच्य, पिधानैः आच्छाद्य, रक्षिभ्यः कुमुदादिभ्यः बलिं दद्यात् ।

एवं यावत्कर्मावसानं अहर्निशं सोमकुम्भपूजनपरमान्ननिवेदनानिर्वाणदीपारोपणबलिप्रदानानि कुर्वन् हरिद्राजलेन अङ्कुराभिवृद्ध्यर्थं संसिच्य सुगुप्ते स्थले संस्थाप्य रक्षेत् ।

यजमानः, गुरुं ऋत्विजः च, वित्ततांम्बूलफलादिभिः तोषयेत् ।

इति श्रीवराहगुरुणा विरचितायां क्रियाकैरवचन्द्रिकायां अङ्कुरार्पणविधिः नाम नवमः परिच्छेदः

---

१ ६० पृष्ठे ।

२ मूर्धानं दिवो अरतिं पृथिव्या वैश्वानर मृतऽआजातमग्निम् । कवि ठँ सम्राजमतिथिं जनानामासन्नापात्रञ्जनयन्तदेवाः ॥

३ ओं इमम्मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युराचके ॥ ओं तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ॥ अहेडमानो वरुणेह बोध्युरुश ठँ समान आयुः प्रमोषीः ॥

## अथ दशमः परिच्छेदः

# प्रतिष्ठोपकरणविधिः

अथ तावत् प्रतिष्ठोपकरणविधिः उच्यते—

तत्र कुण्डलक्षणम्— प्रासादस्य अग्रभागे प्रथमद्वितीयतृतीयावरणेषु योग्यावकाशेषु एतेषु अष्टासु आशासु अभिमते देशे दशभिः हस्तैः विस्तीर्णायामयुतं चतुर्दिक्षु चतुर्द्वारं मण्डपं कल्पयित्वा, तन्मध्ये मानांतराङ्गुलिवशेन पञ्चहस्तायामविस्तारां एकहस्तोच्छ्रितां चतुरश्रां वेदिमिष्टकया कल्पयित्वा,

तस्याः त्रितालात् बहिः पूर्वदेशे मुष्ट्यङ्गुलवशेन चतुर्विंशत्यङ्गुलायामविस्तारं चतुरश्रं विंशत्यङ्गुलप्रकृतिमानं भूतलं खात्वा, खातभूतलात् बहिः द्व्यङ्गुलं विसृज्य, ततः तालमानां चतुरङ्गुलविस्तारां सात्त्विकीं प्रथममेखलां, तत्परितः अष्टाङ्गुलमानां चतुरङ्गुलविस्तारां राजसीं द्वितीयमेखलां, तत्परितः चतुरङ्गुलतुङ्गतां तावद्विस्तारां तामसीं तृतीयमेखलां च इति क्रमेण यथाविधि इष्टकयैव कुण्डानुगुण्येन मेखलात्रयं कुर्यात्।

वेदिकायाः च आग्नेये पूर्ववत् चतुर्विंशत्यङ्गुलायामविस्तारं सूत्रं चतुरश्रं निपात्य,

पश्चिमभागागमे नैरृतवायव्यकोणाभ्यां पञ्च पञ्च अङ्गुलीः हित्वा, ततः प्रतीच्यागमे शङ्कुमारभ्य दक्षिणोत्तरसूत्रभ्रमणं कृत्वा, ततः पूर्वागमशङ्कुपर्यन्तं दक्षिणोत्तरसूत्रे निपात्य, योन्याकारं कृत्वा, शेषं सम्मार्ज्य विंशत्यङ्गुलप्रकृत्युच्छ्रायं

खात्वा, तस्मात् द्व्यङ्गुलं विसृज्य पूर्ववत् कुण्डानुगुण्येन मेखलात्रयं कुर्यात्।

बहिः शङ्कुं संस्थाप्य अष्टादशाङ्गुलसूत्रं शङ्कोः पूर्वतः पश्चिमतः च तथा निपात्य, अष्टादशाङ्गुलं सूत्रं पूर्वामारभ्य पश्चिमान्तं भ्रामयेत्। तदा चापाकारं भवति।

प्रकृतिं तथैव विंशत्यङ्गुलं खात्वा, तस्मात् द्व्यङ्गुलं विसृज्य पूर्ववत् कुण्डानुगुण्येन मेखलात्रयं कुर्यात्।

तस्याः नैरृते शङ्कुं संस्थाप्य, भुवनसंख्याङ्गुलवशेन सूत्रं परिभ्राम्य, वृत्तं कृत्वा, वृत्तं चतुर्विंशत्यङ्गुलवशेन षोढा विभज्य शङ्कुं निधाय, पूर्वपश्चिमशङ्कुभ्यां सूत्रं निपातयेत्।

एवमेव सूत्रनिपाते कृते, अष्टाङ्गुलनिरन्तरं षडश्रकुण्डं भवति। तथा विंशत्यङ्गुलं प्रकृतिं खात्वा, पूर्ववत् खातभूतलात् द्व्यङ्गुलं त्यक्त्वा कुण्डवशेन मेखलात्रयं कुर्यात्।

तस्मात् पश्चिमे तालत्रयात् बहिः शङ्कुं संस्थाप्य पञ्चाङ्गुलवशेन सूत्रवर्त्मना चक्रवत् वृत्तं कृत्वा पूर्ववत् प्रकृतिं कुण्डानुगुण्येन मेखलात्रयं च कुर्यात्। अस्य मेखलास्थाने द्वादश अष्टौ वा दलानि कल्पितानि चेत् तदा पद्मकुण्डं भवति। मेखलास्थाने अराणि कल्पितानि चेत् चक्रकुण्डं भवति। तस्याः च मारुते शङ्कुं संस्थाप्य सार्धगोलकाचलाङ्गुसूत्रपातेन वृत्तं कृत्वा सूत्रागमं पञ्चधा विभज्य, शङ्कुं निधाय, पञ्चकोणवशेन सूत्राणि निपात्य, कुण्डानुगुण्येन प्रकृतिं मेखलात्रयं च कुर्यात्।

तस्याः च उत्तरे तालत्रयात् बहिः षण्णवत्यङ्गुलमानं वेदभागवशेन विभज्य तन्मानेन त्रिकोणं यथासूत्रं निपात्य, तथा विंशत्यङ्गुलं खात्वा कुण्डानुगुण्येन पूर्ववत् मेखलात्रयं कुर्यात्।

तस्याश्च ऐशाने शङ्कुं निधाय, सैकाग्निवेदाङ्गुलवशेन, सूत्रवर्त्मना वृत्तं कृत्वा, सूत्रागमं कलाङ्गुलवशेन अष्टधा विभज्य, शङ्कुं निधाय, कोणमध्यं यथा षडङ्गुलं भवति तथा अष्टसूत्रं निपात्य, पूर्ववत् कुण्डानुगुण्येन मेखलात्रयं च कुर्यात्।

कुण्डानां मध्यं अष्टदलपद्मं, कुण्डानां पश्चिमायां तलोत्सेधमेखलोपरि पञ्चाङ्गुलायामां अङ्गुलैः दशभिः षड्भिः द्व्यङ्गुलेन एकेन अङ्गुलेन वा मूलमारभ्य, क्रमेण विस्तीर्णां निम्नां मेखलायां चतुरङ्गुलायतत्र्यङ्गुलनहनषडङ्गुलमुखयुतां नालवत्तया काहलाकारवत् अश्वत्थपत्ररूपेण योनिं कुर्यात्।

पद्मकुण्डे पद्मं, योनिकुण्डे योनिं च वर्जयेत्। होता चेत् उदङ्मुखः यमस्य दिशि वा योनिं कल्पयेत्। मोक्षार्थी चेत् योनिं विना कुण्डं कुर्यात्।

"यावत्प्रमाणा रज्जुः स्यात् तावानेव आगमो भवेत्।
आगमार्धं तु शङ्कुः स्यात् अन्तरर्थे निरञ्जनम्॥
षण्णवत्यङ्गुलायामा सर्वकुण्डस्य कर्णिका॥"

इति वचनलक्षणानि सम्यक् ज्ञेयानि। एकमूर्तिविधाने अयुग्मानि एव, अथवा युग्मानि कुण्डानि कारयेत्।

मध्यवेदिकायाः पूर्वे दक्षिणे वा भागे सलक्षणां शयनाधिवासार्थं पूर्ववत् वेदिकां कारयेत्।

अथ तावत् स्रुक्स्रुवविधिः उच्यते—

सुवर्णादिलोहैः वा पालाशादियज्ञवृक्षैः वा स्रुक्स्रुवौ कारयेत्। स्रुक्दण्डं तु बाहुदण्डसमायतं सांगुलद्वितालायतं वा सर्वतः षडंगुलविस्तारं कृत्वा, तं गुणसंख्यया विभज्य, उपर्यंशं द्वेधा विभज्य, तयोः उपर्यंशं च भूतांशं कृत्वा, तत्र आद्यमंशं हित्वा उपरिस्थितवेदांशैः वराहवदनवत् अग्रं एकांगुलानाहं विधाय अधोविसृष्टैकांशेन सह स्वतृतीयांशावशिष्टार्धभागेन संयोजिते, तदा विस्तारायामसमं चतुरश्रं षडंगुलमितं भवति, एवं गलं कल्पयित्वा, तदधः नालं द्व्यंगुलविस्तारं, तत्र पार्श्वयोः अर्धांगुलायामविस्तारनिम्नयुतं कृत्वा,

अन्यत् सूत्रपातात् बहिः स्थितं शेषेण हित्वा, गलाधोवशिष्टांशं वृत्तं चतुरश्रं वा कल्पयित्वा, गलमध्ये तृतीयभागसम्मितं विस्तारायामसमं गाधसदृशं गर्तं वृत्तं वा कृत्वा,

गर्तबाह्यं त्रेधा विधाय, प्रथमवलये दलाष्टकं कृत्वा, मध्यांशं चतुर्धा विभज्य, आद्यं नाभिमण्डलं तस्य बहिः नेमिमण्डलस्य मध्ये, मण्डलद्वयं च एकीकृत्य,

तस्मिन् षट् वा दश वा इन्दीवरदलवत् अराणि कल्पयित्वा, अवशिष्टेन एकभागेन नेमिमण्डलं निर्माय, तत्कोणेषु चतुर्षु शंखान् कृत्वा बहिः मेखलां यवोन्नतां कृत्वा, चतुर्यवप्रमाणेन गर्तं आरभ्य अग्रान्तं सर्पिषः विवरं कृत्वा, तत्पृष्ठभागं कमठपृष्ठसदृक्षं[1] कूर्मपृष्ठसदृशं वा चतुरश्रं विधाय,

---

१ बृहत्कच्छपपृष्ठतुल्यं वा लघुकच्छपपृष्ठसमं।

आधारं विना अन्त्यं वलयत्रयाङ्कितं वृत्तं चतुरश्रं अष्टाश्रं वा कृत्वा, तदग्रं च यथापुरं कमलाकारं कल्पयेत्।

स्रुवस्य तु दण्डं हस्तमानं कृत्वा, तदग्रं द्व्यंगुल-विस्तारं तन्मध्ये नासिकापुटवत् अर्धांगुलविस्तारायामं वृत्तं गर्तद्वयमापाद्य, तदधः गर्तद्वयस्य मध्ये रेखिकां यवोन्नतां तयोः परितश्च अवशिष्टेन एकांगुलेन गलं च कल्पयित्वा, तस्य कण्ठे, यवमात्रोन्नतं वलययुगलं विधाय, परिशिष्टेन गोलांगुला-कृतिं कृत्वा मूलं द्व्यंगुलविस्तीर्णं कारयेत्।

मण्डपस्य द्वाराणां चतुष्टयेपि प्रागादिक्रमेण अश्वत्थ-उदुम्बर, प्लक्ष-वटवृक्षैः तेषु एकेन वा यथोक्तालाभे चन्दनद्रुमेण वा तोरणानि कुर्यात्।

तत्पादान् सप्तभिः पञ्चभिः वा अयुग्मैः हस्तैः आयतान् द्वाविंशांगुलघनान् वृत्तान् चतुरश्रान् वा कृत्वा, तदुपरि तदर्धेन आयताः तादृशानाहयुताः तथाविधाश्च पट्टिकाः कल्पयित्वा प्रतिपट्टिकं द्वितालमानानि अष्टांगुलानाहयुतानि त्रीणि त्रीणि कीलानि च निधाय, तोरणानां पादेषु पूर्णकुम्भदक्षिणावर्तशङ्ख-चक्रध्वजपटहकार्मुकनागान् च चित्रयेत्।

## अथ अष्टमङ्गलविधिः—

यथाविभवं हेमादिलोहजानि वा याज्ञीयवृक्षजानि वा क्रमेण द्वाविंशांगुलतदर्धद्व्यंगुलैः आयामविस्तारातिघनयुतानि सपीठानि फलकानि कल्पयित्वा, तेषु श्रीवत्सपूर्णकुम्भभेरी-दर्पणमण्डलमत्स्ययुग्मशङ्खचक्राणि, पद्मासनस्थितं गरुडं च,

द्वादशांगुलमानेन कल्पयित्वा, तेषां पार्श्वयोः मूर्धनि च चामर-प्रदीपछत्राणि लाञ्छयेत्।

बिम्बप्रमाणानुगुण्येन औदुम्बरस्नानपीठं नयनोन्मीलन-पीठजलाधिवासनासनादीन् च आचार्यमूर्तिपासनपादुकाः च उपकुम्भकलशकरकमणिकदीपस्तम्भघृतादिस्नपनद्रव्यचन्दनादि-सुगन्धविविधवस्तुसमित्पुष्पकुशविविधधान्यसुवर्णादिलोहरत्न-सवत्सगोप्रभृतीन् अन्यान् च संभारान् पूर्वं सम्पाद्य, तदनु आचार्यः यथाविधि प्रतिष्ठामारभेत।

इति श्रीवराहगुरुणा विरचितायां क्रियाकैरवचन्द्रिकायां
प्रतिष्ठोपकरणविधिः नाम
दशमः परिच्छेदः

---

## अथ एकादशः परिच्छेदः

# छायाधिवासजलाधिवासविधिः

पूर्वं शिल्पिभिः शास्त्रोक्तवर्त्मना बिंबे मान-उन्मान-प्रमाण-परिमाण-उपमान-लम्बमान-अभिधलक्षणयुते निर्मिते, स्थूल-सूक्ष्मेषु प्रतिमाङ्गेषु सुकृतेषु, कर्मार्चापीठिकायां रत्नादिन्यासं कृत्वा, शिल्पिनैव नयने च उन्मीलिते, ततः गुरुः यजमानेन सह रथकारं शिल्पिनः च, आभरणवस्त्राद्यैः वस्तुभिः तोषयेत्।

तेषु च निर्गतेषु, सदनमन्तर्बहिः च, मार्जनालेपनादिभिः संशोध्य, दर्भपुञ्जैः प्रज्वालितैः पर्यग्निकरणं च कृत्वा प्राकार-

गोपुरमण्डपानि च मार्जनालेपनादिभिः संशोध्य पञ्चगव्यैः पवमानादिसूक्तैः[1] संप्रोक्ष्य, गोघृतेन सर्वतः बहून् दीपान्

---

१ अथ पवमानसूक्तम्—

पवमानः सुवर्जनः पवित्रेण विचर्षणिः ॥ यः पोता स पुनातु माम् ॥१॥ पुनन्तु मा देवजना पुनन्तु मनवो धियः ॥ पुनन्तु विश्व आयवः ॥२॥ जातवेदः पवित्रवत्पवित्रेण पुनाहि मा ॥ शुक्रेण देव दीद्यदग्ने क्रत्वा क्रतु ठँ रनु ॥३॥ यत्ते पवित्रमर्चिषि अग्ने विततमन्तरा ॥ ब्रह्म तेन पुनीमहे ॥४॥ उभाभ्यां देव सवितः पवित्रेण सवेन च ॥ इदं ब्रह्म पुनीमहे॥५॥ वैश्वदेवी पुनती देव्यागाद्यस्यै बह्वीस्तनुवो वीतपृष्ठा ॥ तया मदन्तः सधमाद्येषु वय ठँ स्याम पतयो रयीणाम् ॥६॥ वैश्वानरो रश्मिभिर्मा पुनातु वातः प्राणेने शिरयोः मयो भूः ॥ द्यावा पृथिवी पयसा पयोभि ऋतावरी यज्ञिये मा पुनीताम् ॥७॥ बृहद्भिः सवितस्तृभिर्वर्षिष्ठैर्देव मन्मभिः ॥ अग्ने दक्षैः पुनीहि मा ॥८॥ येन देवा अपुनन्त येनापो दिव्यङ्कषः ॥ तेन दिव्येन ब्रह्मणा इदं ब्रह्म पुनीमहे ॥९॥ यः पावमानीरध्येति ऋषिभिः सम्भृतो रसः ॥ सर्वं ठँ सपूतमश्नाति श्वदितं मातरश्विनः ॥१०॥ पावमानीर्योऽध्येति ऋषिभिः सम्भृतो रसः ॥ तस्मै सरस्वती दुहे क्षीर ठँ सर्पिर्मधूदकम् ॥११॥ पावमानी स्वस्त्ययनी सुदुघाहि पयस्वती ॥ ऋषिभिः सम्भृतो रसः ब्राह्मणेष्वमृतं हितम् ॥१२॥ पावपानीर्दिशन्तु न इमं लोकमथो अमुम् ॥ कामान् समदर्धयन्तु नमः, देवीर्देवैः समावृताः ॥१३॥

उद्दीप्य, कालागरुप्रभृतिधूपद्रव्यैः सर्वतः धूपयित्वा, दूर्वाक्षत-सुधाचूर्णैः धाम समलंकृत्य,

ततः अपराह्णसमये, गुरुबिंबस्य, "मानादिन्यूनातिरेक-दोषशान्त्यर्थं शान्तिहोमं करिष्ये" इति सङ्कल्प्य, पुण्याहं वाचयित्वा,

विधिवत् अग्निं संस्कृत्य, साक्षतैः शमीपल्लवैः, "ओं भूः स्वाहा", "ओं भुवः स्वाहा", "ओं सुवः स्वाहा", "ओं महः स्वाहा", "ओं जनः स्वाहा", "ओं तपः स्वाहा", "ओं सत्यं स्वाहा" इति प्रत्येकं शतमाहुतीः चरुणा नृसूक्तेन[1] षोडशाहुतीः च, "ओं षौं नमः पराय परमेष्ठ्यात्मने स्वाहा", "ओं यां नमः पराय पुरुषात्मने स्वाहा", "ओं रां नमः पराय विश्वात्मने

---

पावमानीः स्वस्त्ययनी सुदुघाहि घृतच्युताः ॥ ऋषिभिः सम्भृतो रसः, ब्राह्मणेष्वमृतं हितम् ॥१४॥ येन देवाः पवित्रेण, आत्मानं पुनते सदा ॥ तेन सहस्रधारेण पावमान्यः पुनन्तु माम् ॥१५॥ प्राजापत्यं पवित्रं शतोद्याम ठँ हिरण्मयम् ॥ तेन ब्रह्मविदो वयं पूतं ब्रह्म पुनीमहे ॥१६॥ इन्द्रः सुनीतिः सह मा पुनातु सोम स्वस्त्या वरुणः समीच्या ॥ यमो राजा प्रमृणाभिः पुनातु जातवेदो मोर्जयन्त्या पुनातु ॥१७॥ ओं भूर्भुवः स्वः, तच्छंयोरावृणीमहे गातुं यज्ञाय, गातुं यज्ञपतये ॥ दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः ऊर्ध्वं जिघातु भेषजं शन्नो अस्तु द्विपदे शं चतुष्पदे । ओं शान्तिः शान्तिः शान्तिः ॥

---

१ नृसूक्तेन सहस्रशीर्षेत्तित्यादि मन्त्रेण ।

स्वाहा", "ओं षां नमः पराय निवृत्त्यात्मने स्वाहा", "ओं क्षां नमः पराय सर्वात्मने स्वाहा", इति प्रतिमासन्निधौ हुत्वा, तदनु,

"नमस्तुभ्यं भगवते जातवेदस्स्वरूपिणे।
नारायणाय हव्यस्य कव्यस्य च यथातथम्॥
भोक्त्रे यष्टव्यदेवानां आत्मने परमात्मने।
सन्निधत्स्व चिरं देव प्रतिमायां हिताय नः॥"

इतिमन्त्रेण, अधोक्षजमग्निस्थं देवं प्राञ्जलिः सन् उपस्थाय, अग्निं प्रणिपत्य सदर्भेण नवेन वाससा मूलमन्त्रेण[1] प्रतिमामाच्छाद्य,

तेनैव उत्तरीयं च वितीर्य, विष्णुगायत्र्या[2] अर्घ्यपाद्याचमनीयगन्धपुष्पधूपदीपाद्यैः अभ्यर्च्य, श्रीभूम्योस्तु "श्रीं श्रियै नमः", "ह्रीं भूम्यै नमः" इति तत्तन्मन्त्रेण····वस्त्राच्छादनादिदीपान्तैः अभ्यर्च्य, ब्रह्मादिपरिवाराणां च स्वस्वमन्त्रेण तथा कृत्वा,

छायाधिवाससिद्ध्यर्थं "रक्षाबन्धनकर्म करिष्ये" इति सङ्कल्प्य, सुवर्णादिपात्रे, खारिद्रोणतण्डुलवति[3] षष्ठ्युत्तरक्रमुकतच्चतुर्गुणनागवल्लीदलतदर्धकदल्यादिफलयुते, निष्कप्रमाणस्वर्णसूत्राणि यद्वा सप्तभिः पञ्चभिः वा तन्तुभिः कृतानि

---

१ ओं नमो नारायणाय। २–५६ पृष्ठे। ३–४ सेर का १ आढक, ८ आढक का १ द्रोण, ८ द्रोण का १ वाह, मुट्ठी भर का १ निकुञ्च, पाव भर का १ कुडव, १ सेर का १ प्रस्थ।

क्षौममयानि कार्पासमयानि वा सूत्राणि निधाय, अहतेन वाससा आच्छाद्य,

तत् परिचारकमूर्धनि विन्यस्य चामर व्यजनछत्रनृतगीत-वृहद्दीपैः साकं धामावरणानि ग्रामं वा प्रदक्षिणीकृत्य, बिम्बस्य पुरतः चतुरश्रं भूमिं गोमयेन अनुलिप्य, तत्र धान्यभारेण पीठं कृत्वा, तदुपरि तत्पात्रं निधाय, पुण्याहं वाचयित्वा, प्रोक्ष्य, "सहस्रार हुं फट्" इति मन्त्रेण सूत्राणि सप्तवारमभिमन्त्र्य, संपूज्य, बिम्बं संपूज्य हस्तयोः अंगुष्ठानामिकाभ्यां तानि गृहीत्वा,

त्र्यंबकं यजामहे सुगन्धिं पुष्टिवर्धनं" उर्वारुकमिव बन्धनात् मृत्योः मुक्षीय मामृतात्" इति मन्त्रेण चन्दनक्षोदेन (घृष्टचन्दनेन) अनुलिप्य,

"विश्वेत्ताते सवनेषु प्रवाच्यायाचकर्थमघवन्निन्द्रसुन्वते धारावतं यत् पुरसंभृतं वस्वपावृणोच्छरभाय ऋषिबन्धवे" इति मन्त्रेण, मूलमन्त्रेण वा,

देवस्य दक्षिणे, देव्याः वामे च हस्ते वद्ध्वा अस्त्रमन्त्रं शतवारं जप्त्वा,

"यों ब्रह्मा ब्रह्मण उज्जहार" इति घृतसूक्तेन अभिमन्त्र्य, "बृहत्सामक्षत्रभृत्" इति धूपपात्रभस्मना रक्षां कृत्वा,

अर्घ्यादिभिः देवं देव्यौ च अभ्यर्च्य, महापूपं निवेद्य, आचार्यः स्वस्य दक्षिणहस्ते कौतुकं[1] बद्ध्वा, देवं द्विषट्काक्षर-विद्यया[2] प्रणम्य, संस्तुत्य,

---

१ कौतुकं = मङ्गलसूत्रम् । २ अष्टाक्षरमन्त्रेण ।

देवस्य पुरतः भूमौ छायाधिवासार्थं धान्यपीठे सुवर्णादि-लोहजां मृण्मयीं वा जलद्रोणीं, तादृशं कटाहं वा, संस्थाप्य, गालितेन गन्धोदकेन आपूर्य, दर्भैः परिस्तीर्य, पुण्याहं वाचयित्वा, प्रोक्ष्य,

पूर्ववत् द्वारतोरणकुम्भान् अभ्यर्च्य, जलद्रोण्यादिजलं, "ओं यां नमः पराय पुरुषात्मने नमः" इति मन्त्रेण संशोष्य, "ओं रां नमः पराय विश्वात्मने नमः" इति मन्त्रेण दग्ध्वा, "ओं वां नमः पराय निवृत्त्यात्मने नमः" इति अयुतचन्द्रसम-प्रभं निवृत्तिमन्त्रं ध्यात्वा,

तद्विनिस्सृतैः अमृतैः पूरितां जलद्रोणीं विचिन्त्य, तस्मिन् आधारादिपद्मान्तं[1] योगपीठं संकल्प्य, अष्टाविंशति-दर्भकृतकूर्चे संहारक्रमं स्मरन्[2],

मूलमन्त्रेण हरिमावाह्य अभ्यर्च्य, कूर्चं जलद्रोण्यन्तर्जले, प्राक्छिरस्कं संहारक्रमेण शाययित्वा, "सशराय शार्ङ्गाय

---

१ योगपीठान्तर्गत आधारादि पद्मान्त—

(१) आधारशक्ति (२) मूलप्रकृति (३) जगदाधार श्रीकूर्म-भगवान (४) आदिशेष (५) भूलोक (६) श्रीवैकुण्ठ नामक लोक (७) श्री वैकुण्ठ नामक देश (८) श्री वैकुण्ठ नामक नगर (९) श्री वैकुण्ठ नामक विमान (१०) आनन्दमय नामक मण्डप (११) अनन्त (१२) धर्म (१३) ज्ञान (१४) वैराग्य (१५) ऐश्वर्य (१६) अधर्म (१७) अज्ञान (१८) अवैराग्य (१९) अनैश्वर्य (२०) पीठरूपधारी अनन्त (२१) पद्म। २ पृष्ठ ७३ में टिप्पणी।

नाराचाय हुं फट् सुदर्शनाय स्वाहा" इति मन्त्रेण चक्रमुद्रां[1] प्रदर्श्य,

श्रीभूम्योः त्रयोविंशतिदर्भकृतं, रुद्रवेधसोः पञ्चविंशति-दर्भकृतं, अन्येषां देवानां द्वाभ्यां कृतं कूर्चं पूर्ववत् यथाविधि तत्तन्मन्त्रेण संहारक्रमेण शाययित्वा, तद्दक्षिणे शालितण्डुलैः

---

१ चक्रमुद्रा—

स्पष्टौ प्रसारितौ हस्तौ परस्पर नियोजितौ
भ्रमणाच्चक्रवत्तौतु चक्रमुद्रेति कीर्तिता।

---

( पृष्ठ ७२ की टिप्पणी संख्या २ )

घ्राणपायुभ्यां गन्धतन्मात्रया सह पञ्चगुणां पृथ्वीमप्सु विलापयामि। जिह्वोपस्थाभ्यां रसतन्मात्रया सह चतुर्गुणा अपः तेजसि विलापयामि। चक्षुः पादाभ्यां रूपतन्मात्रया सह त्रिगुणं तेजो वायौ विलापयामि। त्वक्पाणिभ्यां स्पर्शतन्मात्रया सह द्विगुणवायुमाकाशे विलापयामि। श्रोत्रवाग्भ्यां शब्द-तन्मात्रया सहैकगुणं मनः सहितमाकाशं अहंकारे विलापयामि। अहंकारं महति विलापयामि महान्तं प्रकृतौ विलापयामि। प्रकृतिं तमसि विलापयामि। तमः परमात्मनि विलापयामि। ततः प्राणायामेनैकेन नाभिदेशस्थवायुना शरीरं शोषयामि। पुनः प्राणायामेनैकेन चक्राग्निज्वालोपबृंहितजठराग्निना शरीरं तत्वक्रमेण दाहयामि, शरीरभस्मनः जीवात्मानममृतधारया अभिषिञ्च्य ततः शरीरभस्म प्लावयामि— इति शरीरभस्म-प्लावनम् एतावत्पर्यन्तम् संहारक्रमः।

पीठं परिकल्प्य, तस्मिन् स्वर्णादिलोहमयं सकरकं महाकुंभं उपकुंभाष्टकं च मृण्मयं चेत् ससूत्रे वेष्टनं विन्यस्य सरत्नवस्त्र-कूर्चाश्वत्थपल्लवापिधानं कृत्वा, दर्भैः परिस्तीर्य, मध्यकुंभे ब्रह्माणं, करके सुदर्शनं, उपकुंभाष्टके च इन्द्रादीन् आवाह्य, अभ्यर्च्य, सर्वाङ्गीणेन नवेन वाससा प्रतिमां सम्यक् आच्छाद्य,

"रक्षोहण"[1] इति मन्त्रेण सिद्धार्थान् दिक्षु समन्ततः विकीर्य, तत्र दीपमनिर्वाणमारोप्य, तत्र ब्राह्मणेषु वेदेतिहास-पुराणादीन् पठत्सु,

गुरुः मन्दिरद्वारेषु "ओं सुदर्शनाय नमः" इति अभ्यर्च्य मूर्तिपैः सह आलयं प्रदक्षिणीकृत्य, बहिः निष्क्रामेत् ।

---

१ ओं रक्षोहणं वलगहनं वैष्णवीमिदमहन्तं वलगमुत्किरामि यम्मे निष्ट्यो यममात्यो निचखानेदमहन्तं वलगमुत्किरामि यम्मे समानो यमसमानो निचखानेदमहन्तं वलगमुत्किरामि यम्मे सबन्धुर्यमसबन्धुर्निचखानेदमहन्तं वलगमुत्किरामि यम्मे सजातो यमसजातो निचखानोत्कृत्याङ्किरामि ॥ (शु० य० ५।२३)

ओं रक्षोहणो वो वलगहनः प्रोक्षामि वैष्णवान्रक्षोहणो वो वलगहनोऽवनयामि वैष्णवान्रक्षोहणौ वां वलगहनाऽवस्तृणामि वैष्णवान्रक्षोहणौ वां वलगहना उपदधामि वैष्णवी रक्षोहणौ वां वलगहनौ पर्यूहामि वैष्णवी वैष्णवमसि वैष्णवाः स्थ ॥ रक्षोहा विश्वचर्षणिरभियोनि मयोहते ॥ (शु० य० ५।२५)

यस्य बिंबस्य साक्षात् जलाधिवासः न युज्यते, तस्य छायाधिवासः विहितः।

दारुलोहशिलामयानां तु बिंबानां साक्षादेव जलाधिवासः। तेष्वपि लोहजस्य बिंबस्य, पीठसंयोजनानन्तरं जलाधिवासं कुर्यात्।

ततः गुरुः संकल्प्य, पीठसंजोनार्थं शालिभारं वृत्ताकारं विधाय, तदुपरि तदर्धं तण्डुलं, तदुपरि तदर्धं तिलं च सान्तशान्तरवस्त्राच्छादनं विन्यस्य, तस्योपरि अष्टपत्रपद्ममालिख्य, तस्मिन् दर्भान् आस्तीर्य, प्रत्यग्रप्रागग्रवाससा आच्छाद्य, तस्मिन् सपद्मं केवलं वा पीठं विन्यस्य, दर्भैः परिस्तीर्य, तस्मिन् रत्नानि लोहानि च विष्णुगायत्र्या निक्षिप्य, विधिवत् अग्निं उपसमिध्य, विष्णुगायत्र्या आज्येन अष्टोत्तरशतं आहुतीः, चरुणा नृसूक्तेन षोडशाहुतीः च हुत्वा, ततः पुण्याहं वाचयित्वा, प्रोक्ष्य,

स्वस्थ मानसः परवासुदेवं ध्यायन्, मूलमन्त्रेण पीठे देवं समारोप्य, "प्रतिष्ठामि" इति मन्त्रं पठन् स्थपतिना, पीठबिंबसंयोगं दृढं कारयित्वा,

तेनैव नयनोन्मीलनं च कारयित्वा, तं च महता धनेन तोषयित्वा, ततः मानादिलक्षणन्यूनादिदोषशान्तिहोमं पूर्ववत् कृत्वा,

"नमस्तुभ्यं"[1] इति गाथामुदीर्य, पुण्याहं कृत्वा, बिंबशुद्ध्यर्थं धान्यपीठे ससूत्रवस्त्रकूर्चपल्लवापिधानं गोघृतापूरितं कुंभं विन्यस्य,

तस्मिन् द्विषट्काक्षरविद्यया, देवमावाह्य अभ्यर्च्य, तेन बिंबं मूलमन्त्रेण संस्नाप्य, ततः बिंबं हरिद्रामलकादिचूर्णैः उद्वर्त्य, पुरुषसूक्तेन उष्णोदकेन स्नापयित्वा, सदर्भनववाससा मूलमन्त्रेण प्रतिमां संवेष्ट्य, तेनैव उत्तरीयं च दत्वा,

अर्घ्यादिभिः अभ्यर्च्य, "जलाधिवासार्थं रक्षाबन्धनकर्म करिष्ये" इति संकल्प्य, पूर्ववत् प्रतिसरबन्धं कृत्वा,

देवं "उत्तिष्ठ ब्रह्मणस्पते"[2] इति मन्त्रेण उत्थाप्य, "भद्रं कर्णेभिः"[3] इति रथादिकं यानमारोप्य, बृहद्रथन्तरपुरुषसूक्त-

---

१ नमस्तुभ्यं भगवते जातवेदः स्वरूपिणे ।
नारायणाय हव्यस्य कव्यस्य च यथातथम् ॥१॥
भोक्त्रे यष्टव्यदेवानामात्मने परमात्मने ।
सन्निधत्स्व चिरं देव प्रतिमायां हिताय नः ॥२॥
स्वागतं देवदेवेश विश्वरूप नमोऽस्तुते ।
शुद्धेऽपि त्वदधिष्ठाने शुद्धिं कुर्मः क्षमस्व ताम् ॥३॥

२ ओं उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे ॥
उपप्रयन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा ॥

३ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवा ठँ सस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥
शु० य० २५।२१

नारायणानुवाकशाकुनरक्षोघ्नसूक्तानि पठद्भिः मूर्तिपैः अन्यैः वेदविद्भिः पाण्डरातपत्रसितचामरचीनांशुकछत्रबर्हबर्हिमयध्वज-कल्याणव्यजनबहुविधनृत्तगीतवाद्यविशेषादिनानाविधोपचारैः च साकं ग्रामधामादिकं प्रदक्षिणी कृत्य,

जलाधिवासदेशान्तमासाद्य, जलसमीपे प्रपां कल्पयित्वा, तत्र प्रतिमां, प्राङ्मुखमुदङ्मुखं वा आसने विनिवेश्य, जल-मध्ये बहुस्तंभयुतां प्रपां कल्पयित्वा, चतुर्द्वारयुतां चतुर्वन्दन-मालिकावितानध्वजदर्भमालामुक्तादामस्रक्दीपनानाफलालंकृतां विधाय,

"जलाधिवासकर्म करिष्ये" इति सङ्कल्प्य, पूर्ववत् पुरुष-मन्त्रेण तज्जलं संशोष्य, विश्वमन्त्रेण दग्ध्वा, निवृत्तिमन्त्रेण अमृतकल्पं विचिन्त्य, पुण्याहं वाचयित्वा प्रोक्ष्य, तस्मिन् चतुरश्रं सास्तरणं सोपधानं नवं महापीठं विन्यस्य, तस्मिन् आधारादिपद्मान्तं योगपीठं सङ्कल्प्य अभ्यर्च्य, तत्र द्वारतोरण-कुंभान् संस्थाप्य, विधिवत् संपूज्य, शाकुनसूक्तपाठकैः ब्राह्मणैः, मूर्तिपैः च साकं आचार्यः,

"उत्तिष्ठ" इति मन्त्रेण बिंबमुद्धृत्य, "भद्रं कर्णेभिः" इति जलस्थितपीठे निवेश्य, संहारक्रमं स्मरन्, बिंबं उदङ्मुखं प्राक्छिरसं तस्मिन् शाययित्वा, पूर्ववत् धान्यपीठे रक्षार्थं कुंभकरककलशान् सलक्षणान् संस्थाप्य,

तेषु पूर्ववत् ब्रह्मसुदर्शनेन्द्रादीन् आवाह्य अभ्यर्च्य, तानपि बिंबदक्षिणे जले यथाक्रमं निवेश्य, "ओं सशराय

शार्ङ्गाय नाराचाय हुं फट् सुदर्शनाय स्वाहा" इति मन्त्रेण चक्रमुद्रां, "ओं नमो भगवते रं प्रलयकालानलाय हुं फट्" इति मन्त्रेण अग्निप्राकारमुद्रां[1] च प्रदर्श्य, पूर्वादिदिक्षु ऋगादीन् चतुरः वेदान् कोणेषु इतिहासपुराणानि च ब्राह्मणेषु पठत्सु, अनिर्वाणान् दीपान् आरोप्य, तीरे नानावाद्यानि आघोषयेत्।

एवं त्रिरात्रं एकरात्रं वा यामार्धं वा जले अधिवासयेत्। तदारभ्य बिंबोत्थापनान्तं तस्मिन् जले स्नानपानादिकं कर्म न कैश्चिदपि कार्यम्।

गृहार्चास्थापने तु सद्य एव कुर्यात्।

जलाधिवासनयनोन्मीलनशयनाधिवासानां च न कालः विधीयते।

महाप्रतिष्ठायां तु प्रदोषे जलाधिवासं, महानिशि शयनं दिवा प्रतिष्ठां च कुर्यात्।

नदीषु दीर्घिकायां वा तटाके निर्झरेऽपि वा।
जलाधिवासनं कुर्यात् प्रसन्ने सलिले तथा॥

---

१ अग्निप्राकारमुद्रा—

पद्माकारौ करौ कृत्वा अंगुष्ठौ च कनिष्ठिके॥
संमील्य चाग्रदेशात्तु कर्णिकेव यथा द्विज॥
तर्जन्यादित्रयं शेषमूर्ध्वगं च करद्वयात्।
असंलग्नं तु निक्षिप्तं मुद्राग्नेः सं प्रकीर्तिता॥
जयाख्य संहिता पृ० १५०

अल्पतोये श्मशानान्ते लवणोदक दूषिते।
कषाये कटुके चैव तिक्ते फेनश्च दूषिते॥
चैत्यवृक्षसमीपे च नीचैरध्यासिते तथा।
ऊषरे शैवलयुते वर्णान्तरयुते तथा॥
एवमादिषु दुष्टेषु प्रतिमां नाधिवासयेत्।
नद्याद्यभावे बिंबस्य जलाधिवसनं भवेत्॥
जलद्रोण्यां कटाहे वा समुद्धृत्य महज्जलम्।
यथासंभवमन्यस्मिन् मृण्मयादौ नदिष्यते॥
सद्यो वा तोयवास च पुरस्तादधिवासनात्।

इति श्रीवराहगुरुणा विरचितायां क्रियाकैरवचन्द्रिकायां
जलाधिवासछायाधिवासविधिः नाम
एकादशः परिच्छेदः

---

अथ द्वादशः परिच्छेदः

## वास्तुयागनयनोन्मीलनविधिः

### तत्र वास्तुहोमः—

एवं प्रतिमां विधिवत् अधिवास्य, प्रभाते कृतकृत्यो गुरुः, यजमानेन सह मण्डपं प्रविश्य, तस्मिन् दक्षिणपार्श्वे विकस्तारं वास्तुनाथं विलिख्य परिस्तीर्य,

"वास्तुहोमं करिष्ये" इति सङ्कल्प्य, पुण्याहं वाचयित्वा प्रोक्ष्य, दर्भसप्तककृतं कूर्चं निक्षिप्य, "ओं वं वास्तुपुरुषाय नमः आगच्छागच्छ" इति आवाह्य, वास्तुनाथं गन्धादिभिः अभ्यर्च्य, वास्तुनाथस्य शिरसि "ओं अंशुमालिने नमः" दक्षिणतः बाहुमूले "ओं झषध्वजाय नमः" कूर्परे "ओं कुमाराय नमः",

हस्ते "ओं विनायकाय नमः" पादयोः "ओं अश्विनीदेवताभ्यां नमः" मध्ये "ओं चन्द्रमसे नमः" सव्यतः हस्ते "ओं दुर्गायै नमः" कूर्परे "ओं सप्तमातृभ्यः नमः" बाहुमूले "ओं स्थाणवे नमः" हृदये "ओं विष्णवे नमः" नाभौ "ओं ब्रह्मणे नमः" तत्परितश्च, अष्टसु दिक्षु क्रमेण,

"ओं लं इन्द्राय नमः", "ओं रं अग्नये नमः", "ओं हं यमाय नमः", "ओं षं निरृतये नमः", "ओं वं वरुणाय नमः", "ओं यं वायवे नमः", "ओं सं सोमाय नमः", "ओं शं शंकराय नमः" वास्तुनाथस्य उत्तरे, "ओं क्षं क्षेत्रपालाय नमः" इत्यावाह्य अभ्यर्च्य,

वास्तुनाथस्य पश्चिमे देशे विधिवत् अग्निं उपसमिध्य तस्मिन् तं आवाह्य, पञ्चोपनिषन्मन्त्रैः सर्पिषा सहस्रं शतं वा आहुतीनां हुत्वा,

ततः, "ओं वास्तुनाथाय स्वाहा" इति सहस्रं शम्यपामार्गखदिरसमिद्भिः आज्येन च प्रत्येकं, चरुणा नृसूक्तेन षोडशाहुतीश्च हुत्वा,

तदनु 'ओं अंशुमालिने स्वाहा,' 'ओं झषध्वजाय स्वाहा, 'ओं कुमाराय स्वाहा', 'ओं विनायकाय स्वाहा,' 'ओं अश्विनी-देवताभ्यां स्वाहा,' 'ओं चन्द्रमसे स्वाहा', 'ओं दुर्गायै स्वाहा,' 'ओं सप्तमातृभ्यः स्वाहा,' 'ओं स्थाणवे स्वाहा,' 'ओं विष्णवे स्वाहा,' 'ओं ब्रह्मणे स्वाहा,' इति चरुणा आज्येन च, सकृत् सकृत् हुत्वा, इन्द्रादिदेवेभ्यः क्षेत्रपालाय च नमोन्तैः स्वस्व-मन्त्रैः बलिं दत्त्वा, वास्तुनाथमुद्वासयेत् ।

अनर्चिते वास्तुदेवे कृतं कर्म आसुरं भवेत् ।
तस्मात् सर्वप्रयत्नेन वास्तुनाथं समर्चयेत् ॥

## नयनोन्मीलनम् —

अथ मण्डपं मार्जनालेपनप्रोक्षणादिभिः संशोध्य, सुधा-चूर्णाक्षतादिभिः तद्भुवमलङ्कृत्य, अस्त्राभिमन्त्रितान् सिद्धार्थान् सर्वतः दिक्षु विकीर्य,

ततः नास्तिकभिन्नमर्याददेवब्राह्मणनिन्दकपापरोगयुतनि-न्दितपिशुनपाषण्डहीनवृत्तिप्रतिलोमसमत्सरलुब्धमूर्खाद्यान् अ-विदुषः मर्त्यान् च बहिः निर्वास्य,

स्तंभवेष्टनवितानमुक्तादामतोरणदर्भमालाफलपुष्पाक्षता-द्यैः मण्डपमलङ्कृत्य, तत्र चतुर्दिक्षु तोरणस्थापनार्थं द्वितालम-वटं खात्वा, प्राच्यामश्वत्थतोरणं, याम्ये औदुंबरं, पश्चिमे न्यग्रोधजं, उत्तरे प्लाक्षं च तोरणं संस्थाप्य, सर्वतः दिक्षु,

आनद्ध ततसुषिरघनाभिधचतुर्विधवाद्यविशारदैः अन्यैः वेदविद्भिः ब्राह्मणैः च मुखरितं, बहुप्रदीपसाङ्कुरपालिकाचन्द-

नागरुकर्पूरधूपालङ्कृतं मण्डपं कारयित्वा,

ततः अपराह्णे गुरुः स्वयमुदकात् बिम्बमुत्थाप्य, तीरे विष्टरे प्राङ्मुखं विन्यस्य कुम्भकलशान् च जलात् उद्धृत्य, तत्तद्देवताः उद्वास्य बिम्बं वारिभिः प्रक्षाल्य, लोहजं चेत् तिन्त्रिणीफलरसेन संशोध्य प्रक्षाल्य, वस्त्राभरणगन्धाद्यैः अलङ्कृत्य यथापूर्वं बिम्बं यानमारोप्य, सतूर्यमङ्गलघोषं यागमण्डपं प्रापय्य,

तत्रोत्तरं भागे विष्टरे विनिवेशयेत् ।

तदनु मूर्तिपैः साकं आचार्यः गर्भगेहं प्रविश्य, पूर्वाधिवासितं कूर्चं कटाहादि जलात् समुद्धृत्य, कुम्भदेवताश्च उद्वास्य कूर्चस्थं बिम्बे विचिन्त्य, तस्मात् वस्त्राभरणमाल्यानि व्यपोह्य, 'नयनोन्मीलनकर्म करिष्ये' इति सङ्कल्प्य, पुण्याहं वाचयित्वा, नयनोन्मीलनोपकरणानि प्रोक्ष्य, वक्ष्यमाणेन विधिना ध्रुवबेरस्य, श्र्यादीनां च पृथक् नयनोन्मीलनं कृत्वा,

अष्टधान्यानि गाः कन्यकाश्च दर्शयित्वा, साक्षात् स्नपनकरणायोग्यविषये वक्ष्यमाणविधिना सप्तदशकलशान् घृतादिद्रव्यपूरितान् संस्थाप्य,

तत्तद्देवताः आवाह्य अभ्यर्च्य, सकूर्चे दर्पणे देवमावाह्य, तैः संस्नाप्य, श्र्यादीनां तु पृथक् नवभिः कलशैः, ब्रह्मेशयोः सप्तभिः, ऋषीणां पञ्चभिः, देवानां त्रिभिः एकेन वा स्नपनं कृत्वा,

दर्पणस्थं बिंबे विचिन्त्य, वस्त्रादिनीराजनान्तैः उपचर्य, ध्रुवबेरहृदये दीप्रं मणिप्रभं द्विषडर्णं अनुध्यायन् विन्यस्य,

श्यादीनां च एवं विधाय, ध्रुवबिंबं श्यादिदेवीश्च कम्बलैः आच्छाद्य,

तस्य पुरतः धान्यपीठे सौवर्णं राजतं च पात्रयुग्मं आढकपरिपूर्यं पूर्वपश्चिमस्थितं विधाय, क्रमेण मध्वाज्यपूरितं कृत्वा, तादृश्यौ शलाकिके च अष्टाङ्गुले तयोः विन्यस्य, नवैः वासोभिः आच्छाद्य, सङ्कल्प्य, पुण्याहं वाचयित्वा, तत्सर्वं संप्रोक्ष्य, मधुपात्रे 'ओं हं सूर्याय नमः,' इति, आज्यपात्रे 'ओं सं चन्द्रमसे नमः,' इति च आवाह्य अभ्यर्च्य, 'मधुवातेति'[1] मधु, 'सविराजं पर्येति' इति वा 'शुक्रमसीति'[2] वा आज्यं च अभिमन्त्र्य, तत्परितः नीवारशालिमुद्गश्यामाकप्रियंगुयवतिलगोधूमानि

पृथक् पात्रेषु तांबूलनारिकेलकदलीफलानि च, पुरतः गाः कन्यकाः च संस्थाप्य, सवेदवाद्यघोषं मध्वक्तमुखया सौवर्णशलाकया 'चित्रं देवानां'[3] इति दक्षिणं सर्पिरक्तमुखया राजतशलाकया, 'तच्चक्षुः'[4] इति वामं च लोचनमुन्मील्य,

---

१ मधुव्वाता ऋतायते मधु क्षरन्ति सिन्धवः।
माध्वीर्नः सन्त्वोषधीः ॥

२ शुक्रमस्यमृतमसि धाम नामासि प्रियं देवानामनाधृष्टं देवयजनमसि।

३ चित्रन्देवानामुदगादनीकं चक्षुर्मित्रस्य व्वरुणस्याग्नेः ॥
आप्रा द्यावापृथिवी अन्तरिक्ष ठँ सूर्य आत्मा जगतस्तस्थुषश्च।

४ तच्चक्षुर्देवहितं पुरस्ता च्छुक्रमुच्चरत् ॥ पश्येम शरदः शतं जीवेम शरदः शत ठँ शृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात्।

आच्छादनपटं व्यपोह्य, गुरवे पात्रयुग्मं शलाकिकं अष्टधान्यानि गाः च, 'गोविन्दः प्रीयतां,' इति दत्त्वा, पुनः अपि जीवाजीवात्मकैः धनैः तोषयेत् ।

इति वराहगुरुणा विरचितायां क्रियाकैरवचन्द्रिकायां
वास्तुयागनयनोन्मीलनविधिः नाम
द्वादशः परिच्छेदः

---

## अथ त्रयोदशः परिच्छेदः

# कर्माङ्गस्नपनविधिः

अथ तावत् आचार्यः बिंबशुद्ध्यर्थं 'स्नपनकर्म करिष्ये' इति सङ्कल्प्य, पुण्याहं वाचयित्वा,

प्रतिसरकर्म च पूर्ववत् विधाय, अधमाधमस्नपनोपयुक्त-घृतादिकषायांतस्नपनद्रव्याणि, अर्घ्यादिदीपांतपूजाद्रव्याणि, अन्यानि कलशधान्यादीनि द्रव्याणि पूर्वं संपाद्य,

बिंबस्य पुरतः चतुरश्रं गोमयेन अनुलिप्य, तत्र चन्दनार्द्राणि सूत्राणि प्रागग्राणि उदगग्राणि च षट् निपात्य तेषु पञ्चविंशतिपदेषु मध्ये नव पदानि तत्परितः च अष्टदिक्षु पदाष्टकं च कुंभस्थापनार्थं विसृज्य, शेषाणि सम्मृज्य,

कुम्भास्पदसप्तदशकोष्ठेषु प्रत्येकमाढकं,[1] तदर्धं प्रस्थं वा व्रीहीणां, तत्तुर्यांशानि तण्डुलानि, तत्तुर्यांशानि तिलानि च उपर्युपरि क्रमेण विन्यस्य, तेषु पद्मानि विलिख्य, द्वे द्वे दर्भाग्रे निक्षिप्य, सौवर्णान् राजतान् ताम्रान् वा यथाविभवविस्तरं मृण्मयान् वा द्रोणपरिपूरकान् कुम्भान् विष्णुगायत्र्या प्रक्षाल्य,

मृण्मयान् 'इन्द्रं नत्वेति' तन्तुना आवेष्ट्य कलशस्थापन-मेदिन्याः पश्चिमभागे कलशाधिवासार्थं धान्यपीठं विधाय,

तस्योपरि विश्वमन्त्रेण प्रागग्रान् उदगग्रान् वा कुशान् आस्तीर्य, तेषु प्राङ्मुखः उदङ्मुखो वा कुम्भान् 'ओम्' इत्यधो-मुखान् विन्यस्य, तेषु परमेष्ठिमन्त्रेण त्रीन् त्रीन् दर्भान् आस्तीर्य, पुरुषमन्त्रेण अर्घ्यजलेन प्रोक्ष्य, विश्वमन्त्रेण अक्षतान् विकीर्य,

निवृत्तिमन्त्रेण तान् उत्तानीकृत्य, 'स्नपनार्थं होष्ये,' इति सङ्कल्प्य, विधिवत् अग्निं संसाध्य, तस्मिन् विष्णुगायत्र्या आज्येन अष्टोत्तरशताहुतीः हुत्वा, अवशिष्टाज्येन सर्वमन्त्रेण स्नपनद्रव्याणि संसिच्य,

---

१ अस्त्रियामाढकद्रोणौ खारी वाहो निकुञ्चकः ॥
कुडवः प्रस्थ इत्याद्याः परिमाणार्थकाः पृथक् ॥
(अ० को० २।९।८८)

४ऽ एक आढक, ८ आढक का एक द्रोण, ८ द्रोण का एक वाह, मुट्ठी भर का एक निकुञ्च, पाव भर का १ कुडव, १ सेर का एक प्रस्थ।

कलशस्थापनवेदिकामध्ये कोष्ठेषु कुम्भस्थानेषु मध्यमं कुम्भं घृतेन आपूर्य, विष्णुगायत्र्या विन्यस्य,

तत्पूर्वकुम्भं उष्णोदक युतं, तदाग्नेये माणिक्यपद्मराग-नीलवज्रपुष्य प्रवालमौक्तिकमरकतवैदूर्यरत्नपूरितं कुम्भं,

घृतकुम्भस्य याम्ये कदलीदाडिमचूतामलकबिल्वनारि-केलपनसमातुलुङ्गफलैः भिन्नैर्युतं कुम्भं,

घृतस्य नैर्ऋतदिशि सुवर्णरजत ताम्रसीसत्रपुकंस्याय-स्सारैः प्रत्येकं निष्कमात्रैः पूरितं कुम्भं,

घृतस्य पश्चिमदिशि रजनीसूर्यवर्तिनीसहदेवी शिरीष-सदाभद्रकुशाग्राभिधमार्जनद्रव्यैः पृथक् मुष्टिमात्रैर्युतं कुम्भं,

घृतस्य मारुतदिशि चन्दनकुष्ठकुङ्कुमागरुउशिरह्रीवेर गिरिसंभवमांसी मुराख्यगन्धद्रव्यैः प्रत्येकं पलमात्रैः युतं कुम्भं, घृतस्य उत्तरे नीवारवेणुशालिप्रियङ्गुयवकङ्कुषाष्टिक गोधूम-तण्डुलैः पृथक् मुष्टिमात्रैः द्रव्यैः पूरितं कुम्भं,

घृतस्य ऐशानदिशि यववेणुयवव्रीहिभिः पृथक् कुडुबमानैः युतं कुम्भं च संस्थाप्य,

ब्रह्मस्थानस्थितकुम्भनवकस्य प्राच्यां दिशि तुलसीपद्म दूर्वाक्षतश्यामाकविष्णुपर्णीबिल्वपत्रैः मुष्टिमात्रैः चन्दनेन पलमात्रेण च युतं पाद्यकुम्भं,

तद्दक्षिणे सिद्धार्थाक्षतकुशाग्रफलतिलपुष्पैः पृथक् मुष्टिमात्रैः त्रिनिष्कमात्र चन्दनेन च युतं अर्घ्यकुम्भं,

तत्पश्चिमे तक्कोलचंपकमुकुलकर्पूरजातीफलैलालवङ्गत्व-क्चन्दनपुष्पैः पलार्धप्रमाणैः युतं उपस्पर्शनकुम्भम्,

तदुत्तरे पञ्चगव्ययुतं कुम्भं [पञ्चगव्यानि तु स्नपने "दधि द्विगुणमाधारात् पीयूषं त्रिगुणं ततः। षड्गुणं मूत्रमेतस्मात् शकृद्वारि चतुर्गुणम्॥" इति प्रमाणेन गव्यानि पञ्च पृथक् मृद्भाजने गृहीत्वा, शकृन्मूत्रदधिघृतपयांसि परमेष्ठिपुरुषविश्वनिवृत्तिसर्वमन्त्रैः यथाक्रमं यथा सर्वमपि द्रोणमानं तदर्धं आढकं वा भवेत् तथा आनीय कुम्भे सर्वं एकीकृतम्] संस्थाप्य,

मध्यनवकस्य आग्नेये दधिकुम्भं, नैर्ऋते क्षीरकुम्भं, वायव्ये मधुकुम्भं, ऐशाने शमीपलाशखदिरबिल्वाश्वत्थविकंकतन्यग्रोधत्वग्भिः पलार्धपरिमाणाभिः पूरितं कषायकुम्भं च संस्थाप्य,

सप्तविंशतिदर्भकृतकूर्चं घृतकुम्भे, सप्तभिः पञ्चभिः त्रिभिः वा दर्भैः कृतान् कूर्चान्, उपकुम्भेषु अवागग्रं यथाकण्ठमानं विन्यस्य 'ओं नमः चक्रराजाय" इति शरावैः पिधाय,

'युवा सुवासाः"[1] इति मन्त्रेण अहतवस्त्रैः तेषां कण्ठवेष्टनं कृत्वा, दर्भैः परिस्तीर्य, तेषु घृतोष्णोदक फलमार्जनाक्षतरत्नलोहगन्धयवपाद्यार्घ्याचमनपञ्चगव्यदधिक्षीरमधुकषायकुम्भेषु परवासुदेवपुरुषसत्याच्युतअनन्तकेशवनारायणमाधवगोविन्द - विष्णुमधुसूदनत्रिविक्रमवामनश्रीधरहृषीकेशपद्मनाभदामोदरान् स्वस्वमन्त्रेण आवाह्य संपूज्य,

---

१ ओं युवा सुवासाः परिवीत आगात् स उ श्रेयान् भवति जायमानः तन्धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः॥

पूर्वसंसाधिताग्नौ मूलेन कलशसंख्यया आज्याहुतीः चरुणा नृसूक्तेन षोडशाहुतीः पुनः आज्येन कलशदेवतामन्त्रैः पृथक् सहस्रं शतं अष्टाविंशतिः अष्टौ वा आहुतीश्च हुत्वा संपाताज्यं स्पर्शमन्त्रेण कुम्भेषु संसिच्य, अग्निस्थमुद्वास्य,

आचार्यः मूर्तिपैः वेदपारगैः ब्राह्मणैश्च बिम्बस्य अन्तिकं गत्वा, 'उत्तिष्ठ ब्रह्मणस्पते'[1] इति मन्त्रेण बिंबं उत्थाप्य, 'भद्रं कर्णेभिः'[2] इति स्नानासनवेदिकायां प्राङ्मुखं विवेश्य,

तदनु पुण्यक्षेत्र नदीतीरपर्वतपुलिनह्रदनिर्झरसंगमाशोष्य-वेदिकोर्वरशालिक्षेत्रदेवखातवृषशृङ्गहस्तिदन्तवराहघृष्टवल्मीक - कुलीरावसथनलिनीदीर्घिकासु स्थिताः एकोनविंशतिं मृत्तिकाः पृथक् पात्रे समानीय, पुण्याहं वाचयित्वा प्रोक्ष्य, बिंबं अर्घ्याद्यु-पचारैः उपचर्य,

पुण्यक्षेत्रजैकोनविंशतिमृत्तिकाभिः 'मूर्धानं दिवो अरतिं'[3] इति मन्त्रेण बिंबं मूर्धादिपादान्तं आलिप्य, शुद्धोदकेन 'इमं मे वरुण'[4] इति मन्त्रेण प्रक्षाल्य, अनन्तरं बिंबं अर्घ्यादिभिः उपचर्य,

---

१ ओं उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे ॥
उपप्रयन्तु मरुतः सुदानव प्राशूभर्वा सचा ॥
२ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमा क्षभि यर्जत्राः ।
स्थिरैरङ्गैस्तुष्टुवा ठं सस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥
३ मूर्धानन्दिवोऽअरतिं पृथिव्या वैश्वानरमृत आजातमग्निम् ।
कवि ठं सम्राजमतिथिञ्जनाना मासन्ना पात्रञ्जनयन्त देवाः ।
४ इमम्मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युराचके ॥

'इदं विष्णुः,'[1] इति पाद्यकुम्भेन, 'आपोहिष्ठा,'[2] इति अर्घ्यकुम्भेन, 'इमं मे वरुण'[3] इत्युपस्पर्शनेन, 'पवित्रं ते, इति पञ्चगव्येन, 'दधिक्राविण्ण,'[4] इति दध्ना, 'पयोव्रत' साम्ना पयसा, 'मधुवाता'[5] इति मधुना, 'यज्ञायज्ञ,' इति कषायांबुना, 'मानस्तोके'[6] इति उष्णतोयेन, 'वषट् ते विष्णो', इति मणिवारिणा, 'याः फलिनीः,'[7] इति फलाम्बुना, 'हिरण्यगर्भः[8] समवर्तत' इति लोहवारिणा, 'शन्नोदेवीः'[9] इति मार्जनांभसा,

---

१ इदम्विष्णुर्विचक्रमेत्रेधानिदधे पदम्। समूढमस्य पा ठँ सुरे ॥

२ आपो हिष्ठा मयोभुवस्तान ऊर्जे दधातन। महेरणाय चक्षसे॥

३ इमम्मे वरुण श्रुधी हवमद्या च मृडय। त्वामवस्युराचके ॥

४ दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्य व्वाजिनः। सुरभिनो मुखा करत्प्रणऽआयूठँषितारिषत् ॥

५ मधुव्वाता ऋतायते मधुक्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः ॥

६ मानस्तोके तनये मानऽआयुषिमानो गोषु मानो अश्वेषु रीरिषः मा नो वीरान्‌ रुद्रभामिनो बधीर्हविष्मन्तः सदमित्त्वा हवामहे।

७ याः फलिनी र्या अफला अपुष्पा याश्च पुष्पिणीः बृहस्पति प्रसूतास्तानो मुञ्चन्त्व ठँ हसः ॥

८ हिरण्यगर्भः समवर्तताग्रे भूतस्यजातः पतिरेकऽआसीत। स दाधार पृथिवीं द्या मुतेमाङ्कस्मै देवाय हविषा विधेम ॥

९ शन्नो देवी रभिष्टय आपो भवन्तु पीतये। शंय्योरभिस्रवन्तु नः ॥

'गन्धद्वारा'[1] इति गन्धाम्भसा, 'त्रातारमिन्द्रम्'[2] इति अक्षत-वारिणा, 'इदं विष्णुः' इति यवांभसा, 'घृतस्नात' इति घृतेन च,

एतैः मन्त्रैः एतैः कलशैः पाद्यपूर्वं घृतान्तं प्रतिद्रव्यघटा-स्रवं उपस्नानस्रोतवस्त्रोत्तरीयार्घ्यपाद्यआचमनगन्धपुष्पधूपदीप-प्रदानसहितं अभिषिच्य,

अनन्तरं पुरुषसूक्तेन[3] सहस्रधारया शुद्धोदकेन अभि-षिच्य, वस्त्रादिभिः अलङ्कृत्य, अर्घ्यादिभिः उपचर्य, फलादिकं निवेद्य, ताम्बूलं च समर्पयेत्।

घृतस्य उपस्नानमुष्णोदकेन।

इति वराहगुरुणा विरचितायां क्रियाकैरवचन्द्रिकायां
सप्तदशकलशस्नपनविधिः नाम
त्रयोदशः परिच्छेदः



---

१ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्व-भूतानां तामिहोपह्वये श्रियम्।

२ त्रातारमिन्द्रमवितारमिन्द्र ठ हवे हवे सुहव ठँ सूरमिन्द्रम्॥ ह्वयामिशक्रम्पुरुहूतमिन्द्र ठँ स्वस्तिनो मघवा धात्विन्द्रः।

३ सहस्रशीर्षेत्यादि मन्त्रेण।

## अथ चतुर्दशः परिच्छेदः

# शयनाधिवास-कुम्भस्थापनविधिः

अथ तावत् आचार्यः मण्डपमध्ये वेदिकायां चक्राब्जमण्डलं यथाविधि वर्तयित्वा, तत्पूर्वदक्षिणे वामभागे शय्यावेदिं कृत्वा, द्वादशार्णमनुना[1] गन्धोदकेन प्रोक्ष्य,

तस्यां प्रागग्रान् उदगग्रान् वा दर्भान् आस्तीर्य तत्र व्रीहीणां पञ्चभारं तण्डुलानां तदर्धं तिलानां तदर्धं च अन्तरान्तरा प्रत्यग्राच्छादनान्तरितं विस्तीर्य, तिलोपरि पद्मं विलिख्य, तदुपरि पूर्ववत् दर्भान् आस्तीर्य तस्योपरि क्रमेण, वैयाघ्रचर्ममृद्वास्तरण तूलिकारत्नकम्बलक्षौमचित्रवस्त्रशुक्लवसनानि तदुपरि शयनाङ्गानि उपधानानि सपादगण्डुकानि निधाय, दर्भैः परिस्तीर्य तां कस्तूरिकादिगन्धद्रव्याधिवासितां सुगन्धपुष्पास्तरणां वितानपुष्पमालादिनानालङ्कारशोभितां कृत्वा,

आचार्यः पुरुषसूक्तादिपाठकैः ब्राह्मणैः ऋत्विग्भिः च तूर्यघोषपुरस्सरं बिम्बं, 'उत्तिष्ठ,'[2] इति मन्त्रेण, तस्मात् उत्थाप्य, बहिः कुण्डं यथा प्रादक्षिण्येन शनकैः शय्यावेदिभुवं नीत्वा,

---

१ ओं नमो भगवते वासुदेवाय।

२ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे। उप प्रयन्तु मरुतः सुदानव प्राशूर्भवा सचा॥

तस्यां आधारादिपद्मान्तं पीठं सङ्कल्प्य, अभ्यर्च्य, 'यद्वैष्णवम्,' इति मन्त्रं, 'विश्वतश्चक्षुः,'[1] इति मन्त्रं च उच्चरन् प्राक्छिरः दक्षिणाननं मन्दिराननं दक्षिणाशाशिरस्कं वा बिम्बं शय्यायां शाययित्वा, 'युवा सुवासाः,'[2] इति मन्त्रेण कम्बलैः वस्त्रैः वा सर्वतः प्रतिमां आच्छादयेत्।

तदनु, 'द्वारतोरणपूजां करिष्ये,' इति सङ्कल्प्य, द्वारतोरणध्वजकुम्भेषु पूर्ववत् यथाविधि तत्तद्दैवतानि आवाह्य अभ्यर्च्य, पूर्वादिदिक्षु ऋगादीन् वेदान् अन्यान् च ब्राह्मणेषु पठत्सु, सर्वत्र तूर्यघोषेषु प्रवर्तितेषु,

समाहितमनाः आचार्यः हृदयकमले भगवन्तं ध्यायन् पुण्याहं वाचयित्वा,

चक्राब्जमण्डले साङ्गं सपरिवारं वासुदेवं यथाविधि संपूज्य, शय्यावेदिं त्रिभागीकृत्य, मध्यदक्षिणभागयोः बिंबे अधिवासिते सति, उत्तरभागे देवस्य पश्चिमोत्तरे शालितण्डुलतिलैः पीठं सवस्त्रास्तरणं कृत्वा,

तदुपरि पद्ममालिख्य, तस्मिन् सवस्त्रकूर्चाश्वत्थपल्लवरत्नापिधानं द्रोणमानगन्धोदकपूरितं लोहजं मृण्मयं वा महा-

---

१ विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो वाहुरुत विश्वतस्पात्॥ सम्बाहुभ्यान्धमति सम्पतत्रैर्द्यावा भूमीजनयन्देव एकः॥

२ युवाः सुवासाः परिवीत आगात् स उ श्रेयान् भवतु जायमानः। तन्धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः॥

कुम्भं, तन्निकटे दक्षिणे तादृशं करकं च शायितबिंबस्थापित-कुम्भयोः परितः अष्टसु धान्यपीठेषु तादृक्लक्षणयुतं मूर्तिकुम्भाष्टकं च संस्थाप्य परिस्तीर्य,

तेषुशङ्खचक्रगदापद्मध्वजश्रीवत्सगरुडकमठान् प्रत्येकं निष्कमात्रजांबूनदकृतान् निक्षिप्य,

मूर्तिकुम्भानां मध्ये पूर्वोक्त लक्षणयुतानि अष्टौ फलकानि सुवर्णादिलोहजानि याज्ञीयदारुजानि वा संस्थाप्य, परितः साङ्कुराः पालिकाश्च निधाय,

'कुम्भपूजां करिष्ये' इति सङ्कल्प्य, कुम्भजलानां पृथक् शोषणादि कृत्वा, तस्मिन् जले पीठं आधारादि पद्मान्तं सङ्कल्प्य अभ्यर्च्य, एवं अष्टासु अपि कृत्वा,

ततः पूर्वादिषु कुम्भेषु विष्ण्वादिदामोदरान्तान् देवान् स्वस्वमन्त्रेण आवाह्य अभ्यर्च्य,

तदानीं पायसान्नेन भगवन्मयान् ब्राह्मणान् द्वादशाधिकान् वा भोजयित्वा, तेभ्यः अपि गोतिलवस्त्रसुवर्णानि दद्यात्।

इति वराहगुरुणा विरचितायां क्रियाकैरवचन्द्रिकायां
शयनाधिवास कुम्भस्थापनविधिर्नाम
चतुर्दशः परिच्छेदः

## अथ पञ्चदशः परिच्छेदः

# गोदोहनादिविधिः

अथ तावत् गोदोहनविधिः उच्यते—

तत्र गोः आह्वानमन्त्रः—'पूषासि,' 'उपसृष्टां मे प्रब्रूतात्,' 'संप्रेष्यति,' 'उपसृजामि,' इत्यामन्त्रयते ।—

'अयक्ष्मावः प्रजया संसृजामि रायस्पोषेण बहुला भवन्तीः,' 'गां चोपसृष्टां,' 'विहारं चान्तरेण मा संचारिष्ट,' 'उपसीदामि,' 'अयक्ष्मावः प्रजया संसृजामि रायस्पोषेण बहुला भवन्तीः ऊर्जं पयः पिन्वमाना घृतं च जीवो जीवन्तीः उप वः सदेयम्,' 'द्यौश्चेमं यज्ञं पृथिवी च सन्दुहातां धाता सोमेन सह वातेन वायुः यजमानाय द्रविणं दधातु,' 'उत्सन्दुहन्ति कलशं चतुर्बिलं इडां देवीं मधुमतीं सुवर्विदं तदिन्द्राग्नी जिन्वतँ सूनृतावत् तद्यजमानं अमृतत्वे दधातु,' एताभ्यां दोहनम् ।

'ओं नमो भगवते वासुदेवाय गङ्गां,' 'यस्यां देवानां मनुष्याणां पयो हितं,' 'सा विश्वायुः,'

'देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्लुव,' 'हुतः स्तोकोहंतोद्रप्सोग्नये बृहते नाकाय स्वाहा,' 'अग्नये बृहते नाकाय इदं नमम,' 'द्यावापृथिवीभ्याँ स्वाहा,' 'द्यावापृथिवीभ्यां इदं न मम,'

एवं द्वितीयां सरस्वतीं इति तृतीयां गोदां इति चतुर्थीं यमुनां इति दोहयित्वा,

'वत्सेभ्यः मनुष्येभ्यः पुनः दोहाय कल्पतां,' वाचं विसृज्य अन्वारभ्य तूष्णीं उत्तराः चतस्रः दोहयित्वा,

'संपृच्यध्वमृतावरीरूर्मिणीर्मधुमत्तमामन्द्राधनस्यसातये' कुम्भाभ्यां संक्षालनं आनीय अविष्यन्दयन् सुश्रितानि करोति।

'दृगृँह गा दृगृँह गोपतिं मा वो यज्ञपतिरिषत्,' वर्त्म कुर्वन् प्राक् उद्वासयति।

सायं दोहं दोहयति। सायं दोहवत् प्रातः— दोहं दोहयति। प्रातर्दोहपयः गृहीत्वा 'सोमेन त्वातनच्मि,' 'आपो हविषि जागृत यथा देवेषु जागृथ एवं अस्मिन् यज्ञे यजमानाय जागृत

अयस्पात्रे दारुपात्रे वा अपः आनीय 'अदस्त्वमसि विष्णवे त्वा यज्ञायापिदधाम्यहं अद्भिररिक्तेन पात्रेण याः पूताः परिशेरते,' तेनापिदधाति। 'अमृन्मयं देवपात्रं यज्ञस्यायुषि प्रयुज्यतां तिरः पवित्रमतिनीताः आपो धारयमातिगुः,' आचार्यः जपति।

यदि मृण्मयेनापिदध्यात् तृणं काष्ठं वा पिधाने अनुप्रविद्ध्येत्।

'विष्णो हव्यं रक्षस्व' प्रज्ञातं निदधाति।

एवं गोदोहनादि यथाविधि कुर्यात्। ❋

---

❋ मूले गोदोहनं अमन्त्रकमेव विहितम्। एतद्ग्रन्थकर्ता तु श्रौतप्रक्रियां अत्र पूर्त्यां विलिखति। मातृकाकोशेषु सर्वेष्वपि पाठः एकरूपः एव दृश्यते। स च आपस्तंबश्रौत-

**अथ होमः—**

अथ मूर्तिपाः गुर्वनुज्ञया वक्ष्यमाणविधिना होमं आरभेरन्।

अरणीं अश्वत्थशमीगर्भाभ्यां संपाद्य द्वादशाक्षरमन्त्रेण मथित्वा, ततः अग्निं उत्पाद्य, तं वा, सूर्यकान्ताश्मनः जातं वा, लौकिकं वा उपादाय, प्रोक्ष्य, दिव्याग्निं ध्यात्वा, प्रत्यक्कुण्डस्य पश्चिमे दक्षिणे वा त्रीन् दर्भान् संस्तीर्य, तदुपरि कूर्मासनं निवेश्य, तत्र उपविश्य, भूतशुद्ध्यादि मानसयागान्तं कृत्वा, कुण्डान्तः दर्भमुष्टिभिः पर्यग्निकरणं कृत्वा,

एवमेव सर्वेषां कुण्डानां विधाय प्रत्यक्कुण्डे अग्निसंस्कारं वैष्णवीकरणं च कृत्वा, तस्मादेव इतरेषु अग्निमुद्धरेत्।

---

सूत्रात्मकः एव। परं तु बहूनि इतिकरणानि अत्र विसृष्टानि। अतः प्रयोगः च दुर्बोधः सम्पद्यते। तन्त्रसारसमुच्चयानुसारेण निर्ऋतीष्टकोपधानस्य कर्षणस्य वास्तोष्पतीष्टेः अरणिग्रहणादिमन्थनान्तस्य नक्षत्रेष्टेः अन्येषां च केषांचन श्रौतप्रक्रियया प्रयोगः। ..........विलिखितः वर्तते। एतद्ग्रन्थकारस्तु न ज्ञायते केन वा हेतुना अत्र केवलं श्रौतीं प्रक्रियां आद्रियत इति। वत्सबन्धने विनियुक्तः मन्त्रः "पूषासि" इत्ययं अत्र गोः आह्वाने विनियुक्तः। एवं अन्येऽपि द्वित्राः। अत्र यथामातृकं एव पाठः अङ्गीकृतः। सूत्रपाठानुसारेण मन्त्राक्षराणि परं शोधितानि।

चतुरश्रादिसर्वकुण्डाग्निमध्येषु आधारादिपद्मान्तं तत्तन्मन्त्रेण आज्येन हुत्वा अभ्यर्च्य, चतुरश्रकुण्डाग्निमध्यस्थपद्ममध्ये, 'ओं नमो भगवते वासुदेवाय आगच्छागच्छ गोक्षीरवर्णं पीतांबरं चतुर्भुजं क्रमेण पद्मचक्रशङ्खगदाधरं श्रीपुष्टितुष्टियुतं वासुदेवमावाहयामि' इत्यावाह्य अभ्यर्च्य,

चापकुण्डे, 'ओं नमो भगवते सङ्कर्षणाय आगच्छागच्छ बालसूर्यनिभं पीतांबरं चतुर्भुजं क्रमेण मुसलचक्रशङ्खपद्मधरं श्रीपुष्टिसहितं संकर्षणं आवाहयामि' इत्यावाह्य अभ्यर्च्य,

वृत्तकुण्डे, 'ओं नमो भगवते प्रद्युम्नाय आगच्छ आगच्छ मरकतवर्णं पीतांबरं चतुर्भुजं क्रमेण कौमोदकीपद्मशङ्खचक्रधरं प्रद्युम्नमावाहयामि, इति आवाह्य अभ्यर्च्य,

त्रिकोणकुण्डे, 'ओं नमो भगवते अनिरुद्धाय आगच्छ-आगच्छ नीलजीमूतनिभं पीतांबरं चतुर्भुजं क्रमेण अभयचक्रशङ्खगदाधरं अनिरुद्धमावाहयामि, इति आवाह्य अभ्यर्चयेत्।

श्रीवत्सादिगरुडान्तं च तत्तन्मन्त्रेण तेभ्यः सकृत् सकृत् अर्घ्यादिदीपान्तं आज्येन जुहुयात्। इतोऽधिकेषु युग्मेषु अयुग्मेषु वा कुण्डेषु वासुदेवादिकान् यजेत्।

प्रागादिषु कुण्डेषु पालाशखदिरबिल्वोदुम्बरसमिद्भिः आग्नेयादि चतुर्ष्वपि पिप्पलप्लक्षन्यग्रोधकाश्मर्यसमिद्भिश्च क्रमेण होमः कार्यः। भूयसां परिकल्पने उक्ताभावेऽपि पालाशीभिरेव कार्यः।

चतुरश्रपणार्थं—

चतस्रोऽधेनवस्स्थाप्याः दक्षिणाद्यायुदङ्मुखाः ।
गङ्गासरस्वतीं गोदायमुनारूपधारिणीः ॥

दुग्धैः तदीयैः श्रपणं चरूणामाहुतिस्तथा । सायन्तनसमय एव मन्त्रवद्दोहनं कृत्वा,

श्रपयेत् पयसा पूर्वे शालितण्डुलमाढकम् ।
कृसरं दाक्षिणात्येऽग्नौ पाश्चात्ये गुडमिश्रितम् ॥
उदीच्येऽग्नौ हरिद्रान्नं दुग्धान्नमितराग्निषु ॥

इति विधाय चतुरश्रमुखेषु कुण्डेषु क्रमेण वासुदेवादिभिः मन्त्रैः समिद्भिः आज्यैः पृथक् अष्टोत्तरशतं आहुतीनां चरूणा पुरुषसूक्तेन षोडशाहुतीश्च पुनराज्यैः पूर्वोक्तमन्त्रैः तथा इतर-कुण्डेषु च तिलैः सर्वत्र तैः वा आचार्यः स्वयं हुत्वा, ततः सोत्तरीयवसनाभरणैः मूर्तिपैः यथाविधि होमं कारयेत् ।

एवं मूर्तिपेषु जुह्वत्सु आचार्यः सर्वालंकारयुतः महा-कुम्भस्य पश्चिमे पूर्वाभिमुखमासने सम्यगुपविश्य, महाकुम्भ-जलस्य शोषणादि कृत्वा, तस्मिन् आधारादिपद्मान्तं पीठं संकल्प्य अभ्यर्च्य, तत्परितश्च यथाविधि ब्रह्मादिनारदान्तान् देवान् च आवाह्य अभ्यर्च्य,

'अस्मद्गुरुभ्यो नमः' इति गुरून् ध्यात्वा, तस्मिन् परंज्योतिः चैतन्यघनं अक्षरं सर्वगं वासुदेवं ध्यायन्,

द्वादशाक्षरविद्यया समावाह्य ध्यात्वा, प्रणवेन अर्घ्यादि दत्त्वा,

तदनु योगासनाब्ज पत्रेषु श्रीवत्साद्यांश्च, आवरणत्रयेषु व्याप्त्यादिगरुडान्तान् च आवरणदेवान् अभ्यर्च्य, करके च पूर्ववत् योगपीठं कृत्वा, तस्मिन्, 'सहस्रारहुंफट् आगच्छागच्छ सहस्रादित्यभास्वरं सहस्रारं सहस्रज्वालावृतं सुदर्शनं आवाहयामि,' इत्यावाह्य, तन्मन्त्रेण अर्घ्यादिभिः अभ्यर्च्य निवेदयेत्।

तत्र आचार्यः बिंबसमीपे स्वस्तिकासनं बद्ध्वा उपविश्य बिंबं पञ्चभूतमयं ध्यात्वा, वक्ष्यमाणेन विधिना तत्त्वसंहारन्यासं कुर्यात्।

'ओं ङम् नमः पराय चतुरश्राय पीतवर्णाय घ्राणोपस्थेन्द्रिययुताय शब्दस्पर्शरूपरसगन्धयुताय पृथिवीतत्त्वात्मने नमः'— पादादिजान्वन्तं, 'ओं घं नमः पराय स्फटिकवर्णाय अर्धचन्द्राकाराय रसनापाण्विन्द्रिययुताय शब्दस्पर्शरूपरसगुणयुताय अप्तत्त्वात्मने नमः'—जान्वादिगुह्यान्तं, 'ओं गं नमः पराय रक्तवर्णाय त्रिकोणाय दृष्टिचरणेन्द्रिययुताय शब्दस्पर्शरूपगुणयुताय अग्नितत्त्वात्मने नमः'—

गुह्यादिनाभ्यन्तं, 'ओं खं नमः पराय धूम्रवर्णाय वृत्ताय त्वक्करेन्द्रिययुताय शब्दस्पर्शगुणयुताय वायुतत्त्वात्मने नमः—नाभ्यादिनासिकान्तं, ओं कं नमः पराय जलदवर्णाय निराकाराय वाक्—श्रोत्रेन्द्रिययुताय शब्दगुणयुताय आकाशतत्त्वात्मने नमः'—नासादिमूर्धान्तं, 'ओं पं नमः पराय सितासितवर्णाय मनस्तत्त्वात्मने नमः'—हृदि, 'ओं फं नमः पराय पाटलवर्णाय अहङ्कारात्मने नमः'—हृदि, 'ओं बं नमः पराय

स्फटिकाभासाय बुद्धितत्त्वात्मने नमः'—हृदि, 'ओं भं नमः पराय सितवर्णाय प्रकृत्यात्मने नमः'—हृदि, 'ओं मं नमः पराय स्फटिकाभासाय जीवतत्त्वात्मने नमः'—हृदि,

इति बिंबस्य संहारन्यासं कृत्वा, तदनु चतुरश्रकुण्ड-समीपं गत्वा आसने सम्यगुपविश्य तत्त्वहोमं करिष्ये' इति संकल्प्य, अग्निं,[१] 'अदितेनुमन्यस्व' इत्यारभ्य, 'देवसवितः प्रसुव,' इत्यन्तेन परिषिच्य, वक्ष्यमाणैः मन्त्रैः हुत्वा,

प्रतिमन्त्राहुतिपात्रान्तरं संपाताज्यं संगृह्य, देवस्य तत्त-दङ्गेषु तत्तन्मन्त्रैरेव नमोऽन्तैः कूर्चेन न्यसेत् ।

**तत्त्वन्यासः—**

'ओं मं नमः पराय स्फटिकाभासाय जीवतत्त्वात्मने स्वाहा, ओं भं नमः पराय सितवर्णाय प्रकृत्यात्मने स्वाहा, ओं बं नमः पराय स्फटिकाभासाय बुद्धितत्त्वात्मने स्वाहा, ओं फं नमः पराय पाटलवर्णाय अहङ्कारात्मने स्वाहा, ओं पं नमः पराय सितासितवर्णाय मनस्तत्त्वात्मने स्वाहा'—हृदि,

'ओं नं नमः पराय शुक्लवर्णाय शब्दतन्मात्रात्मने स्वाहा'—श्रोत्रयोः, 'ओं धं नमः पराय लोहितवर्णाय स्पर्श-तन्मात्रात्मने स्वाहा'—प्रतिमायाः त्वचि, 'ओं दं नमः पराय

---

१ ओं अदितेऽनुमन्यस्वेति दक्षिणतः प्राचीनम् ।
ओं अनुमतेऽनुमन्यस्वेति पश्चादुदीचीनम् ।
ओं सरस्वतेऽनुमन्यस्वेति उत्तरतः प्राचीनम् ।
ओं देव सवितः प्रसुवेति समन्तम् ॥

ज्योतिर्वर्णाय रूपतन्मात्रात्मने स्वाहा'—नेत्रयोः, 'ओं थं नमः पराय पाण्डरवर्णाय रसतन्मात्रात्मने स्वाहा'—तालुनि, 'ओं तं नमः पराय सितवर्णाय गन्धतन्मात्रात्मने स्वाहा'—नासिकायाम्,

'ओं णं नमः पराय पाटलवर्णाय श्रोत्रेन्द्रियात्मने स्वाहा'—श्रोत्रयोः, 'ओं ढं नमः पराय हेमवर्णाय त्वगिन्द्रियात्मने स्वाहा'—त्वचि, 'ओं डं नमः पराय कृष्णवर्णाय नेत्रेन्द्रियात्मने स्वाहा'—नेत्रयोः, 'ओं ठं नमः पराय गौरवर्णाय जिह्वेन्द्रियात्मने स्वाहा'—जिह्वायां, 'ओं टं नमः पराय सितवर्णाय घ्राणेन्द्रियात्मने स्वाहा'—नासिकायाम्,

'ओं ञं नमः पराय सितवर्णाय वागिन्द्रियात्मने स्वाहा'—वाचि, 'ओं झं नमः पराय रक्तवर्णाय पाणीन्द्रियात्मने स्वाहा'—करयोः, 'ओं जं नमः पराय रक्तवर्णाय पादेन्द्रियात्मने स्वाहा'—पादयोः, 'ओं छं नमः पराय रक्तवर्णाय पाय्विन्द्रियात्मने स्वाहा'—अपाने, 'ओं चं नमः पराय हेमवर्णाय मेहनेन्द्रियात्मने स्वाहा'—मेहने,

'ओं कं नमः पराय जलदवर्णाय वाक्श्रोत्रेन्द्रिययुताय निराकाराय शब्दगुणयुताय आकाशतत्त्वात्मने स्वाहा'—मूर्धादिनासान्तं, 'ओं खं नमः पराय धूम्रवर्णाय वृत्ताय शब्दस्पर्शगुणयुताय वायुतत्त्वात्मने स्वाहा'—नासादिनाभ्यन्तं, 'ओं गं नमः पराय रक्तवर्णाय त्रिकोणाय दृष्टिचरणेन्द्रिययुताय शब्दस्पर्शरूपगुणयुताय अग्नितत्त्वात्मने स्वाहा'—नाभ्यादि

गुह्यान्तं, 'ओं घं नमः पराय अर्धचन्द्राकाराय स्फटिकवर्णाय शब्दस्पर्शरूपरसगुणयुताय रसनापाय्विन्द्रिययुताय अप्तत्त्वात्मने स्वाहा'–गुह्यादिजान्वन्तं, 'ओं ङं नमः पराय चतुरश्राय पीतवर्णाय घ्राणोपस्थेन्द्रिययुताय शब्दस्पर्शरूपरसगन्धगुणयुताय पृथिवीतत्त्वात्मने स्वाहा'–जान्वादिचरणान्तं

एभिः मन्त्रैः प्रत्येकं अष्टोत्तरशताहुतीः अष्टाविंशतिः अष्टौ वा आज्येन हुत्वा संपाताज्येन प्रतिमाङ्गेषु न्यसेत् ।

## अथ प्राणादि दशवायुन्यासः—

'ओं नाभिकन्दात् ब्रह्मरन्ध्रावधिस्थितायां सुषुम्नायां स्थिताय प्राणाय स्वाहा', 'ओं कन्दात् वामनासापुटावधि इडायां स्थिताय अपानाय स्वाहा', 'ओं कन्दात् दक्षिणनासापुटावधि पिङ्गलायां स्थिताय व्यानाय स्वाहा', 'ओं कन्दात् वामदृगन्तं उत्थितायां गान्धार्यां स्थिताय उदानाय स्वाहा', 'ओं कन्दात् दक्षिणदृगन्तं उत्थितायां हस्तिजिह्वायां स्थिताय समानाय स्वाहा', 'ओं कन्दात् वामश्रोत्रान्तं उत्थितायां पूषायां स्थिताय नागाय स्वाहा', 'ओं कन्दात् दक्षिणश्रोत्रान्तं उत्थितायां यशस्विन्यां स्थिताय कूर्माय स्वाहा', 'ओं कन्दात पायुमूलावधि स्थितायां अलंबुसायां स्थिताय कृकराय स्वाहा', 'ओं कन्दादारभ्य मेढ्रान्तं अधोगतायां कुहूनायां स्थिताय देवदत्ताय स्वाहा', 'ओं कन्दादारभ्य पादाङ्गुष्ठान्तं अधोगतायां कौशिन्यां स्थिताय धनञ्जयाय स्वाहा', एवं पूर्ववत् होमः न्यासश्च ।

अथ प्राणप्रतिष्ठा —

अस्य श्री प्राणप्रतिष्ठा मन्त्रस्य ब्रह्मविष्णु महेश्वराः ऋषयः, ऋग्यजुस्सामाथर्वाणि छन्दांसि, सकलजगत्सृष्टिस्थिति संहारकारिणी परा प्राणशक्तिः देवता, आं ह्रीं क्रों बीजं, स्वाहा शक्तिः, ओं कीलकं, बिंबप्राणप्रतिष्ठार्थे विनियोगः ।

आं ह्रीं क्रों यरलवशषह ओं हंसः, अं ङं घं गं खं कं पृथिव्यप्तेजोवाय्वाकाश प्राणात्मने

क्रों ह्रीं आं आं हृदयाय नमः स्वाहा, आं ह्रीं क्रों यरल-वशषसह ओं हंसः, इं नं धं दं थं तं शब्दस्पर्शरूपरसगन्धावा-नात्मने क्रों ह्रीं आं ईं शिरसे स्वाहा स्वाहा, आं ह्रीं क्रों यरल-वशषसह ओं हंसः,

उं छं झं जं छं चं वाक्पाणिपादपायूपस्थव्यानात्मने क्रों ह्रीं आं ऊं शिखायै वषट् स्वाहा, आं ह्रीं क्रों यरलवशषसह ओं हंसः, एं णं दं डं ठं टं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणोदानात्मने, क्रों ह्रीं आं रों कवचाय हुं स्वाहा, आं ह्रीं क्रों यरलवशषसह ओं हंसः ओं पं फं बं भं मं मनोहङ्कारबुद्धि प्रकृतिजीवसमानात्मने, क्रों ह्रीं आं औं नेत्राभ्यां वौषट् स्वाहा, आं ह्रीं क्रों यरलवशष-सह ओं हंसः अं यं रं लं वं शं षं सं हं लं चं वचनागमनानन्द विहरणोत्सर्गानन्दनागकूर्मकृकरदेवदत्तधनञ्जयात्मने क्रों ह्रीं आं अः अस्त्राय फट् स्वाहा,

ध्यानम्—

'रक्तांबोधिस्थ पोतोल्लसदरुणसरोजाधिरूढाकराब्जैः,
पाशं कोदण्डं इक्षूत्भवं अलिगुणमपि अङ्कुशं पञ्चबाणान् ।

बिभ्राणा सृक्कपालं त्रिणयनसहिता पीनवक्षोरुहाढ्या,
देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः ॥

**मूलमन्त्रम्—**

ओं आं ह्रीं क्रों यरलवशषसह ओं हंसः अमुष्य प्राण इह प्राणः आं ह्रीं क्रों यरलवशषसह ओं हंसः अमुष्य जीव इह स्थितः आं ह्रीं क्रों यरलवशपसह ओं हंसः अमुष्य सर्वेन्द्रियाणि मनोहंकारबुद्धिप्रधानपृथिव्यप्तेजोवाय्वाकाश श्रोत्रत्वक्चक्षु-जिह्वाघ्राणवाक्पाणिपादपायूपस्थत्वक्चर्ममांसरुधिरमेदोऽस्थिम - ज्जाशुक्लप्राणापानव्यानोदानसमानाः इह आयान्तु सुखं चिरं तिष्ठन्तु स्वाहा ओं इति ।

पूर्ववत् होमः न्यासश्च ।

श्र्यादिदेवीनां ब्रह्मादिपरिवाराणां च एवमेव कुर्यात् ।

**अथ आयुधन्यासः—**

ओं चक्राय स्वाहा, ओं शङ्खाय स्वाहा, ओं गदायै स्वाहा, ओं पद्माय स्वाहा, ओं शार्ङ्गाय स्वाहा ।

एवं होमः न्यासश्च ।

**अथ भूषणन्यासः—**

ओं किरीटाय स्वाहा, ओं श्रीवत्साय स्वाहा, ओं कौस्तुभाय स्वाहा, ओं वनमालायै स्वाहा, ओं वैनतेयाय दर्पणरूपाय स्वाहा ।

एवं होमः न्यासश्च ।

इति वराहगुरुणा विरचितायां क्रियाकैरवचन्द्रिकायां
तत्त्वन्यासः नाम पञ्चदशः परिच्छेदः

# अथ षोडशः परिच्छेदः

## षोडशन्यासः

(१) अथ प्रणवन्यासः— 'अं नमः पराय विष्णवे स्वाहा'–हृदये, 'उं नमः पराय ब्रह्मणे स्वाहा'–दक्षिणोरसि, 'मं नमः पराय शङ्करात्मने स्वाहा'–वामोरसि, 'ओं नमः पराय त्रिमूर्त्यात्मकाय वासुदेवाय स्वाहा' हृदये। इति होमः न्यासश्च।

(२) अथ व्याहृतिन्यासः— 'ओं नमः पराय भूलोकात्मने स्वाहा'–पादयोः, 'ओं नमः पराय भुवर्लोकात्मने स्वाहा'–हृदि, 'ओं नमः पराय सुवर्लोकात्मने स्वाहा'–शिरसि। होमः न्यासश्च।

(३) अथ अक्षरन्यासः— 'ओं अं नमः पराय रसनात्मने स्वाहा'–जिह्वायाम्। एवमुत्तरत्र। 'ओं आं नमः पराय मुखात्मने स्वाहा', 'ओं इं नमः पराय दक्षिणलोचनात्मने स्वाहा', 'ओं ईं नमः पराय वामलोचनात्मने स्वाहा', 'ओं उं नमः पराय दक्षिणकर्णात्मने स्वाहा', 'ओं ऊं नमः पराय वामकर्णात्मने स्वाहा', 'ओं ऋं नमः पराय दक्षिणनासापुटात्मने स्वाहा', 'ओं ॠं नमः पराय वामनासापुटात्मने स्वाहा', 'ओं ऌं नमः पराय दक्षिणगण्डात्मने स्वाहा', 'ओं ॡं नमः पराय वामगण्डात्मने स्वाहा', 'ओं एं नमः पराय उत्तरदन्तपङ्क्त्यात्मने स्वाहा', 'ओं ऐं नमः पराय अधोदन्तपङ्क्त्यात्मने स्वाहा',

'ओं ओं नमः पराय उत्तरोष्ठात्मने स्वाहा', 'ओं औं नमः पराय अधरोष्ठात्मने स्वाहा', 'ओं अं नमः पराय ललाटात्मने स्वाहा', 'ओं अः नमः पराय ताल्वात्मने स्वाहा',

'ओं यं नमः पराय त्वगात्मने स्वाहा', 'ओं रं नमः पराय चक्षुरात्मने स्वाहा', 'ओं लं नमः पराय नासिकात्मने स्वाहा', 'ओं वं नमः पराय दशनात्मने स्वाहा', 'ओं शं नमः परांय श्रोत्रात्मने स्वाहा', 'ओं षं नमः पराय उदरात्मने स्वाहा', 'ओं सं नमः पराय कट्यात्मने स्वाहा', 'ओं हं नमः पराय हृदयात्मने स्वाहा', 'ओं लं नमः पराय नाभ्यात्मने स्वाहा', 'ओं क्षं नमः पराय मेहनात्मने स्वाहा',

'ओं कं नमः पराय अङ्गुष्ठाभ्यां स्वाहा' 'ओं खं नमः पराय तर्जनीभ्यां स्वाहा', 'ओं गं नमः पराय मध्यमाभ्यां स्वाहा', 'ओं घं नमः पराय अनामिकाभ्यां स्वाहा', 'ओं ङं नमः पराय कनिष्ठिकाभ्यां स्वाहा', 'ओं चं नमः पराय दक्षिणोरुमूलात्मने स्वाहा', 'ओं छं नमः पराय दक्षिणोरुमध्यात्मने स्वाहा', 'ओं जं नमः पराय दक्षिणजान्वात्मने स्वाहा', 'ओं झं नमः पराय दक्षिणजङ्घात्मने स्वाहा', 'ओं ञं नमः पराय दक्षिणपादात्मने स्वाहा', 'ओं टं नमः पराय वामोरुमूलात्मने स्वाहा', 'ओं ठं नमः पराय वामोरुमध्यात्मने स्वाहा', 'ओं डं नमः पराय वामजान्वात्मने स्वाहा', 'ओं ढं नमः पराय वामजङ्घात्मने स्वाहा', 'ओं णं नमः पराय वामपादात्मने स्वाहा', 'ओं तं नमः पराय दक्षिणभुजमूलात्मने स्वाहा', 'ओं थं नमः

पराय दक्षिणभुजमध्यात्मने स्वाहा', 'ओं दं नमः पराय दक्षिणभुजसन्ध्यात्मने स्वाहा', ओं धं नमः पराय दक्षिणभुजकूर्परात्मने स्वाहा', 'ओं नं नमः पराय दक्षिणकरतलात्मने स्वाहा', 'ओं पं नमः पराय वामभुजमूलात्मने स्वाहा', 'ओं फं नमः पराय वामभुजमध्यात्मने स्वाहा', 'ओं बं नमः पराय वामभुजसन्ध्यात्मने स्वाहा', 'ओं भं नमः पराय वामभुजकूर्परात्मने स्वाहा', 'ओं मं नमः पराय वामकरतलात्मने स्वाहा।

इति होमः न्यासश्च।

(४) अथ नक्षत्रन्यासः—

'ओं नमः पराय रोहिण्यात्मने हृदयाय स्वाहा', 'ओं नमः पराय मृगशिरआत्मने शिरसे स्वाहा', 'ओं नमः पराय आर्द्रात्मने केशाय स्वाहा', 'ओं नमः पराय पुनर्वस्वात्मने ललाटाय स्वाहा', 'ओं नमः पराय पुष्यात्मने वदनाय स्वाहा', 'ओं नमः पराय आश्लेषात्मने नासिकायै स्वाहा', 'ओं नमः पराय मघात्मभ्यः दन्तेभ्यः स्वाहा', 'ओं नमः पराय पूर्वफल्गुन्यात्मभ्यां श्रोत्राभ्यां स्वाहा', 'ओं नमः पराय उत्तरफल्गुन्यात्मने दक्षिणभुजाय स्वाहा', 'ओं नमः पराय हस्तात्मने वामभुजाय स्वाहा', 'ओं नमः पराय चित्रात्मने दक्षिणहस्ताय स्वाहा', 'ओं नमः पराय स्वात्यात्मने वामहस्ताय स्वाहा', 'ओं नमः पराय विशाखात्मने दक्षिणस्तनाय स्वाहा', 'ओं नमः पराय अनुराधात्मने वामस्तनाय स्वाहा', 'ओं नमः पराय ज्येष्ठात्मने उदराय स्वाहा', 'ओं नमः पराय मूलात्मिन्यै कट्यै

स्वाहा', ओं नमः पराय पूर्वाषाढ़ात्मने मेहनाय स्वाहा', 'ओं नमः पराय उत्तराषाढात्मने वृषणाय स्वाहा', 'ओं नमः पराय श्रवणात्मने पायवे स्वाहा', 'ओं नमः पराय धनिष्ठात्मने दक्षिणोरवे स्वाहा', 'ओं नमः पराय शतभिषगात्मने वामोरवे स्वाहा', 'ओं नमः पराय पूर्वभाद्रात्मिन्यै दक्षिणजङ्घायै स्वाहा', 'ओं नमः पराय उत्तरभाद्रात्मिन्यै वामजङ्घायै स्वाहा', 'ओं नमः पराय रेवत्यात्मने दक्षिणपादाय स्वाहा', 'ओं नमः पराय अश्विन्यात्मने वामपादाय स्वाहा', 'ओं नमः पराय भरण्यात्मने दक्षिणपार्श्वाय स्वाहा', 'ओं नमः पराय कृत्तिकात्मने वामपार्श्वाय स्वाहा'।

एवं होमः न्यासश्च।

(५) अथ ग्रहन्यासः—

'ओं नमः पराय सूर्यात्मने दक्षिणनेत्राय स्वाहा', 'ओं नमः पराय चन्द्रात्मने वामनेत्राय स्वाहा', 'ओं नमः पराय अङ्गारकात्मने[1] उदराय स्वाहा', ओं नमः पराय बुधात्मिन्यै बुद्धये स्वाहा', 'ओं नमः पराय बृहस्पत्यात्मने वागिन्द्रियाय स्वाहा', 'ओं नमः पराय शुक्रात्मभ्यः इन्द्रियेभ्यः स्वाहा', 'ओं नमः पराय शनैश्चरात्मने ललाटाय स्वाहा', 'ओं नमः पराय राह्वात्मने पादाय स्वाहा', 'ओं नमः पराय केत्वात्मने केशाय स्वाहा', 'ओं नमः पराय ध्रुवात्मिन्यै नाभ्यै स्वाहा',

---

१ उदरस्थाने ऊरुपदं पादादिसर्वगात्रेभ्यः इत्यत्र कण्ठपदं च केचित् अभिप्रयन्ति।

'ओं नमः पराय सप्तर्ष्यात्मभ्यः पादादि[1] सर्वगात्रेभ्यः स्वाहा'।

एवं होमः न्यासश्च।

(६) कालन्यासः—

'ओं नमः पराय वत्सरात्मने शरीराय स्वाहा', 'ओं नमः पराय चैत्रात्मने शिरसे स्वाहा', 'ओं नमः पराय वैशाखात्मने मुखाय स्वाहा', 'ओं नमः पराय ज्येष्ठात्मने हृदयाय स्वाहा', 'ओं नमः पराय आषाढात्मने दक्षिणस्तनाय स्वाहा', 'ओं नमः पराय श्रावणात्मने वामस्तनाय स्वाहा', 'ओं नमः पराय भाद्रपदात्मने उदराय स्वाहा', 'ओं नमः पराय आश्वयुजात्मिन्यै कट्यै स्वाहा', 'ओं नमः पराय कार्तिकात्मने दक्षिणोरवे स्वाहा', 'ओं नमः पराय मार्गशीर्षात्मने वामोरवे स्वाहा', 'ओं नमः पराय पौषात्मिन्यै दक्षिणजङ्घायै स्वाहा', 'ओं नमः पराय मखात्मिन्यै वामजङ्घायै स्वाहा', 'ओं नमः पराय फाल्गुनात्मभ्यां पादाभ्यां स्वाहा', 'ओं नमः पराय संवत्सरात्मने दक्षिणमुख्यबाहवे स्वाहा', 'ओं नमः पराय वत्सरात्मने वाममुख्यबाहवे स्वाहा', 'ओं नमः पराय पर्वात्मभ्यः सर्वपर्वभ्यः स्वाहा', 'ओं नमः पराय सर्वाङ्गस्वरूपेभ्यः ऋतुभ्यः स्वाहा', 'ओं नमः पराय षष्ट्युत्तरत्रिशतरात्रात्मभ्यः सर्वसन्धिभ्यः स्वाहा', 'ओं नमः पराय त्रुटिलवकलाकाष्ठाक्षणनिमेषात्मभ्यः रोमभ्यः स्वाहा', 'ओं नमः पराय कृतयुगात्मने मुखाय स्वाहा', 'ओं नमः पराय त्रेतायुगात्मने हृदयाय स्वाहा', 'ओं

१ १०८ पृष्ठे टिप्पण्यां।

नमः पराय द्वापरयुगात्मिन्यै कट्यै स्वाहा', 'ओं नमः पराय कलियुगात्मभ्यां पादाभ्यां स्वाहा', 'ओं नमः पराय स्वायंभुव-मन्वन्तरात्मने स्वाहा', 'ओं नमः पराय स्वारोचिषमन्वन्तरा-त्मने स्वाहा', 'ओं नमः पराय उत्तममन्वन्तरात्मने स्वाहा', 'ओं नमः पराय तामसमन्वन्तरात्मने स्वाहा', 'ओं नमः पराय रैवतमन्वन्तरात्मने स्वाहा', 'ओं नमः पराय चाक्षुषमन्वन्तरा-त्मने स्वाहा', 'ओं नमः पराय वैवस्वतमन्वन्तरात्मने स्वाहा', दक्षिणभुजे।

'ओं नमः पराय सूर्यमन्वन्तरात्मने स्वाहा', 'ओं नमः पराय दक्षमन्वन्तरात्मने स्वाहा', 'ओं नमः पराय ब्रह्ममन्व-न्तरात्मने स्वाहा', 'ओं नमः पराय धर्ममन्वन्तरात्मने स्वाहा', 'ओं नमः पराय रुद्रमन्वन्तरात्मने स्वाहा', 'ओं नमः पराय सावर्णिमन्वन्तरात्मने स्वाहा', 'ओं नमः पराय रौद्रभूतिमन्व-न्तरात्मने स्वाहा', वामभुजे।

'ओं नमः पराय प्रथमपरार्धात्मिन्यै दक्षिणजङ्घायै स्वाहा', 'ओं नमः पराय द्वितीयपरार्धात्मिन्यै वामजङ्घायै स्वाहा', 'ओं नमः पराय महाकल्पात्मने शिरसे स्वाहा', 'ओं नमः पराय उत्तरायणात्मने दक्षिणपादाय स्वाहा', 'ओं नमः पराय दक्षि-णायनात्मने वामपादाय स्वाहा', तत्तत्स्थानेषु।

एवं होमः न्यासश्च।

(७) अथ ब्राह्मणादिवर्णन्यासः—

'ओं नमः पराय ब्राह्मणात्मने मुखाय स्वाहा', 'ओं नमः

पराय क्षत्रियात्मभ्यां बाहुभ्यां स्वाहा', 'ओं नमः पराय वैश्यात्मभ्यां ऊरुभ्यां स्वाहा', 'ओं नमः पराय शूद्रात्मभ्यां पादाभ्यां स्वाहा', 'ओं नमः पराय संकरात्मभ्यः पादाङ्गुलीभ्यः स्वाहा', 'ओं नमः पराय उत्कृष्टसंकरजात्यात्मभ्यः सन्धिभ्यः स्वाहा', 'ओं नमः पराय गवात्मने मुखाय स्वाहा', 'ओं नमः पराय अजाविकात्मभ्यां बाहुभ्यां स्वाहा', 'ओं नमः पराय अजाविकात्मभ्यां ऊरुभ्यां स्वाहा', 'ओं नमः पराय ग्रामारण्यपश्वात्मभ्यां पादाभ्यां स्वाहा'।

एवं होमः न्यासश्च।

(८) अथ तोयन्यासः—

'ओं नमः पराय मेघात्मभ्यः केशेभ्यः स्वाहा', 'ओं नमः पराय कूपात्मने रोमकूपाय स्वाहा', 'ओं नमः पराय वाप्यात्मभ्यां पादाभ्यां स्वाहा', 'ओं नमः पराय निर्झरात्मभ्यां जङ्घाभ्यां स्वाहा', 'ओं नमः पराय नद्यात्मभ्यः सर्वावयवेभ्यः स्वाहा', 'ओं नमः पराय समुद्रात्मिन्यै कुक्ष्यै स्वाहा'।

एवं होमः न्यासः च।

(९) अथ निगमन्यासः—

'ओं नमः पराय ऋग्वेदात्मने शिरसे स्वाहा, 'ओं नमः पराय यजुर्वेदात्मने दक्षिणभुजाय स्वाहा', 'ओं नमः पराय सामवेदात्मने वामभुजाय स्वाहा', 'ओं नमः पराय सर्वोपनिषदात्मने हृदयाय स्वाहा', 'ओं नमः पराय इतिहासात्मिन्यै दक्षिणजङ्घायै स्वाहा', 'ओं नमः पराय पुराणात्मिन्यै वाम-

जङ्घायै स्वाहा', 'ओं नमः पराय अथर्वाङ्गिरसात्मिन्यै नाभ्यै स्वाहा', 'ओं नमः पराय कल्पसूत्रात्मभ्यां पादाभ्यां स्वाहा', 'ओं नमः पराय व्याकरणात्मने वक्त्राय स्वाहा', 'ओं नमः पराय तर्कशास्त्रात्मने कण्ठाय स्वाहा', 'ओं नमः पराय मीमांसानिरुक्तात्मने हृदयाय स्वाहा', 'ओं नमः पराय छन्द-आत्मने दक्षिणनेत्राय स्वाहा', 'ओं नमः पराय ज्योतिषात्मने वामनेत्राय स्वाहा', 'ओं नमः पराय शिक्षात्मिन्यै कुक्ष्यै स्वाहा', 'ओं नमः पराय गारुडतन्त्रात्मने दक्षिणकर्णाय स्वाहा', 'ओं नमः पराय भूततन्त्रात्मने वामकर्णाय स्वाहा', 'ओं नमः पराय धनुर्वेदात्मने दक्षिणहस्ताय स्वाहा', 'ओं नमः पराय आयुर्वेदात्मने वामहस्ताय स्वाहा', 'ओं नमः पराय योगशास्त्रात्मने हृदयाय स्वाहा', 'ओं नमः पराय नीतिशास्त्रात्मभ्यां पादाभ्यां स्वाहा'।

एवं होमः न्यासश्च।

(१०) अथ देवतान्यासः—

'ओं नमः पराय ब्रह्मात्मने शिरसे स्वाहा', 'ओं नमः पराय सरस्वत्यात्मिकायै जिह्वायै स्वाहा', 'ओं नमः पराय इन्द्रात्मने दक्षिणभुजाय स्वाहा', 'ओं नमः पराय महाबलात्मने वामभुजाय स्वाहा', 'ओं नमः पराय विश्वकर्मात्मने दक्षिणस्तनाय स्वाहा', 'ओं नमः पराय प्रह्लादात्मने वामस्तनाय स्वाहा', 'ओं नमः पराय नारदात्मिन्यै दक्षिणकुक्ष्यै स्वाहा', 'ओं नमः पराय अनन्ताद्यात्मिन्यै वामकुक्ष्यै स्वाहा',

'ओं नमः पराय वरुणात्मभ्यः अस्थिभ्यः स्वाहा', 'ओं नमः पराय पित्रात्मभ्यां पादाभ्यां स्वाहा', 'ओं नमः पराय विश्वेदेवात्मभ्यां ऊरुभ्यां स्वाहा', 'ओं नमः पराय ऋष्यात्मभ्यां जानुभ्यां स्वाहा', 'ओं नमः पराय यक्षात्मभ्यां जङ्घाभ्यां स्वाहा', 'ओं नमः पराय राक्षसात्मभ्यां गुल्फाभ्यां स्वाहा', 'ओं नमः पराय विद्याधरात्मिन्यै पार्ष्ण्यै स्वाहा', 'ओं नमः पराय नवग्रहात्मने पादतलाय स्वाहा', 'ओं नमः पराय पूतनाजृंभकात्मकेभ्यः नखेभ्यः स्वाहा', 'ओं नमः पराय सुब्रह्मण्यात्मने दक्षिणकटिपार्श्वाय स्वाहा', 'ओं नमः पराय गणेशात्मने वामकटिपार्श्वाय स्वाहा', 'ओं नमः पराय गन्धर्वात्मने ओष्ठाय स्वाहा'।

इति होमः न्यासश्च।

(११) अथ वैराजन्यासः—

'ओं नमः पराय स्वर्लोकात्मने मस्तकाय स्वाहा', 'ओं नमः पराय सूर्यात्मने दक्षिणनेत्राय स्वाहा', 'ओं नमः पराय चन्द्रात्मने वामनेत्राय स्वाहा', ओं नमः पराय वाय्वात्मिन्यै नासिकायै स्वाहा', 'ओं नमः पराय दिगात्मभ्यां बाहुभ्यां स्वाहा', 'ओं नमः पराय ऋष्यात्मने हृदयाय स्वाहा', 'ओं नमः पराय व्योमात्मने वपुषे स्वाहा', 'ओं नमः परायदेवात्मने अन्तरात्मने स्वाहा', 'ओं नमः पराय मेघात्मभ्यः केशेभ्यः स्वाहा', 'ओं नमः पराय नक्षत्रात्मकेभ्यः भूषणेभ्यः स्वाहा', 'ओं नमः पराय अग्न्यात्मने मुखाय स्वाहा', 'ओं नमः पराय सरस्वत्यात्मिन्यै वाचे स्वाहा'। इति होमः न्यासश्च।

(१२) अथ क्रतुन्यासः—

ओं नमः पराय अश्वमेधात्मने शिरसे स्वाहा', 'ओं नमः पराय नरमेधात्मने ललाटाय स्वाहा', 'ओं नमः पराय राजसूयात्मने मुखाय स्वाहा', 'ओं नमः पराय गोसवात्मने कण्ठाय स्वाहा', ओं नमः पराय एकादशात्मिन्यै नाभ्यै स्वाहा', 'ओं नमः पराय अग्निष्टोमात्मने लिङ्गाय स्वाहा', 'ओं नमः पराय अतिरात्रात्मने वृषणाय स्वाहा', ओं नमः पराय आप्तोर्यामात्मभ्यां ऊरुभ्यां स्वाहा', 'ओं नमः पराय षोडशाहात्मभ्यां जानुभ्यां स्वाहा', 'ओं नमः पराय उक्थ्यस्वरूपायै दक्षिणजङ्घायै स्वाहा', 'ओं नमः पराय वाजपेयस्वरूपायै वामजङ्घायै स्वाहा', 'ओं नमः पराय चातुर्मास्यात्मने बाहवे स्वाहा', 'ओं नमः पराय सौत्रामण्यात्मने हस्ताय स्वाहा', 'ओं नमः पराय पश्विष्ट्यात्मभ्यः अङ्गुलीभ्यः स्वाहा', 'ओं नमः पराय दर्शात्मने दक्षिणनेत्राय स्वाहा', 'ओं नमः पराय पौर्णमासात्मने वामनेत्राय स्वाहा', 'ओं नमः पराय इष्टिदर्भयूपस्वाहाकारवषट्कारात्मभ्यां स्तनाभ्यां स्वाहा', 'ओं नमः पराय पञ्चमहायज्ञात्मकेभ्यः अङ्गुलीभ्यः स्वाहा', 'ओं नमः पराय दक्षिणात्मने हृदयाय स्वाहा', 'ओं नमः पराय स्तोमात्मकेभ्यः केशेभ्यः स्वाहा', 'ओं नमः पराय आहवनीयात्मने मुखाय स्वाहा', 'ओं नमः पराय गार्हपत्यात्मने हृदयाय स्वाहा', 'ओं नमः पराय दक्षिणाग्न्यात्मिन्यै नाभ्यै स्वाहा', 'ओं नमः पराय आवसथ्यात्मभ्यां पादाभ्यां स्वाहा', 'ओं नमः पराय सभ्यात्मने

हृदयाय स्वाहा', 'ॐ नमः पराय प्रवर्ग्यात्मकेभ्यः भूषणेभ्यः स्वाहा'।

इति होमः न्यासश्च।

(१३) अथ गुणन्यासः—

'ॐ नमः पराय सत्त्वगुणात्मने शिरसे स्वाहा', 'ॐ नमः पराय रजोगुणात्मने हृदयाय स्वाहा', 'ॐ नमः पराय तमोगुणात्मभ्यां पादाभ्यां स्वाहा'।

इति होमः न्यासश्च।

(१४) अथ मूर्तिन्यासः—

'ॐ नमः पराय मत्स्यमूर्त्यात्मने शिरसे स्वाहा', 'ॐ नमः पराय कूर्ममूर्त्यात्मभ्यां पादाभ्यां स्वाहा', 'ॐ नमः पराय वराहमूर्त्यात्मभ्यां जङ्घाभ्यां स्वाहा', 'ॐ नमः पराय नृसिंह-मूर्त्यात्मने ललाटाय स्वाहा', 'ॐ नमः पराय वामनमूर्त्यात्मने मुखाय स्वाहा', 'ॐ नमः पराय भार्गवरामात्मने हृदयाय स्वाहा', 'ॐ नमः पराय कार्तवीर्यात्मभ्यां कराभ्यां स्वाहा', 'ॐ नमः पराय दाशरथिरामात्मने हृदयाय स्वाहा', 'ॐ नमः पराय बलरामात्मने हृदयाय स्वाहा', 'ॐ नमः पराय कृष्णा-त्मने हृदयाय स्वाहा', 'ॐ नमः पराय बुद्धात्मने गुह्याय स्वाहा', 'ॐ नमः पराय कल्क्यात्मभ्यां जानुभ्यां स्वाहा'।

इति होमः न्यासश्च।

(१५) अथ शक्तिन्यासः—

'ॐ नमः पराय लक्ष्म्यात्मने ललाटाय स्वाहा', 'ॐ

नमः पराय सरस्वत्यात्मने मुखाय स्वाहा', 'ॐ नमः पराय रत्यात्मने गुह्याय स्वाहा', 'ॐ नमः पराय प्रीत्यात्मने कर्णाय स्वाहा', 'ॐ नमः पराय कीर्त्यात्मने चक्षुषे स्वाहा', 'ॐ नमः पराय शान्त्यात्मने हृदयाय स्वाहा', 'ॐ नमः पराय तुष्ट्यात्मने उदराय स्वाहा', 'ॐ नमः पराय पुष्ट्यात्मभ्यः सर्वगात्रेभ्यः स्वाहा'।

इति होमः न्यासश्च।

(१६) अथ षडङ्गन्यासः—

'ॐ नमः पराय ज्ञानाय हृदयाय नमः स्वाहा', 'ॐ नमः पराय ऐश्वर्याय शिरसे स्वाहा स्वाहा', 'ॐ नमः पराय शक्त्यै शिखायै वषट् स्वाहा', 'ॐ नमः पराय बलाय कवचाय हुं स्वाहा', 'ॐ नमः पराय तेजसे नेत्राभ्यां वौषट् स्वाहा', 'ॐ नमः पराय वीर्याय अस्त्राय फट् स्वाहा'।

इति होमः न्यासश्च।

(१७) अथ लोकन्यास[1]ः—

'ॐ नमः पराय अतलात्मभ्यां पादतलाभ्यां स्वाहा', 'ॐ नमः पराय वितलात्मभ्यां पादाभ्यां स्वाहा', 'ॐ नमः पराय सुतलात्मभ्यां गुल्फाभ्यां स्वाहा', 'ॐ नमः पराय नितलात्मभ्यां जङ्घाभ्यां स्वाहा', 'ॐ नमः पराय महातलात्मभ्यां जानुभ्यां स्वाहा', 'ॐ नमः पराय रसातलात्मभ्यां

---

१ अधोलोकानां तत्तत्स्थितिमन्त्रेण पादादिषु न्यासः उचितः इति प्रतिभाति।

ऊरुभ्यां स्वाहा', 'ओं नमः पराय तलातलात्मिन्यै कट्यै स्वाहा', 'ओं नमः पराय भूलोकात्मभ्यां पादाभ्यां स्वाहा', 'ओं नमः पराय भुवर्लोकात्मने मेहनाय स्वाहा', 'ओं नमः पराय स्वर्लोकात्मने उदराय स्वाहा', 'ओं नमः पराय महर्लोकात्मने हृदयाय स्वाहा', 'ओं नमः पराय जनोलोकात्मने कण्ठाय स्वाहा', ओं नमः पराय तपोलोकात्मने मुखाय स्वाहा', 'ओं नमः पराय सत्यलोकात्मने शिरसे स्वाहा'।

इति होमः न्यासश्च।

जङ्गमेषु बिंबेषु षोडशन्यासं न कुर्यात्।

इति वराहगुरुणा विरचितायां क्रियाकैरवचन्द्रिकायां
षोडशन्यासविधिर्नाम
षोडशः परिच्छेदः

---

## अथ सप्तदशः परिच्छेदः

# शान्तिहोमः

एवं षोडशन्यासं कृत्वा ततः शान्तिहोमं कुर्यात्।

प्राचीने कुण्डे 'ओं भूः स्वाहा' इति मधुना अष्टोत्तरशताहुतीः हुत्वा, संपातेन देवस्य पादौ स्पृशेत्। दक्षिणे अग्नौ 'ओं भुवः स्वाहा' इति पयसा तथा हुत्वा, संपातेन देवस्य

जठरं, पश्चिमे अग्नौ 'ओं सुवः स्वाहा' इति दध्ना तथा हुत्वा, संपातेन देवस्य मुखं, उत्तरे अग्नौ 'ओं भूर्भुवः सुवः स्वाहा', इति आज्येन तथा हुत्वा, संपातेन देवस्य शिरः, सर्वैः संपातैः सर्वाङ्गं च स्पृशेत्। तत्रैव गुडाज्यमधुभिः विष्णुगायत्र्या[1] प्रत्येकं तथा हुत्वा, संपातेन देवस्य मुखं सर्वाङ्गं च स्पृशेत्।

तदनु आचार्यः वेदिकोपरि कोणभागस्थकुम्भजलैः विष्णुगायत्र्या वेतसशाखया प्रतिमां सिञ्चेत्। मूर्तिपार्श्व पालाशखदिराश्वत्थबैल्वशाखाभिः पवमानादिभिः मन्त्रैः वेदिकोपरिस्थितदिक्कुम्भजलैः प्रतिमां सिञ्चेयुः।

लोहशिलादारुमयेषु एषः विधिः। बहुबेरं तु सदने अन्तः प्रविश्यैव संहारोत्पादनादिकं शान्तिहोमावसानिकं कर्म कुर्यात्।

श्र्यादिषु अन्तःपरिवारेषु ब्रह्मादिषु च एवं पूर्वोक्तरीत्या तत्त्वन्यासः होमश्च कर्तव्यः। सर्वेषां प्राणप्रतिष्ठाहोमन्यासकाले अर्घ्यादिभिः उपचारैः उपचर्य चतुर्विधं अन्नं प्रणवेन निवेदयेत्। भोगिभोगे आसीने शयाने वा अनन्तस्यापि एवं एव कुर्यात्।

ततः प्रतिष्ठाकर्मसिद्ध्यर्थं 'रक्षाबन्धकर्म करिष्ये' इति संकल्प्य, मूलबेरे यथाविधि रक्षाबन्धनं कृत्वा, अभिनवैः

---

१ ओं नारायणाय विद्महे वासुदेवाय धीमहि।
तन्नो विष्णुः प्रचोदयात्॥

कंबलैः वस्त्रैश्च 'युवा सुवासाः'[1] इति प्रतिमां आच्छाद्य, द्वारि 'ओं नमः सुदर्शनाय चक्रराजाय ज्वालामालिने हुं फट् स्वाहा' इति मन्त्रेण सुदर्शनं आवाह्य अभ्यर्च्य, चक्रमुद्रां प्रदर्श्य, तत्र बलिं च निक्षिपेत्।

महाप्रतिष्ठाविधाने तु इन्द्रादिपरिवारेषु स्वस्वस्थानेषु स्थाप्येषु देवेन साकं यथायोग्यं जलाधिवासछायाधिवासनयनोन्मीलनस्नपनादिकं कर्म कृत्वा, तत्तत्स्थानस्य पुरतः भूमौ पूर्ववत् धान्यपीठान् कृत्वा, शयनसामग्रीसंपूर्णेषु तेषु चण्डाविद्वारपालगरुडविष्वक्सेनावरणदेवान् महापीठादिपंचावरण बलिपीठान् च अधिवास्य तत्तत्स्थानानां पुरतः।

कुण्डेषु स्थण्डिलेषु वा परिवारहोमं कुर्यात्। प्रत्यावरणं अष्टाशा–कुण्डेषु यथाक्रमं पलाशखदिराश्वत्थसक्षन्यग्रोधबिल्वोदुंबरकाश्मर्यसमिधः स्युः। एताभिः समिद्भिः आज्येन चरुणा च वक्ष्यमाणैः मन्त्रैः प्रतिदैवतं अष्टोत्तरशताहुतीः गरुडविष्वक्सेनचण्डादीनां पालाश्या आज्यचरुभ्यां पूर्वसंख्यया वक्ष्यमाणैः मन्त्रैः पृथक् वृतैः ब्राह्मणैः होमं कारयेत्।

गर्भगृहद्वारे, 'ओं त्रों चाण्डाय स्वाहा', 'ओं प्रों प्रचण्डाय स्वाहा', अर्धमण्डपद्वारे ओं शं शङ्खिने स्वाहा', 'ओं चं चक्रिणे स्वाहा', अधिष्ठाने गजाननादयः वासुदेवादयः

---

१ ओं युवाः सुवासाः परिवीत आगात् स उ श्रेयान् भवति जायमानः॥ तन्धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः॥

पुरुषादयः वा, आग्नेय्यां 'ओं गजाननाय स्वाहा', ऐशान्यां 'ओं अंबिकायै स्वाहा', गोपुरोत्तरसाले सूर्यगायत्र्या, दक्षिणे ईशाय दक्षिणामूर्तये वा, प्रतीच्यां उत्तरसाले सूर्याय, दक्षिण-साले ओं चन्द्रमसे, अन्तर्मण्डपद्वारे ओं जयाय, ओं विजयाय इत्यावरणदेवताः।

आग्नेय्यां 'ओं कामाय', याम्यायां 'ओं ब्रह्मणे' नैर्ऋते 'ओं गजाननाय', वारुण्यां 'ओं षण्मुखाय', वायव्ये 'ओं दुर्गायै', उत्तरे 'ओं धनाधिपतये', ऐशाने 'ओं शङ्कराय स्वाहा', तत्रैव 'ओं क्षेत्रपालाय', उत्तरे ब्रह्मणे, ऐशाने 'ओं महिषासुर-मर्दिन्यै', नृत्तार्थमण्डपार्चे मूलबेराभिमुखं 'ओं वक्रतुण्डाय विद्महे सुवर्णपक्षाय धीमहि तन्नो गरुडः प्रचोदयात् स्वाहा', तत्रांगणे नैर्ऋते 'ओं श्रीं श्रियै', अङ्गणे स्वस्वस्थानेषु इन्द्रा-दयः, इन्द्रस्य 'ओं त्रातारमिन्द्र' अवितारमिन्द्र' हवे हवे सुहवँ शूरमिन्द्र' हुवेन शक्रं पुरुहूतमिन्द्र स्वस्ति नो मघवा धात्विन्द्रः स्वाहा', अग्नेः 'अयाश्चाग्नेस्यनभिशस्तीश्च सत्य मित्वमया असि अयसा मनसा धृतोयसा हव्यमूहिषे अयानो धेहि भेषजं स्वाहा',

यमस्य 'यदुलूको यदि मोघमेतत् यत् कपोतः पदमग्ने कृणोति यस्य दूतः प्रहित एतत् तस्मै यमाय नमो अस्तु मृत्यवे स्वाहा', निर्ऋते, 'असुन्वन्तमयजमानमिच्छस्तेनस्ये-त्यां तस्करस्यान्वेषि अन्यमस्मदिच्छ सात इत्यानमो देवि

निर्ऋते तुभ्यमस्तु स्वाहा', वरुणस्य, 'इमम्मे वरुण'[1] इत्यारभ्य 'आयुः प्रमोषीः स्वाहा', इत्यन्तेन, वायोः 'आनोनियुद्भिश्शतिनीभिरध्वरं सहस्रिणीभिः उपयाहि यज्ञं वायो अस्मिन् हविषि मादयस्व यूयं पात स्वस्तिभिः सदा नः स्वाहा', सोमस्य 'संते पयांसि समु यन्तु वाजाः संवृष्ण्यान्यभिमातिषाहः आप्यायमानः अमृताय सोम दिवि श्रवांस्युत्तमानिधिष्व स्वाहा', ईशानस्य 'तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसेहूमहे वयं, पूषानो यथा वेदसामसद्वृधेरक्षितापायु रदस्थः स्वस्तये स्वाहा', इदं एकावरणमात्रविषयम् ।

अन्तर्हारोपेते धाम्नि तु अन्तर्मण्डल नाम्नि प्रथमावरणे गोपुरोत्तरसाले 'ओं पुरुषाय स्वाहा', दक्षिणसाले सत्याय, आग्नेये हयग्रीवाय, दक्षिणस्यां संकर्षणाय, नैर्ऋते वराहाय, वारुण्यां प्रद्युम्नाय, वायव्ये अनन्ताय, उत्तरस्यां अनिरुद्धाय, ऐशान्यां नृसिंहाय, अङ्गणे इन्द्रादिपीठिकास्थानेषु 'ओं चक्रिणे स्वाहा', 'ओं मुसलिने स्वाहा', 'ओं शार्ङ्गिने स्वाहा', 'ओं खड्गिने स्वाहा', 'ओं हलिने स्वाहा', 'ओं गदिने स्वाहा', 'ओं पाशिने स्वाहा', 'ओं वज्रिणे स्वाहा', अन्तर्हारनाम्नि द्वितीयावरणे गोपुरोत्तरसाले सूर्याय, दक्षिणे चन्द्रमसे, आवरणे आग्नेये कामाय, याम्यायां ब्रह्मणे, नैर्ऋते गजाननाय,

---

१ इमम्मे वरुण श्रुधी हवमद्या च मृडय ।। त्वामवस्युराचके ।। तत्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः अहेडमानो वरुणेहवोध्युरुश ठँ समानऽआयुः प्रमोषीः ।।

वारुण्यां षण्मुखाय, वायव्ये दुर्गायै, सौम्यायां धनाधिपतये, ऐशाने शङ्कराय, तदावरणगोपुरचतुष्टयद्वारपालाः—पूर्वद्वारे पद्मधराय, गदाधराय, दक्षिणे खड्गधराय शार्ङ्गधराय, पश्चिमे वज्रधराय मुसलधराय, उत्तरे पाशधराय अङ्कुशधराय, अङ्गणे पीठिकास्थानेषु इन्द्रादयः, मध्यान्तर्हारनाम्नि तृतीयावरणे गोपुरचतुष्टयद्वारपालाः— धात्रे, अर्यम्णे, विधात्रे, मित्रावरुणाय, भगाय, विवस्वते, पूष्णे, सवित्रे, रवये, त्वष्ट्रे, (?) अग्नियममध्ये—ओं धराय, ध्रुवाय, सोमाय अद्भ्यः, अनलाय, प्रत्यूषाय, प्रभासाय, यमनिर्ऋतिमध्ये—कव्यवाहे, अनलाय, सोमाय, त्वष्ट्रे, यमाय, अर्यम्णे, अग्निष्वात्ताय, सोमपे, वर्हिषदाय, निर्ऋतिवरुणमध्ये—रुद्राय, अग्नये, विष्णवे, वरुणवायुमध्ये—आवहाय, विवहाय, उद्वहाय, संवहाय, निवहाय, अनुवहाय, व्यवहाय, वायुकुवेरमध्ये—वसिष्ठाय, वामदेवाय, जाबालये, काश्यपाय, भृगवे, जमदग्नये, भरद्वाजाय, कुवेरेशानयोः मध्ये—मृगाय, व्याधाय, शर्वाय, निर्ऋतये, ध्वजाय, एक पदे, अहये वुद्ध्न्याय, पिनाकिने, यवदाय, स्थाणवे, भगाय, कपालिने,

तत्रैव—क्षेत्रपालाय, प्रांगणे इन्द्रादिपीठिकास्थानेषु कुमुदादयः, मध्यमायां पूर्वादिसालगोपुरद्वारपालाः, पूर्वे:—दुर्जयाय, प्रबलाय, दक्षिणे—विश्वभावनाय, पुष्कराय, पश्चिमे—संभवाय, प्रभवाय, उत्तरे—सुशोभनाय, सुभद्राय। आवरणदेवतास्तु—पूर्वे अनलाय, रवये, पुरन्दराय, अग्नये, अद्भ्यः,

आग्नेय, आदित्यादिनवग्रहेभ्यः याम्ये, अग्नये, वायवे, प्रजायै, सक्त्वे, नैर्ऋते अश्विभ्यां, वारुणे लक्ष्म्यै, सरस्वत्यै, विघ्नाय, वायव्ये—इन्द्रादयः, उत्तरस्यां वास्तुदेवाः, ओं ब्रह्मणे मरीचये, अत्रये, विवस्वते, पृथिवीश्वराय, चित्राय, अपवत्साय; सन्धात्रे, सवित्रे, रुद्राय, रुद्रजयाय, इन्द्राय, इन्द्रजयाय, ईशानाय, पर्जन्याय, जयन्ताय, महेन्द्राय, भानवे, सत्याय, भृशाय, अन्तरिक्षाय, अग्नये, पूष्णे, कुशाय, भानवे, गृहक्षताय, वमाय, गन्धर्वाय, भृङ्गराजाय, मृगाय, सुग्रहाय, पुष्पदन्तकाय, वरुणाय, भृगवे, श्यावाय, यक्ष्मणे, मनोजवाय, रोगाय, नागाय, मृत्यन्ताय, फल्लाटाय, सोमाय, अदितये, वास्तु-नाथाय, ऐशाने सप्तविंशतिनक्षत्रेभ्यः, इन्द्रादिपीठिकासु उपेन्द्राय, प्राकृताय, पुण्याय, पुष्कराय, विश्वभावनाय,. असुर-घ्नाय, कृतांताय, भूतनाथाय, महामर्यादाय, गोपुरद्वारपालाः कुमुदादयः, आवरणे पूर्वाद्याशासु सिद्धेभ्यः, ऋषिभ्यः, नागेभ्यः, असुरेभ्यः राक्षसेभ्यः, यक्षेभ्यः, विद्याधरेभ्यः,. सौर-भेयीभ्यः, गुह्यकेभ्यः, गन्धर्वेभ्यः, अप्सरोभ्यः, प्रजापतिभ्यः, अङ्गणे इन्द्रादिपीठिकासु विश्वेश्वराय, विश्वकृते,. विश्वाय, विश्वात्मने, विश्वलोचनाय,. विश्वपादाय, विश्वभुजाय, विश्व-कर्मकृते, 'ओं महापीठे सर्वेभ्यः विष्णुपार्षदेभ्यः-स्वाहा'।

एतत् प्रथमावरणादिपञ्चमावरणान्तम्। एवं परिवारहोमं प्रणवादिस्वाहान्तं स्वस्वमन्त्रेण पूजायां नमोन्तेन च ब्राह्मणैः कारयित्वा, तेभ्यश्च दक्षिणां दद्यात्।

ततः व्रीह्यादिभिः धान्यपीठं विधाय, तस्मिन् दर्भान् आस्तीर्य, परिस्तीर्य च, तस्मिन् लक्ष्मीरूपां पिण्डिकां आधार-शक्तिरूपां आधारशिलां च अधिवास्य पृथक् नवेन वाससा आच्छाद्य, पूर्ववत् स्थण्डिलं कृत्वा, तस्मिन् बहुबीजधातुलोह-रत्नानि भाजने निक्षिप्य, तद्वाससा आवेष्ट्य तत् निक्षिप्य, पूर्वं शय्यावेदिकायां शयानां प्रतिमां अभिनिकेतमुत्थाप्य, अर्घ्या-दिभिः अभ्यर्च्य, पायसादि चतुर्विधं अन्नं निवेद्य, महाकुम्भं च तथा संपूज्य, ततः पललचूर्णं लाजदधिसक्तुभिः बल्यन्नं संयोज्य,

"आद्याश्च कर्मजाश्चैव ये भूताः प्राक्दिशस्थिताः।
प्रसन्नाः परितुष्टास्ते गृह्णन्तु बलिकाङ्क्षिणः॥
वृक्षेषु पर्वताग्रेषु ये विदिक्षु च संस्थिताः।
भूमौ व्योम्नि स्थिता ये च बलिं गृह्णन्तु तेऽपि च॥
विनायकाः क्षेत्रपालाः ये चान्ये बलिकाङ्क्षिणः।
पूषाद्याः पार्षदाश्चैव प्रतिगृह्णन्त्विमं बलिम्॥
चण्डाद्याः कुमुदाद्याश्च ये भूताः सर्वतः स्थिताः।
आगच्छन्तु पदे सर्वे गृह्णन्तु ते इमं बलिम्॥"

इति गाथया सर्वतः दिक्षु बलिं दत्त्वा, ततः, 'ओं नमो भगवते स्वप्नाधिपतये सुस्वप्नं मम कुरु स्वाहा' इति मन्त्रेण आज्येन अष्टोत्तरशताहुतीः हुत्वा, अनन्तरं 'प्रतिष्ठार्थं रक्षा-बन्धनकर्म करिष्ये' इति संकल्प्य, पुण्याहं वाचयित्वा, देवस्य देव्याश्च यथाविधि दक्षिणवामकरेषु क्रमेण हेममयं प्रतिसरं

बद्ध्वा बालबिंबस्य पुरतः व्रीह्यादिभिः धान्यपीठिकां विधाय, तस्यां सलोहरत्नाश्वत्थपल्लवकूर्चसोपकुंभाष्टकं सकरकं महाकुंभं संस्थाप्य, उपकुंभाष्टके इन्द्रादीन् आवाह्य, अभ्यर्च्य, बालबिंबं संपूज्य, तच्छक्तिं महाकुंभे करके सुदर्शनं च आवाह्य, अभ्यर्च्य, तदनु मूर्तिपैः प्रतिकुण्डं पूर्णाहुतीश्च कारयेत् ।

तदानीं होमधूमः कमलकुवलयगन्धो यदि, हुतवहः रक्त-श्वेतवर्णः दक्षिणावर्तज्वालावान् यदि च तदानीं अत्यन्तं शुभाय कल्पते । तदा सवेदवाद्यघोषं 'सुस्वप्नसिद्ध्यर्थं स्वापं करिष्ये, इति संकल्प्य, भूमौ प्राचीनान् दर्भान् आस्तीर्य तेषु आचार्यं मूर्तिपयजमानाः स्वप्नार्थं शयीरन् ।

इति श्रीवराहगुरुणा विरचितायां क्रियाकैरवचन्द्रिकायां
शान्तिहोमपरिवारहोमविधिर्नाम
सप्तदशः परिच्छेदः

---

## अथ अष्टादशः परिच्छेदः

# पीठस्थापनम्

अथ प्रभाते कृतकृत्यः आचार्यः रात्रौ सुस्वप्ने सति अविचारयन् देवस्य प्रतिष्ठां आरभेत । दुस्स्वप्ने शान्तिहोमं पूर्ववत् कृत्वा तदन्वारभेत । एकबेरे तु द्वारस्य दक्षिणे पूर्ववत् वास्तुहोमं कृत्वा, तदनु आचार्यः गर्भगृहं प्रविश्य, तन्मध्ये

चतुरश्रां वृत्तां वा हस्तमात्रविस्तारायामयुतां निम्नचतुरावरणां शिलां विन्यस्य, वास्तुहोमाग्नौ समिदाज्यचरुभिः विष्णुगायत्र्या प्रत्येकं शताहुतीः हुत्वा, तच्छिलागर्तेषु प्रथमावरणे पूर्वादिषु यवव्रीहिनिष्पावप्रियङ्गुतिलमाषनीवारशालीनां अष्टानां बीजानि,

द्वितीयावरणे वज्रमौक्तिकवैदूर्यस्फटिकपुष्परागपद्मराग चन्द्रकान्तनीलानि अष्टौ रत्नानि, तृतीयावरणे मनश्शिलाहरिता- लांजनश्यामसीससौराष्ट्ररोचनागैरिकधातून् अष्टौ, चतुर्थावरणे सुवर्णरजतताम्रायस्त्रपुस्वर्णनिर्मितकूर्मशङ्खचक्राणि एतानि— मध्यगर्ते शालिबीजपारदब्रह्मरागकाञ्चनानि च निक्षिप्य, स्त्री- शिलया श्रीसूक्तेन पिधाय, सुधया दृढीकृत्य, ततः पुण्याहं वाचयित्वा, स्त्रीशिलां संप्रोक्ष्य, स्त्रीशिलापद्ममध्ये प्रणवं, कर्णिकायां अकारादीनि षोडशवर्णानि पूर्वादिषु दलेषु कादि- क्षान्तानि च वर्णानि विन्यस्य,

तेषु दलेषु पूर्वादिषु, ओं विमलायै नमः, ओं उत्कर्षिण्यै नमः, ओं ज्ञानिन्यै नमः, ओं क्रियायै नमः, ओं योगात्मिकायै नमः, ओं प्रह्व्यै नमः, ओं सत्यायै नमः, ओं ईशानायै नमः, कर्णिकायां ओं अनुग्रहशक्त्यै नमः, इति नवशक्तीः आवाह्य, गन्धादिभिः अभ्यर्च्य, पिण्डिकायां ओं श्रीं श्रियै नमः, इत्यावाह्य अभ्यर्च्य, नवेन वाससा आच्छाद्य, द्वारे पूर्ववत् सुदर्शनं अभ्यर्च्य, चक्रमुद्रां[1] प्रदर्श्य, बहिः निर्गत्य,

---

१ चक्रमुद्राः—स्पष्टौ प्रसारितौ हस्तौ परस्परनियोजितौ ॥
भ्रमणाच्चक्रवत्तौतु चक्रमुद्रेति कीर्तिताः ॥

शय्यावेदिस्थं देवं यथाविधि संपूज्य, द्वारतोरणकुंभस्थान् देवान् उद्वास्य, कुण्डस्थानपि उपरिष्टात्तन्त्रपूर्वकं देवस्य हृदये समारोप्य, महाकुंभोपकुंभान् अष्ट मङ्गलानि च उद्धृत्य, वहद्भिः मूर्तिपैः सह आचार्यः स्वयं करकं गृहीत्वा, अविच्छिन्नगलन्तीनिर्गलितवारिधारया अग्रे मार्गं सिञ्चन् गेहं प्रदक्षिणीकृत्य गर्भमन्दिरं प्रविश्य, तत्र धान्यपीठे कुंभान् क्रमेण संस्थाप्य, पुनः शय्यावेदिस्थदेवनिकटं आसाद्य,

ब्राह्मणानुज्ञापूर्वकं देवं हस्ताभ्यां 'उत्तिष्ठ ब्रह्मणस्पते'[1] इत्युत्थाप्य, छत्रध्वजपताकाद्यैः अखिलवाद्यघोषैः ब्रह्मघोषैः अनूचानैः ब्राह्मणैः वैष्णवैः अधीयानैः मूर्तिपैश्च साकं आचार्यः षडङ्गन्यासादिकं कृत्वा, गेहं प्रदक्षिणीकृत्य, मूलमन्दिरं प्रविश्य, तत्र गर्भगृहद्वारि देवं अर्घ्यादिभिः संपूज्य, अन्तः प्रवेश्य, पिण्डिकां प्रदक्षिणीकृत्य, सुमुहूर्ते 'प्रतिष्ठासि' इति साम, 'आत्वाहार्षं'[2] इति, 'ध्रुवाद्यौः'[3] इति मन्त्रान् गुर्वनुज्ञया, मूर्तिपेषु पठत्सु,

---

१ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे ॥ उपप्रयन्तु मरुतः सुदानव प्राशूर्भवा स चा ॥

२ आ त्वाहार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलिः । विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधिभ्रशत् ॥ (शु० य० १२।११)

३ ध्रुवाद्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वतो इमे ।
ध्रुवं विश्वमिदं जगद् ध्रुवो राजा विशामयम् ॥ ×
(ऋ० १०।१७३।४)

आचार्यः देवस्य पुरतः स्थित्वा, 'ओं लां नमः पराय सर्वात्मने नमः' इति मन्त्रेण पिण्डिकायां देवं संस्थाप्य, देवस्य स्थितेः समतां ऊर्ध्वलंबितसूत्रेण निश्चित्य, पिण्डिकानालरन्ध्रं लाक्षासर्जरससिक्त कुरुविन्दगुग्गुलु गैरिकगुडतैल दृढपेषणज-नितेन अष्टबन्धनेन दृढीकृत्य पुण्याहं वाचयित्वा प्रोक्ष्य अनन्तरं देवं आवाहयेत् ।

"आवाहयामि तं देवं तमसः परमव्ययम् ।
आनन्दं सर्वगं नित्यं व्योमातीतं परात्परम् ॥"

मरीचिचक्रमध्यस्थं वासुदेवमजं विभुम् इति ध्यात्वा, द्विषट्कमनुना देवमावाह्य ब्रह्मरन्ध्रेण प्रतिमायां प्रविष्टं ध्यात्वा, कुंभस्थं देवं प्रतिमायां मूलेन संयोज्य, देवस्य तेनैव न्यासं कृत्वा, सान्निध्यं प्रार्थ्य, पूर्वोक्तविधानेन परिवारकल्पने च विधाय, देवं अर्घ्यादिभिः अभ्यर्च्य, पायसान्नं निवेद्य, प्रत्यग्रैः वसनैः कम्बलै र्वा 'युवा सुवासाः'[1] इति मन्त्रेण

---

× ध्रुवन्ते राजावरुणो ध्रुवं देवो बृहस्पतिः ।
ध्रुवन्त इन्द्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवम् ॥
ध्रुवं ध्रुवेण हविषाऽभि सोमं मृशामसि ।
अथोत इन्द्रः केवलीर्विशो बलिहृतस्करत् ॥
(ऋ० १०।१७३।५;६)

---

१ युवा सुवासाः परिवीत आगात् स उ श्रेयान् भवति जायमानः । तन्धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः ॥

परिवेष्ट्य दिनत्रयं गर्भमन्दिरद्वारं कवाटेन बन्धयेत्। तदा ब्राह्मणानपि वित्तगो भोजनादिभिः तोषयेत्।

चतुर्थे अहनि प्राप्ते प्रातरेव कवाटं उद्घाट्य, देवस्य स्नपनं यथाविधि कृत्वा, तद्दिने ध्वजारोहणं कृत्वा, महोत्सवं कुर्यात्। अयं विधिः एकबेरमात्रविषयः।

बहुबेरविधाने तु बिंबं चित्रादिकं चेत् रत्नन्यासः शूलस्थापनवेलायामेव कार्यः।

प्रतिष्ठासमये गर्भगेहं प्रविश्य, मार्जनालेपनादिभिः संशोध्य, तत्र चन्दनार्द्राणि सूत्राणि प्रागुदङ्मुखानि अष्टौ अष्टौ निपात्य, तेषु एकोनपञ्चाशत्कोष्ठेषु मध्यभागः ब्राह्मः, द्वितीयः दैवः, तृतीयः मानुषः, तुर्यः पैशाचः।

ब्राह्मे अर्चनापीठः, दैवे स्थितिः, मानुषे परिवारः, पैशाचे आयुधानि, किंचित् मानुषमाश्रित्य दैवे आसनं, दिव्यमानुषयोः शय्या, पैशाचे यानं दैवे देव्यः, आसीने देवे आसीनाः, स्थिते स्थिताः पार्श्वे, शयाने यानारूढे च देवे देव्यः यथाभिमतं कल्पनीयाः।

यद्वा,—उदङ्मुखानि दश प्राङ्मुखानि तावन्ति सूत्राणि निपात्य, तेषु एकोत्तराशीतिकोष्ठेषु मध्यमः भागः ब्राह्मः द्वितीयः दैवः, तृतीयः पैतृकः, तुरीयः मानुषः, पञ्चमः पैशाचः, इति भागान् कृत्वा, एकबेरस्य ब्राह्मो भागः, बहुबेरस्य दैविकः, दैवमानुषयोः आसनं, दैवमानुषपैतृकेषु शयनं, मानुषपैशाचयोः यानं इति वा कुर्यात्। उक्तस्थानविपर्यये राजराष्ट्रं विनश्यति।

तस्मात् यथाशास्त्रं साधयेत् ।

नपुंसकशिलायां पूर्ववत् रत्नन्यासः । स्थितस्य पादमूले च अन्येषां आसनादीनां पूर्वं रत्नानि भाजने अधिवास्य, पृष्ठतः एव रत्नन्यासं कुर्यात् । कर्माद्यर्चाः तु महाकुंभोपकुंभकरकैः साकं समुद्धृत्य मूर्तिपैः साकं स्वयं आचार्यः करकं गृहीत्वा सवेद-वाद्यघोषं देवस्य अग्रे अविच्छिन्नया गलन्तिकागलतवारि-धारया मार्गं सिञ्चन् स्वस्य बिंबस्य च अन्तरा पथि कश्चिदपि यथा न गच्छेत् तथा देवागारं प्रादक्षिण्येन प्रविश्य, तत्र द्वारि देवं अर्घ्यादिभिः अभ्यर्च्य अन्तः प्रविश्य कर्माचं अर्चनापीठे नृसूक्तेन निवेश्य,

उत्सवाद्यर्थबिम्बानि च तत्पार्श्वयोः निवेश्य, धारावशिष्टं गलन्तिकोदकं शरावे निक्षिप्य, शलाकिकामात्रया धारया, मूलमन्त्रेण बिम्बानां परिषेचनं कृत्वा, देवस्य अग्रे धान्यराशिषु कुम्भान् निक्षिप्य वक्ष्यमाणेन विधिना आवाहयेत् ।

आचार्यः सुमुहूर्ते मूलबेरस्य पुरतः स्थित्वा, पद्मासनं बद्ध्वा, प्राणानायम्य, सनातनं ब्रह्म ध्यायेत् ।

"वासुदेवमजं शान्तं उज्ज्वलं सन्ततोदितम् ।
अनादिमध्यनिधनं एकं व्याप्याचलं स्थिरम् ॥
चिद्घनं परमानन्दं तमसः परमव्ययम् ।
ज्ञानशक्तिबलैश्वर्यवीर्यतेजस्समन्वितम् ॥
अपादपाणिं अस्पृश्यं अचक्षुश्श्रवणादिकम् ।
सर्वत्र करवाक्पादं सर्वतोक्षिशिरोमुखम् ॥

गतागतविनिर्मुक्तं रविकोटिसमप्रभम् ।
चैतन्यं सर्वगं नित्यं व्योमातीतं तदद्भुतम् ॥
चित्सामान्यं जगत्यस्मिन् मूलमन्त्रात्मकं परम् ।
एवं विधं सदाविष्णु आह्लादं प्रणवात्मकम् ॥"

इति सम्यक् ध्यात्वा,

सदाविष्णुं महाविष्णौ नियोज्य, महाविष्णौ विष्णौ नियोज्य, विष्णुं स्वहृदयकमले, 'ओं यां नमः पराय पुरुषात्मने नमः' इत्यावाह्य, अञ्जलिं कृत्वा, अञ्जलिमध्ये पद्मासनं विचिन्त्य, तद्भद्रासनं ध्यात्वा, तस्मिन् स्वहृदयकमलस्थितं विष्णुं,

'ओं रां नमः पराय विश्वात्मने नमः' इत्यावाह्य, तं अञ्जलिस्थं, 'ओं वां नमः पराय निवृत्त्यात्मने नमः', इति प्रतिमायां ब्रह्मरन्ध्रमार्गेण प्रविष्टं विचिन्त्य, 'ओं लां नमः पराय सर्वात्मने नमः' इति विम्वं सर्वतः व्याप्य स्थितं स्मृत्वा, महाकुम्भगतां शक्तिं, कुम्भावाहितबालकौतुकशक्तिं, मूर्तिकुम्भगतां शक्तीश्च, तत्तत्कुम्भगतजलस्थितकूर्चैः मूलेन देवेन संयोज्य, बिम्बब्रह्मरन्ध्रं प्रणवेन पिधाय, आवाहनस्थापनमुद्रे प्रदर्श्य, 'जितं ते'[1] इति स्तुत्वा, प्रतिमामुद्रां प्रदर्श्य,

---

१ ओं जितन्ते पुण्डरीकाक्ष नमस्ते विश्वभावन
सुब्रह्मण्य नमस्तेऽस्तु महापुरुषपूर्वज ॥१॥
नमो हिरण्यगर्भाय प्रधानाव्यक्त रूपिणे ॥२॥ ×

देवं आत्मनः अभिमुखं ध्यात्वा, प्रणम्य उत्थाय, सन्निधानसन्निरोधनसाम्मुख्यप्रार्थनामुद्राः प्रदर्श्य, 'स्वागतं भगवतः' इत्युक्त्वा, स्वागतमुद्रां प्रदर्श्य, देवस्य मूलमन्त्रेण यथाविधि न्यासं कुर्यात्।

स्थितौ स्थितिन्यासः, आसने सृष्टिन्यासः, संहारशयने संहृतिन्यासः, सृष्टिशयने सृष्टिन्यासः, भोगशयने योगशयने विश्वरूपे च स्थितिन्यासः, यानारूढे न्यासत्रयम। यद्वा—आसनादिषु सर्वत्र स्थितिन्यासः एव कार्यः।

श्र्यादिदेवीनां ब्रह्मादीनां च महाकुम्भजलेन स्वस्वनाममन्त्रेण प्रोक्ष्य, श्र्यादिदेवीनां षडङ्गन्यासं, ब्रह्मणः सृष्टिन्यासं, रुद्रस्य संहारन्यासं च कुर्यात्।

चण्डप्रचण्डगरुडविष्वक्सेनादिसर्वपरिवारान् स्वे स्वे स्थाने संस्थाप्य, आचार्यः स्वयमेव महाकुम्भं गृहीत्वा, तज्जलेन कूर्चेन चण्डादिपरिवाराणां प्रणवादिनमोन्तेन स्वस्वमन्त्रेण तत्क्षणे एव प्रोक्षणं कृत्वा, अवशिष्टं महाकुम्भजलं बलिपीठे संसिच्य, महानसाग्निकुण्डे, अधिश्रपणे च गार्हपत्याग्निं

---

× नैव किञ्चिदसाध्यन्ते न च साध्योऽसि कस्य चित्॥
नैव किञ्चित् परोक्षन्ते प्रत्यक्षोऽसि न कस्यचित्॥३॥
न ते रूपं न चाकारो नायुधानि न चास्पदम्॥
तथापि पुरुषाकारो भक्तानां त्वं प्रकाशसे॥४॥
देवानां दानवानां च सामान्यमधिदैवतम्॥
सर्वदा चरणद्वन्द्वं व्रजामि शरणं तव॥५॥

संस्थाप्य, आचार्यः यजमानेन सह देवस्य पार्श्वं आसाद्य, प्रणम्य उत्थाय अञ्जलिं बद्ध्वा इमां गाथां उदीरयेत्।

"भक्तवत्सल भक्तानां अभिप्रेतार्थसाधक।
प्रार्थये त्वामहं देव मदनुग्रहकाम्यया॥
सन्निधत्स्व चिरं स्थाने कल्पिते श्रद्धया मया।
प्रसीद देवदेवेश पूजामपि गृहाण मे॥
ग्रामस्य राज्ञः राष्ट्रस्य प्रजानां इन्दिरावर।
देहि पुष्टिं च तुष्टिं च गतिं च परमां तथा॥"

इति विज्ञाप्य, देवाय मधुपर्कं निवेदयेत्।

तदानीमेव आचार्यानुज्ञया, यजमानः भक्तिनम्रेण शिरसा देवस्य दक्षिणहस्ते तोयपूर्वं यथावित्तानुसारतः गोभूहिरण्यादि-पूजोपकरणानि आत्मानं पुत्रपौत्रदारादीन् हस्त्यादिवाहनानि दासीदासान् च सर्वस्वं देवस्य पार्श्वतः आनीय (आचार्येण) दद्यात्। एवं आचार्यमपि पूजयेत्।

ततः आचार्यः स्वर्णादिपात्रं विष्णुगायत्र्या प्रक्षाल्य, देवस्य पुरतः धान्यराशौ तत्, 'अस्मद्गुरुभ्योः नमः' इति संस्थाप्य, गन्धोदकेन आपूर्य, तस्मिन् परमात्मानं आवाह्य, वेदादिना गन्धादिभिः अभ्यर्च्य, यजमानं आहूय, देवस्य अभिमुखं स्थापयित्वा, तस्य अञ्जलिं सपुष्पेण अर्घ्यजलेन संपूर्य, इमां गाथां उदीरयेत्।

"त्वया विना नमे किञ्चित् मां विना तवकस्तथा।
तस्मान्मामात्मसात्कर्तुं प्रसीदपरमेश्वर॥

भूमौ स्खलितपादानां भूमिरेवावलंबनम्।
त्वयि विप्रतिपन्नानां त्वमेव शरणं विभो ॥"

इत्याचार्यः देवं विज्ञाप्य, द्वादशाक्षरमन्त्रेण यजमानस्य आत्मानं अञ्जलिस्थपुष्पार्घ्यजलेन सह देवपादपङ्कजे, 'अस्मद्गुरुभ्यः नमः' इति समर्पयेत्।

प्रतिष्ठान्ते नृत्तगीतवाद्यवेदघोषनानाविधस्तोत्रादिभिः उपचारैः देवं तोषयित्वा, चतुर्विधं अन्नं विधिवत् निवेद्य, महानसे अग्नियमयोः मध्ये चतुरश्रकुण्डे नित्याग्निं प्रतिष्ठाप्य, संस्कृत्य, समिदाज्यचरुभिः मूलमन्त्रेण यथाविधि पूर्णाहुत्यन्तं हुत्वा बलिपीठान् संस्कृत्य, तत्तदावरणेषु प्रतिष्ठाप्य, तेषु नित्यं यथाविधि बलिं दद्यात्।

बहुबेरप्रतिष्ठायां तु कवाटबन्धनं न कुर्यात्। चतुर्थे दिवसे प्राप्ते उत्तमत्रितयेन, मध्यमत्रितयेन वा देवं चतुस्स्थानार्चनपूर्वकं कलशैः यथाविधि संस्नाप्य, तदन्ते ध्वजारोहणपूर्वकं उत्सवं कारयेत्।

तदनु यजमानः तस्मिन् समये सुवर्णकुसुमवस्त्रअङ्गुलीयककुण्डलक्षेत्रारामगृहदासीदासशिबिकागजतुरगादिभिः जीवाजीवधनैः च, आचार्यं तोषयित्वा, तस्मै च आत्मानं पुत्रदारादिनिरपेक्षः सन् निवेद्य, गुरुं मातृत्वेन पितृत्वेन च संभाव्य, प्रणम्य, तस्मै धेनूनां सहस्रं, अथवा निष्कानां उत्तमां दक्षिणां, तदर्धं वा, अर्धार्धं वा दद्यात्।

अत्र श्र्यादिदेवीनां देवेन साकं कल्पने विवाहकर्म न

कुर्यात्। पृथक् चेत् उद्वाहकर्म अङ्कुरपूर्वकं यथाविधि कुर्यात्।

"कर्षणादिप्रतिष्ठान्तं अङ्गत्वेन यदाहृतम्।
तदिष्टशिष्टं सकलं गुरोरेव धनं भवेत्॥"

इति वचनात् सर्वमपि गुरवे दत्त्वा, मूर्तिपानां परिचारकाणां अन्येषां नृत्तगीतरतानां सदस्यानां च, यथावित्तानुसारतः दक्षिणां दत्त्वा, तदनु देवं स्तुत्वा, प्रणम्य,

देवेन अनुगृहीतः यजमानः गुरुणा सह, कन्यकागोभूहिरण्यादीनि दानानि देवसन्निधौ द्विजेभ्यः दत्त्वा, बहिः निर्गत्य कृतकृत्यः देवं आचार्यं च नमस्कृत्य, गुरुं शिबिकादिकं आरोप्य, वाद्यघोषपुरस्सरं ग्रामं प्रदक्षिणीकृत्य, तद्वेश्म प्रवेशयेत्।

"स्थापकः देवदेवस्य यः पूर्वं देशिकोत्तमः।
तेनैवाराधनं कार्यं तद्वंश्यैरपि निर्गुणैः॥
पूजा प्रीतिकरी सैव देवस्य कमलासन।
आदौ विभूतिविस्तारः यादृशः परिकल्पितः॥
संकोचमन्तरेणैव कुर्यात् तादृशसंपदः।
देवभूत्यनुसारेण रक्षेत् देवोपजीविनः॥
न क्लेशयेत् भागवतान् तथैव परिचारकान्।"

इति श्रीवराहगुरुणा विरचितायां क्रियाकैरवचन्द्रिकायां
प्रतिष्ठाविधिः नाम
अष्टादशः परिच्छेदः

## अथ एकोनविंशः परिच्छेदः

# मत्स्यादिमूर्तिप्रतिष्ठाविधिः

अथ विभवमूर्तिस्थापनविधिः उच्यते—

मत्स्यादिमूर्तीनां महाप्रतिष्ठायां इव अधिवासादिकं सर्वमपि कुर्यात्। अत्र तु विशेषः कथ्यते।

मत्स्यमूर्तेः वारुणसाम्ना नृसूक्तेन महाकुम्भं अभिमन्त्र्य तस्मिन्, 'ओं नमो भगवते म्यूं मत्स्यरूपाय' इति वा मूलमन्त्रेण वा समावाह्य, आचार्यः कुम्भजलेन प्रोक्ष्य,

"मीनात्मने नमस्तुभ्यं वेदरक्षाविधायिने।
प्रलयार्णवदुर्वारवारिपूरविहारिणे ॥"

इति मन्त्रेण उपतिष्ठेत।

कूर्मस्य, वारुणसूक्तेन महाकुम्भं अभिमन्त्र्य, अष्टाक्षरविद्यया समावाह्य, कर्मावसाने,

"तुभ्यं नमस्क्रियां कुर्मः कूर्मरूपाय वेधसे।
धारिणे मन्दरस्याद्रेः विबुधानन्ददायिने ॥"

इत्युपतिष्ठेत।

वराहस्य, वराहरूपिणं महाकुम्भे पुरुषसूक्तेन आवाह्य कर्मावसाने,

"क्रोडात्मत्ते नमस्तुभ्यं यज्ञदेहाय (वज्ररूपाय) वेधसे।
दंष्ट्राग्रविधृताशेषधरणीधरणीधर ॥"

इत्युपतिष्ठेत।

नृसिंहस्य, नृसिंहरूपिणं महाकुम्भे, 'युञ्जते' इति अनुवाकेन समावाह्य, कर्मावसाने,

"निशातनखदंभोलिदलितासुरवक्षसे ।
दर्शिताश्रितवात्सल्यनृसिंहवपुषे नमः ॥"

इत्युपतिष्ठेत ।

वामनस्य, वामनं महाकुम्भे 'युञ्जते' इत्यनुवाकेन समावाह्य कर्मावसाने,

"बलिद्विषे नमस्तुभ्यं परित्रातबलद्विषे ।
वामनाय महाकाय वञ्चिताशेषमानव ॥"

इति उपतिष्ठेत ।

भार्गवरामस्य, जामदग्न्यं महाकुम्भे पौरुषेण सूक्तेन आवाह्य, कर्मावसाने,

"त्रिसप्तकृत्वः क्षत्राणां निहन्त्रे तिग्मतेजसे ।
नमस्तुभ्यं भगवते परश्वथविधारिणे ॥"

इत्युपतिष्ठेत ।

राघवस्य, रामं सीतालक्ष्मणादिभिः सहितं रहितं वा महाकुम्भे पुरुषसूक्तेन आवाह्य, कर्मावसाने,

"नमस्तुभ्यं भगवते राघवाय महात्मने ।
रावणादिजगद्द्वेषिनिबर्हणमहौजसे ॥"

इत्युपतिष्ठेत ।

रामप्रतिष्ठा पृथक् चेत् परिवारात्मनः हनूमत्प्रमुखान् च प्रतिष्ठापयेत् । प्रथमावरणे प्राच्यां भरतं, दक्षिणे जानकीं, प्रतीच्यां जांबवन्तं, उदीच्यां लक्ष्मणं, आग्नेयादिविदिक्षु

सुग्रीवविभीषणनलशत्रुघ्नान् च संस्थाप्य, द्वितीयावरणे पूर्वादि-दिक्षु वसिष्ठवामदेवजाबालिगौतमभरद्वाजकौशिकवाल्मीकि-नारदान्, तृतीयावरणे इन्द्रादिलोकपालान्, गरुडस्थाने हनूमन्तं, विष्वक्सेनस्थाने नीलं गुहं वा स्थापयेत्। उत्सवे तु ध्वजपटे गरुडं हनूमन्तं वा लिखित्वा ध्वजारोहणं कुर्यात्।

बलरामस्य, बलरामं पूर्ववत् कुम्भे समावाह्य, कर्मावसाने,

"बलिने बलभद्राय नमः शेषमहाहये।
तुभ्यं मालेव महती धरा येन शिरोधृता॥"

इत्युपतिष्ठेत।

कृष्णस्य, कृष्णं भगवद्बिम्बवत् संस्थाप्य, कर्मावसाने,

"वृष्णिवर्याय कृष्णाय नमस्तुभ्यं मधुद्विषे।
भूभारभूतकंसादिमहासुरनिघातिने॥"

इत्युपतिष्ठेत।

रुक्मिणीसत्यभामादीनां श्र्यादीनामिव उद्वाहकर्म कुर्यात्।

कल्किविष्णोः पूर्ववत् कृत्वा, कर्मान्ते,

"म्लेच्छानामुपसंहर्त्रे साधूनां स्थितिहेतवे।
नमस्तुभ्यं भगवते भूसुरान्वयजन्मने॥"

इत्युपतिष्ठेत।

मत्स्यादिदशमूर्तीनां षोडशन्यासः न इष्यते। लोह-बिम्बानां च।

तासां शिलामयीनां वर्णचित्रणं यदि, अधिवासादिकं कर्म पूर्वं कृत्वा पश्चात् वर्णलेपनं विधाय, अनन्तरं आवाहनादिकं

कुर्यात्। ध्रुवबिम्बस्थितेः भिन्नकाले कर्माद्यर्चास्थापनं यदि, तासां पृथगेव शयनादिकं कुर्यात्। ब्राह्मे कर्मार्चां, याम्ये उत्सवकौतुकं, उत्तरे तीर्थस्नपनबिम्बे, दक्षिणे शयनोत्थापनबिम्बे, बलिबिम्बं च, अन्यानि लोहबिम्बानि लौकिकानि इष्टभूमिषु च स्थापयेत्।

यद्वा उत्सवार्थबिम्बानि द्वारपार्श्वयोः वा, अभिषेकमण्डपे वा दक्षिणाभिमुखानि स्थापयेत।

जलाधिवासयोग्यानां तु छायाधिवासनं कूर्चादर्शमण्डल-स्नपनं कूर्चद्वारा शयनाधिवासं च कृत्वा, सर्वं अवशिष्टं षोडशन्यासचतुर्थस्नपनवर्जितं पूर्ववत् कुर्यात्।

वटपत्रशायिनस्तु गर्भमन्दिरोदरे अभितः वारिधं विलिख्य, तद्दले शयानं श्यामलं कोमलाकृतिं बालवपुषं देवं चित्राभासेन कल्पयित्वा, द्वारपार्श्वयोः मार्कण्डेयं महीं च विलिख्य चित्राभासोक्तविधिना प्रतिष्ठाकर्म कुर्यात।

अथ लक्ष्म्यादीनां प्रतिष्ठाविधिः उच्यते—

देवस्य देवीनां च स्थापनं यदि समानकालीनं तदा देव्याः सहैव शयनं; कालभेदे तु पृथगेव कुर्यात्।

पूर्ववत् समध्यवेदिकं मण्डपं कल्पयित्वा, तस्मिन् वेदि-कायां शाययित्वा, प्रागादितोरणेषु बलाकिनीवनमालिनीविभी-षिकाशाङ्करीः, द्वारकुम्भेषु द्वन्द्वशः ज्येष्ठाविद्याश्रद्धाकान्तिश्रीतु-ष्टिक्षमावृद्धीः, पूर्वादिध्वजेषु द्वन्द्वशः, धृतिलज्जाजयामाया-सावित्रीक्षमाशुद्धिश्रद्धाश्च संपूज्य, प्रागादिहोमकुण्डेषु लक्ष्मी-

सरस्वतीपुष्टितुष्टीश्च आवाह्य, स्वस्वमन्त्रेण होमः कार्यः। कलशदेवतास्तु वागीश्वरीक्रियाकीर्तिलक्ष्मीसृष्टिप्रह्वीसत्याब्राह्मयः, महाकुम्भे श्रीदेवी; एवं विधिवत् संपूज्य, षोडशन्यासरहितं शेषं कर्म पूर्ववत् कुर्यात्।

एषः विधिः अस्वातन्त्र्ये; स्वातन्त्र्ये तु ग्रामे वा नगरे वा, पत्तने वा, आलये श्रियः स्थानं ग्रामाभिमुखं कल्पयित्वा, विमानोपरि चतसृषु दिक्षु तुष्टिपुष्टिसावित्रीवाग्देवीः, कोणेषु सिंहं वैनतेयं वा कल्पयित्वा, तत्र ब्राह्मे स्थाने शिलादिमयीं प्रतिकृतिं स्थापयित्वा, स्वस्वस्थानेषु परिवारान् द्वारपार्श्वयोः चण्डीं, प्रचण्डीं, अर्धमण्डपद्वारे दक्षिणे बलाकिनीं, उत्तरे वनमालिनीं, प्रथमगोपुरद्वारे विभीषिकां शाङ्करीं, द्वितीयगोपुरद्वारे, शङ्खपद्मनिधी, तृतीयगोपुरद्वारे नलकूबरजृंभलौ, चतुर्थगोपुरद्वारे शिबिकुण्डलमणिभद्रौ, पञ्चमगोपुरद्वारे जयां विजयां, विष्वक्सेनस्थाने चतुर्भुजां वामेन वेत्रं, इतरेण हस्तेन तर्जनं च कुर्वतीं, अपराभ्यां हस्ताभ्यां पद्मे दधानां, पीतवर्णां सुमुखीं स्थापयित्वा, प्रासादमुखमण्डपे वैनतेयं, आदिमूर्तेरिव परिवारान् च कल्पयेत्।

स्वातन्त्र्ये एवं कल्पयित्वा, चतुर्थे अहनि स्नपनं कृत्वा, तद्दिने ध्वजमुत्थाप्य महोत्सवं कुर्यात्।

इति श्रीवराहगुरुणा विरचितायां क्रियाकैरवचन्द्रिकायां
विभवमूर्तिश्रीदेवीप्रतिष्ठाविधिः नाम
एकोनविंशः परिच्छेदः

# अथ विंशः परिच्छेदः

## पाणिग्रहणविधिः

अथ श्र्यादिदेवीनां-पाणिग्रहणविधिः उच्यते—

यथोक्तदिवसे अङ्कुरार्पणं कृत्वा आचार्यः उद्वाहदिवसे शुभे मुहूर्ते देवस्य देव्याश्च संकल्पपूर्वकं पृथक् उद्वाहकौतुकं यथाविधि बद्ध्वा देवं क्षौमवस्त्रोत्तरीयकिरीटहारकुण्डलाद्या-भरणगन्धपुष्पाद्यैः अलङ्कृत्य, शिबिकां आरोप्य, ग्रामं प्रदक्षिणीकृत्य, वैवाहिकसदनं प्रवेश्य, तत्र देवं अर्घ्यादिभिः अभ्यर्च्य, स्थण्डिलं कल्पयित्वा, उल्लिख्य अग्निं प्रतिष्ठाप्य, आचार्यः देवेन सह, अन्तर्गर्भगृहं प्रविश्य,

देवमासने विनिवेश्य, देवीं नूतनेन वाससा, 'युवा सुवासाः'[1] इति मन्त्रेण प्रदक्षिणं परिधाप्य, आचमय्य, आभरणपुष्पाद्यैः अलङ्कृत्य, आचार्यः स्वयं देवीं देवेन वेदादिना संयोज्य, तदनु यजमानः प्राणानायम्य, संकल्प्य 'जगत्कारणभूताय देवाय मदीयां गोत्रजां कन्यकां प्रजासहत्व-कर्मभ्यः प्रतिपादयामि' इति देवीं सर्वाभरणसुवर्णगोभूसहितं सहिरण्योदकं देवाय दद्यात्।

---

१ युवाः सुवासाः परिवीत आगात् स उ श्रेयान् भवति जायमानः। तन्धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः॥

ततः गृहीतपाणिं देवं देवीं च मन्दिरात् कल्याणमण्डपं प्रापय्य, आचार्यः देवं देवीं च आसने विनिवेश्य, स्वयं उत्तराशाभिमुखः सन् प्राणानायम्य, संकल्प्य, पूर्वोक्तवह्नौ परिस्तीर्य, पुरस्तात्तन्त्रं कृत्वा विध्युक्तवर्त्मना क्रमेण आधार-होमं, नृसूक्तेन समिद्भिः षोडशाहुतीः चरुणा विष्णुगायत्र्या चतुर्विंशत्याहुतीः, श्रीसूक्तेन घृतेन पञ्चदशाहुतीश्च जुहुयात्।

श्रीभूम्योः युगपत् उद्वाहकर्म यदि उभयोरपि अङ्कुरादिकं सर्वं पृथगेव कुर्यात्। एककर्तृत्वे एककालीनत्वे च सति श्रीभूम्योः अङ्कुरादिकं सर्वं पृथगेव। एकस्मिन् काले पर्यायेण यदि तत्रापि भिन्नमाचरेत्। आनुपूर्वीवशेनापि कर्म विभक्तमेव स्यात्।

यद्वा मुहूर्ते भिन्ने तु वैवाहिकं कर्म भिन्नमेव। मुहूर्तयोः यौगपद्ये क्रियां आनुपूर्व्या कुर्यात्। श्रीभूम्योः भिन्नकर्तृत्वे यौगपद्योद्वाहेऽपि श्रीभूम्योः प्रतिसरः पृथगेव। देवस्य तु एक एव। तयोरपि एकाग्नौ भिन्नाग्नौ वा यथाभिमतं उल्लेखनादि पुरस्तात्तन्त्रं कृत्वा, श्रीभूम्योः अपि पारतन्त्र्ये सर्वाः क्रियाः प्रतिव्यक्ति पृथगेव पूर्वं श्रियै पश्चात् भूम्यै च पर्यायेण कुर्यात्।

भूमेस्तु उद्वाहे भूमिमन्त्रेण समिद्भिः षोडशाहुतीः विष्णु-गायत्र्या चरुणा चतुर्विंशत्याहुतीः पुरुषसूक्तेन घृतेन षोडशा-हुतीश्च हुत्वा, ततः विष्णुसूक्तेन लाजहोमं कृत्वा, अग्निं प्रदक्षिणीकृत्य, आचार्यः लाजशेषं प्रणवेन सकृत् हुत्वा इमं मे

वरुण,[1] तत्त्वायामि, त्वन्नो अग्ने, सत्त्वन्नो अग्ने, त्वमग्ने अयासि, इति पञ्चवारुणिकैः घृतेन हुत्वा, पञ्चोपनिषन्मन्त्रैः, प्रायश्चित्ताहुतीः द्वादशाक्षरमन्त्रेण[2] पूर्णाहुतिं च हुत्वा, ब्राह्मणान् तोषयित्वा, देवं अर्घ्यादिभिः अभ्यर्च्य, घृतारोपणं आचरेत्।

घृतारोपणं यथा— घृतदूर्वाङ्कुरचन्दनशालितण्डुलानि पात्रे निधाय, हस्ताभ्यां तत् आदाय, आचार्यः देवस्य, देव्याश्च अङ्गेषु, 'मङ्गलम्' इति दूर्वां, पादयोः सुशोभनं इति घृतम्,

कट्यां 'सुभद्रं' इति चन्दनं, मूर्ध्नि 'सुमङ्गलम्' इति शालितण्डुलानि च क्षिप्त्वा, सर्वैः सभ्यैः अपि तथा कारयित्वा, 'रसेनास्मि' इति मधुपर्कं निवेद्य, लक्ष्मीपतिं च आभरणाद्यैः अलङ्कारैः प्रसाध्य, यथार्हैः माल्यानुलेपनाद्यैः अपि अलङ्कुर्यात्।

---

१ इमम्मे वरुण श्रुधी हवमद्या च मृडय। त्वामवस्युराचके॥१॥
तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः।
अहेडमानो वरुणेहवो ध्युरुश ठँ समानऽआयुः प्रमोषीः॥२॥
त्वन्नो अग्ने वरुणस्य विद्वान्देवस्य हेडो अवयासिसीष्ठाःयजिष्ठो
वह्नितमः शोशुचानो विश्वा द्वेषा ठँ सि प्रमुमुग्ध्यस्मत्॥३॥
स त्वन्नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसोव्युष्टौ॥
अवयक्ष्वनो वरुण ठँ रराणोवीहिमृडीकठँ सुहवो न एधि॥४॥
त्वमग्ने अयासि इत्यादयः॥५॥

२ ओं नमो भगवते वासुदेवाय।

यजमानः देवं प्रणम्य, तस्मै धेनूः, गुरवे यथावित्तानुसारतः दक्षिणां च दद्यात्। ततः आचार्यः हरेः नीराजनं दत्त्वा, दिक्षु पिण्डिकाक्षेपं कृत्वा, लौकिकेन मार्गेण अन्यत् सर्वमपि विधाय, श्रीभूमिसहितं देवं ग्रामधामप्रदक्षिणं कारयित्वा, मण्डपे देवं देव्यौ च आरोप्य, राजोपचारैः उपचर्य, महाहविः निवेद्य, अन्ते ब्राह्मणान् भोजयेत्।

एवं दिवसे दिवसे स्नपनं, अहर्निशं पूर्ववत् होमं उत्सवं च कृत्वा, तुरीयदिनापररात्रौ समिदाज्यचरुभिः लाजेन च मूलमन्त्राभ्यां पृथक् अष्टोत्तरशताहुतीः हुत्वा, ततः पञ्चोपनिषदैः अपि हुत्वा, पञ्चमे दिवसे देवं देव्यौ च तैलेन अभ्यज्य, विधिवत् सुस्नाप्य, महाहविः निवेद्य, ग्रामे महोत्सवं कुर्यात्। तत आरभ्य श्रीभूमिसहितं देवं मन्दिरे अभ्यर्चयेत्।

इतरासां देवीनां च एतादृशः एव विधिः। जामदग्न्यादि देवीनां उद्वाहं स्मार्तवर्त्मना कुर्यात्।

इति श्रीवराहगुरुणा विरचितायां क्रियाकैरवचन्द्रिकायां श्र्यादिपाणिग्रहणविधिः नाम विंशः परिच्छेदः



# अथ एकविंशः परिच्छेदः

## विमानप्रतिष्ठाविधिः

अथ विमानप्रतिष्ठाविधिः उच्यते—

महाप्रतिष्ठायां इव विमानस्य पुरतः मण्डपं, मध्ये चतुर्हस्तमायतं एकहस्तोत्सेधं मध्यवेदिकायुतं चतुर्भिः अष्टभिः वा कुण्डैः युतं कल्पयित्वा, तत्र प्रतिष्ठोपयुक्तानि पालिकाघटिका-शरावाष्टधान्यकुम्भकलशकरकशालितण्डुलतिलनववस्त्रनवरत्न-तोरणध्वजाष्टमङ्गलस्नपनद्रव्यस्त्रु क्स्रु वसमिद्दर्भकुसुमघृतदीपस्तं-भासनादीनि अन्यानि च द्रव्याणि संपाद्य, आचार्यः यजमाना-नुज्ञया मूर्तिपैः सह कर्मारंभदिनात् पूर्वं द्वादशाहे, नवाहे, सप्तमाहे, पञ्चमेऽहनि, तृतीये अहनि वा ब्राह्मणान् आहूय, आशिषः वाचयित्वा, दक्षिणां च वितीर्य, तेभ्यः अनुज्ञां प्राप्य, मृत्संग्रहणार्थं प्राचीं उदीचीं वा दिशं गत्वा, तत्र पालिकादिषु पात्रेषु यथाभिमतं पूर्ववत् अङ्कुरान् अर्पयित्वा,

शिल्पिना विमानदिग्देवतानां नयनेषु उन्मीलितेषु तं च वस्त्राभरणाद्यैः तोषयित्वा, तस्मिन् निर्गते सति सदनं मार्जना-लेपनपर्यग्निकरणपञ्चगव्यप्रोक्षणादिभिः शोधयित्वा, पुण्याहं वाचयित्वा, अब्लिङ्गैः मन्त्रैः गर्भगृहं अन्तः बहिश्च संप्रोक्ष्य,

गोघृतदीपकालागरुप्रमुखगन्धद्रव्यधूपसुधाचूर्णदूर्वाक्षतैः सदनं सर्वतः समलङ्कृत्य, ततः अपराह्णसमये मानादीनां

न्यूनातिरेकदोषशान्त्यर्थं प्रासादाग्रे यथाविधि शान्तिहोमं कृत्वा, 'नमस्तुभ्यं भगवते' इति उपस्थाय,

सदर्भैः नववस्त्रैः मूलमन्त्रेण प्रासादान्तर्गतप्रतिमाः आच्छाद्य, उत्तरीयं च दत्त्वा, विष्णुगायत्र्या, अर्घ्यादिभिः संपूज्य,

छायाधिवासार्थं विमानस्य तद्गतदेवतानां स्वस्य च रक्षाबन्धनं कृत्वा, विमानं द्वादशाक्षरेण अभ्यर्च्य, तस्य पुरतः छायाधिवासार्थं व्रीहितण्डुलतिलैः स्थण्डिलं कृत्वा, तस्मिन् स्वर्णादिलोहनिर्मितं कटाहं, तादृशीं जलद्रोणीं वा संस्थाप्य, गन्धोदकेन आपूर्य, पुण्याहं वाचयित्वा, द्वारतोरणकुम्भान् संस्थाप्य, जलस्य शोषणादि कृत्वा, क्षीरार्णवं ध्यात्वा, तस्मिन् आधारादिपद्मान्तं पीठं कल्पयित्वा, अष्टाविंशतिदर्भकृतकूर्चे मूलविद्यया विमानं आवाह्य, अभ्यर्च्य, आचार्यः संहारक्रमं स्मरन् ।

तस्मिन् तं प्राक्छिरसं शाययित्वा, चक्रमुद्रां[1] प्रदर्श्य, विमानगतदेवानां अपि द्वाविंशतिदर्भकृतकूर्चद्वारा पृथक् पृथक् स्वस्वपुरतः भाजनेषु यथाविधि छायाधिवासं कृत्वा, पूर्वस्थापितजलद्रोण्याः याम्यायां दिशि यथोक्तधान्यकृतस्थण्डिले सलक्षणं सकरकोपकुम्भाष्टकं रक्षाकुम्भं संस्थाप्य, परिस्तीर्य, पुण्याहं वाचयित्वा, प्रोक्ष्य,

---

१ स्पष्टौ प्रसारितौ हस्तौ परस्परनियोजितौ ॥
भ्रमणाच्चक्रवत्तौतु चक्रमुद्रेति कीर्तिता ॥

मध्यकुम्भे ब्रह्माणं, करके सुदर्शनं, उपकुम्भाष्टके इन्द्रादीन् च आवाह्य, अभ्यर्च्य, प्रत्येकशः सर्वाङ्गीणैः नवैः वासोभिः विमानं तद्गतप्रतिमाश्च आच्छाद्य, 'रक्षोहण'[1] इति मन्त्रेण सर्वतः सिद्धार्थान् विकीर्य, दिग्बन्धनं कृत्वा, दीपान् उद्दीप्य, चतसृषु दिक्षु, वेदान् उद्घोष्य, द्वारे सुदर्शनं आवाह्य अभ्यर्च्य, चक्रमुद्रां प्रदर्श्य, प्रादक्षिण्येन सदनात् निष्क्रम्य, आचार्यः सर्वालङ्कारयुतः मूर्तिपैः वेदविद्भिः ब्राह्मणैः साकं, पूर्वोक्तमण्डपे,

---

१ रक्षोहणं वलगहनं वैष्णवीमिदमहन्तं वलगमुत्किरामि यं मे निष्ट्यो यममात्यो निचखानेदमहन्तं वलगमुत्किरामि यं मे समानो यम समानो निचखानेदमहन्तं वलगमुत्किरामि यं मे सबन्धुर्यमसबन्धुर्निचखानेदमहन्तं वलगमुत्किरामि यं मे सजातो यमसजातो निचखानोत्कृत्याङ्किरामि ॥

(शु० य० ५।२३)

स्वराडसिसपत्नहा सत्रराडस्यभिमातिहा जनराडसि रक्षोहा सर्वराडस्यमित्रहा ॥ (शु० य० ५।२४)

रक्षोहणो वो वलगहनः प्रोक्षामि वैष्णवान् रक्षोहणो वो वलगहनोऽवनयामि वैष्णवान् रक्षोहणो वो वलगहनोऽवस्तृणामि वैष्णवान् रक्षोहणौ वां वलगहना उपदधामि-वैष्णवी रक्षोहणौ वां वलगहनौ पर्यूहामि वैष्णवी वैष्णव-मसि वैष्णवास्थ ॥ (शु० य० ५।२५)

यथाविधि पूर्ववत् वास्तुहोमं कृत्वा, ततः मण्डपं मार्जनालेपनादिभिः संशोध्य, वितानस्तंभवेष्टनमुक्तादामस्रक्दर्भमालातोरणफलपुष्पबहुदीपागरुधूपपताकानारिकेलकदलीभिः अलङ्कृत्य, द्वारतोरणध्वजकुम्भान् संस्थाप्य, यथाविधि वस्त्राद्यैः संयुक्तान् विधाय,

ततः गुरुः अन्तः प्रविश्य, छायाधिवासितान् देवान् विमानं च उद्वास्य, विमानस्थितवस्त्रादीनि अपनीय, तेषु यथाविधि पूर्वोक्तवर्त्मना नयनानि उन्मील्य, ततः सप्तदशकलशैः घृतादिद्रव्ययुतैः हरिद्राचूर्णैश्च, विमानस्य, दिग्देवतानां च पृथक् पृथक् तथैव मृदालेपनपूर्वकं सर्वं स्नपनकलापं सकूर्चे दर्पणे कृत्वा, पुनः आवाह्य, विमानादिकं नवैः वासोभिः आच्छाद्य, प्रतिष्ठाविधिवत् मध्यवेदिकोपरि शय्यां कृत्वा, तस्यां कूर्चद्वारेण विमानदेवताः आवाह्य, शाययित्वा, तत्र व्रीह्यादिधान्यकल्पितस्थण्डिलोपरि,

स्वर्णादिलोहजं मृण्मयं वा ससूत्रवेष्टनं सकरकोपकुम्भाष्टकं महाकुम्भं संस्थाप्य, गन्धोदकैः आपूर्य, तान् सरत्नलोहवस्त्रकूर्चपिप्पलदलापिधानान् कृत्वा, पुण्याहं वाचयित्वा, द्वारतोरणध्वजकुम्भेषु यथाक्रमं तत्तद्देवताः आवाह्य, अभ्यर्च्य, महाकुम्भे आधारादिपद्मान्तं पीठं संकल्प्य, तस्मिन्,

"सहस्रशीर्षं पुरुषं सहस्राक्षं सहस्रपम् ।
सहस्रकुन्तलोपेतं सहस्रमकुटान्वितम् ॥
सहस्रादित्यसंकाशं सहस्रेन्दुनिभाननम् ।

सहस्रवाहनैः युक्तं सर्वंदिङ्नासिकान्वितम् ॥
शङ्खचक्रगदापाणिं सर्वप्रहरणान्वितम् ।
प्रसादरूपिणं देवं ध्यात्वैवावाहयेत् गुरुः ॥"

इति ध्यात्वा, 'ओं नमो भगवते विमानाधिदैवताय नारायणाय आगच्छागच्छ' इत्यावाह्य अभ्यर्च्य, करके सुदर्शनं, उपकुम्भाष्टके विष्ण्वादिमूर्तीश्च आवाह्य अभ्यर्च्य, विमानं च तथा ध्यात्वा, अभ्यर्च्य, चतुर्विधं अन्नं निवेद्य, ब्राह्मणान् भोजयित्वा, आशिषः वाचयित्वा, तेभ्यः अपि दक्षिणां वितीर्य, कुण्डेषु अग्निं यथाविधि उपसमिध्य, पुरस्तात्तन्त्रपूर्वकं मूर्तिहोमादिकं कृत्वा, धाम हेमादिनिर्मितं रत्नखचितं ध्यात्वा,

"तत्रजीवमभिध्यायेत् व्यापकं तदुपाधिकम् ।
बुद्धिं च पिण्डिकां पादान् अहङ्कारं तथैव च ॥
पादौ पादशिला जङ्घे गर्भगेहं तथोदरन् ।
स्तंभान् बाहून् कटिं चापि तथैव कटिमेखलाम् ॥
जिह्वां वर्णां तथा नेत्रं प्रतीपद्माश्च मेहनम् ।
अपानं जलनिर्याणं नासिकां नासिकां तथा ॥
गवाक्षमक्षि ग्रीवां च ग्रीवां स्कन्धं कपोलकौ ।
शिरश्च कलशं मांसं प्रलेपं स्पर्शनं सुधाम् ॥
अस्थीनि च शिलास्तत्स्थाः स्नायुं दारुशिखाध्वजान् ।
केशरोमाणि कूर्चं च ध्यात्वा धाम पुराकृतिं ॥"

इति विमानं पुरुषाकृतिं ध्यात्वा, तदनु जीवादितत्त्वहोमं

प्रणवादिस्वाहान्तं पृथक् अष्टोत्तरशतं अष्टाविंशतिः अष्टौ वा आज्येन हुत्वा, संपाताज्यं संगृह्य, विमानस्य, तत्तदङ्गेषु तत्तन्मन्त्रैरेव संस्पृशेत् ।

'ओं मं नमः पराय स्फटिकाभासाय जीवतत्त्वात्मने स्वाहा', धामनि; 'ओं भं नमः पराय सितवर्णाय प्रकृत्यात्मने स्वाहा', तत्रैव; 'ओं बं नमः पराय स्फटिकाभासाय बुद्धितत्त्वात्मने स्वाहा', तत्रैव; 'ओं फं नमः पराय पाटलवर्णाय अहङ्कारात्मने स्वाहा', पिण्डिकायां; 'ओं पं नमः पराय सितवर्णाय मनस्तत्त्वात्मने स्वाहा', तत्रैव; 'ओं नं नमः पराय शुक्लवर्णाय शब्दतन्मात्रात्मने स्वाहा', क्षुद्रनासिकायां; 'ओं धं नमः पराय लोहितवर्णाय स्पर्शतन्मात्रात्मने स्वाहा', सुधालेपे; 'ओं दं नमः पराय ज्योतिर्मयाय रूपतन्मात्रात्मने स्वाहा', गवाक्षे; 'ओं थं नमः पराय पाण्डरवर्णाय रसतन्मात्रात्मने स्वाहा', वर्णे; 'ओं तं नमः पराय सितवर्णाय गन्धतन्मात्रात्मने स्वाहा', महानासिकासु; 'ओं णं नमः पराय पाटलवर्णाय श्रोत्रेन्द्रियात्मने स्वाहा', पार्श्वनासिकासु; 'ओं ढं नमः पराय हेमवर्णाय त्वगिन्द्रियात्मने स्वाहा', सुधालेपे; 'ओं डं नमः पराय कृष्णवर्णाय नेत्रेन्द्रियात्मने स्वाहा', गवाक्षे; 'ओं ठं नमः पराय गौरवर्णाय जिह्वेन्द्रियात्मने स्वाहा', वर्णे; 'ओं टं नमः पराय सितवर्णाय घ्राणेन्द्रियात्मने स्वाहा', महानासासु; 'ओं ञं नमः पराय सितवर्णाय वागिन्द्रियात्मने स्वाहा', वर्णे; 'ओं झं नमः पराय रक्तवर्णाय पाणीन्द्रियात्मने स्वाहा', पादेषु; 'ओं जं नमः पराय

रक्तवर्णाय पादेन्द्रियात्मने स्वाहा', पादशिलायाम्, 'ओं छं नमः पराय रक्तवर्णाय अपानेन्द्रियात्मने स्वाहा', जलनिर्याणे; 'ओं चं नमः पराय हेमवर्णाय मेहनेन्द्रियात्मने स्वाहा', तत्रैव; 'ओं कं नमः पराय जलदवर्णाय निराकाराय आकाशतत्त्वात्मने स्वाहा', नासिकादिशिखाकुम्भान्तम्; 'ओं खं नमः पराय धूम्रवर्णाय वेदिकाकाराय वायुतत्त्वात्मने स्वाहा', गर्भगेहादि नासान्तम्; 'ओं गं नमः पराय लोहितवर्णाय त्रिकोणाकाराय अग्नितत्त्वात्मने स्वाहा', गर्भगेहे; 'ओं घं नमः पराय स्फटिकवर्णाय अर्धचन्द्राकाराय अप्तत्त्वात्मने स्वाहा', उपपीठादिजलनिर्याणान्तम्; 'ओं ङं नमः पराय पीतवर्णाय चतुरश्राय पृथिवीतत्त्वात्मने स्वाहा', उपपीठपादेषु।

एवं तत्त्वहोमं न्यासं च कृत्वा, ततः शक्तिहोमं न्यासं च कुर्यात्।

'ओं प्रकृत्यै स्वाहा', अपाने; 'ओं शान्त्यै स्वाहा', जगत्याम्; 'ओं पृथिव्यै स्वाहा', कुमुदे;

'ओं वागीश्वर्यै स्वाहा', गले; 'ओं रत्यै स्वाहा', पट्टिकायाम्। एवं पञ्चाङ्गयुक्तविमाने।

द्वादशाङ्गकल्पने तु; 'ओं कीर्त्यै स्वाहा', महापट्टिकायाम्; 'ओं पुष्ट्यै स्वाहा', गले; 'ओं महीशक्त्यै स्वाहा', वाजने; 'ओं तुष्ट्यै स्वाहा', पट्यां (वेद्यां); 'ओं सृष्ट्यै स्वाहा', अङ्घ्रिषु; 'ओं मायायै स्वाहा', कपोतेषु; 'ओं मोहिन्यै स्वाहा', भूतमालासु;

अष्टादशाङ्गकल्पने तु—'ओं महालक्ष्म्यै स्वाहा', कूटेषु; 'ओं वसुधायै स्वाहा', पञ्जरेषु; 'ओं अतिमोहिन्यै स्वाहा', प्रस्तरेषु; 'ओं स्वाहाशक्त्यै स्वाहा', वेद्याम्; 'ओं श्रियै स्वाहा', धाम्नि।

इति शक्तिहोमं न्यासं च कुर्यात्।

अनन्तरं पूर्ववत् शान्तिहोमं स्पर्शहोमं च। तदनु दिङ्मूर्तीनां तत्त्वहोमं न्यासं च पृथक् पृथक् कृत्वा, सहस्रं शतं वा ब्राह्मणान् भोजयित्वा, तेभ्यः अपि दक्षिणां दत्त्वा, विमानस्य प्रतिष्ठार्थं पञ्चविंशतितन्तुभिः पट्टिकायां दिङ्मूर्तीनां सौवर्णेन च रक्षाबन्धनं विधिवत् कृत्वा, तदनु पललरजनीचूर्ण-लाजदधिसक्तुभिः बल्यन्नं संयोज्य,

तेन,

"आद्याश्च कर्मजाश्चैव ये भूताः प्राग्दिशिस्थिताः।
प्रसन्नाः परितुष्टास्ते गृह्णन्तु बलिकांक्षिणः॥
वृक्षेषु पर्वतापेषु ये विदिक्षु च संस्थिताः।
भूमौ व्योम्नि स्थिताः ये च बलिं गृह्णन्तु तेऽपि च॥
विनायकाः क्षेत्रपालाः ये चान्ये बलिकांक्षिणः।
पूषाद्याः पार्षदाश्चैव गृह्णन्तु बलिमद्य ते॥"

इति मन्त्रैः सर्वतः दिक्षु बलिदानं कृत्वा, तदनु प्रभाते, सुमुहूर्ते सर्वालंकारयुतः गुरुः महाकुंभमूर्तिकुम्भान समादाय, अग्रे गलन्तिकागलत्—वारिधारया परिषिञ्चन् धाम प्रदक्षिणी-कृत्य,

विमानाग्रे धान्यकृतस्थण्डिले तान् निधाय, आचार्यः उदङ्मुखस्सन्, महाकुम्भस्थशक्तिं विमाने मूलमन्त्रेण मूर्तिकुम्भगतशक्तीः मूर्तिषु च संयोज्य, प्राणप्रतिष्ठां कृत्वा, मूलमन्त्रं च विन्यस्य, विमानं सहस्रशीर्षं पुरुषं ध्यात्वा, महाकुम्भं समादाय, दिङ्मूर्तीः स्वस्वमन्त्रैः प्रोक्ष्य,

तथैव अन्यान् विमानस्थदेवान् च प्रोक्ष्य, ततः विमानं तद्गतदेवताश्च अर्घ्यादिभिः अभ्यर्च्य, महाहविः निवेदयेत्।

तदनु यजमानः गुरुं प्रणिपत्य, जीवाजीवात्मकैः धनैः मूर्तिपान् अन्यान् च, यथावित्तानुसारतः तोषयेत्।

इति श्रीवराहगुरुणा विरचितायां क्रियाकैरवचन्द्रिकायां
विमानप्रतिष्ठाविधिः नाम
एकविंशः परिच्छेदः

---

## अथ द्वाविंशः परिच्छेदः

# मण्डपप्रतिष्ठा

अथ मण्डपप्रतिष्ठाविधिः उच्यते—

पूर्ववत् वेदिकां निर्माय, आलयविशोधनादिध्यानान्तं सकलं कर्मजालं विमानप्रतिष्ठोक्तविधिना कृत्वा, आचार्यः,

"मण्डपं विश्वकर्मीयं सर्वरत्नपरिष्कृतम्।

सौवर्णैः बहुभिः स्तंभैः नवरत्नविराजितैः ॥
उत्तंभितं सर्वशक्तिमयं ध्यायेद्गुरुः स्वयम् ।”

इति ध्यात्वा विधिवत् अग्निं पुरस्तात्तन्त्रपूर्वकं संस्कृत्य, ततः शान्तिहोमं कृत्वा, संपाताज्येन मण्डपस्य तत्तत्स्थानेषु न्यसेत् ।

'ओं प्रकृत्यै स्वाहा', उपाने; 'ओं वसुधायै स्वाहा', जगत्याम् ; 'ओं क्रियायै स्वाहा', वप्रे; 'ओं मोहिन्यै स्वाहा', कंपे; 'ओं रत्यै स्वाहा', वाजने; 'ओं मायायै स्वाहा', ग्रीवायाम् ; 'ओं वागीश्वर्यै स्वाहा', प्रातकंपे; 'ओं इष्टशक्त्यै स्वाहा', कुमुदे; 'ओं क्षमायै स्वाहा', पट्टिकायाम् ; 'ओं ब्राह्म्यै स्वाहा', स्तंभपादशिलायाम् ; 'ओं वैष्णव्यै स्वाहा', स्तंभे; 'ओं कमलायै स्वाहा', कपोते; 'ओं शान्त्यै स्वाहा', उत्तरे; 'ओं पद्मायै स्वाहा', तुलायाम् ; ओं ऐशान्यै स्वाहा, सोपानपङ्क्तिषु; चतुर्षु मण्डपद्वारतोरणेषु अधः 'ओं शान्त्यै स्वाहा', दक्षिणशाखायां; 'ओं वाग्देव्यै स्वाहा', उपरि; 'ओं श्रियै स्वाहा', उत्तरशाखायाम् ; 'ओं रत्यै स्वाहा' इति संपातेन न्यस्य,

शान्तिहोमावसानिकं सर्वं कर्म पूर्ववत् निर्वर्त्य, ततः प्रभाते सुमुहूर्ते गुरुः स्वयं महाकुम्भं समादाय पूर्वोक्ताः शक्तीः स्वस्वमन्त्रैः नमोन्तैः आगच्छपदसंयुक्तैः मण्डपे पूर्वोक्तस्थानेषु न्यस्य, व्यापकरूपेण विचिन्त्य, तत्रस्थानि चित्राणि चित्राभासानि च कुम्भस्थवारिणा कूर्चेन स्वस्वमन्त्रेण यथापूर्वं प्रोक्षयेत् । तदनु यजमानश्च पूर्ववत् गुरवे दक्षिणां दद्यात् ।

## आस्थानमण्डपादिप्रतिष्ठा—

आस्थानमण्डपादीनां तु मण्डपशोधनपर्यग्निकरणपञ्चगव्य-प्रोक्षणवास्तुहोमपुण्याहवाचनबलिकुम्भस्थापनादिकं कृत्वा, एकस्मिन् कुण्डे आहुतीश्च हुत्वा, आचार्यः सुमुहूर्ते महाकुम्भ-जलेन पूर्ववत् प्रोक्षयेत्। सर्वमपि कर्म सद्यः वा कुर्यात्। गुरवे दक्षिणा च पूर्ववत्।

## गोपुरप्रतिष्ठा—

गोपुरप्रतिष्ठां विमानप्रतिष्ठावत् कुर्यात्। प्राकारप्रतिष्ठायां तु अङ्कुरार्पणादिकं सर्वं कर्म यथापूर्वं विधाय, गुरुः वर्ममन्त्रेण प्राकारं प्रोक्षयेत्। दक्षिणा च पूर्ववत्।

द्वारशाखाकवाटप्रतिष्ठे तावत् आदौ एव उक्ते। अत्रापि तथैव कुर्यात्।

इति श्रीवराहगुरुणा विरचितायां क्रियाकैरवचन्द्रिकायां
मण्डपास्थानमण्डपगोपुरप्राकारद्वारशाखा-
कवाटप्रतिष्ठाविधिः नाम
द्वाविंशः परिच्छेदः

## अथ त्रयोविंशः परिच्छेदः

# बलिपीठनिर्माणप्रतिष्ठे

### अथ बलिपीठनिर्माणविधिः उच्यते—

बलिपीठिकां गर्भमन्दिरसमायामविस्तारां, तदर्धां, तुरीयांशसमां वा, यद्वा गर्भमन्दिरं पञ्चधा विभज्य, तद्व्यंशां एकांशां वा, अथवा नवसु एकभागसमां, यद्वा हस्तवशेन एकहस्तावरां, पञ्चहस्तपरां वा, विस्तारद्विगुणोत्सेधां, त्रिगुणोत्सेधां, अर्धाधिकां, विस्तारतुल्योत्सेधां वा, पञ्चाङ्गकल्पनोपेताम्,

कपोतभूतमालाहंसमालादिविराजितांनिर्माय, तदग्रविस्तृतिं त्रेधा विभज्य, द्वाभ्यां पंकजं विधाय, पीठिकाकोणेषु गरुडान् सिंहान् वा प्रागादिषु दिक्षु विघ्नराडीशपक्षिराड्दुर्गाः, यथोन्नति पार्श्वे सोपानपङ्क्तीश्च कल्पयेत् ।

### बलिपीठ प्रतिष्ठाविधिः उच्यतेः—

एवं पीठिकां गोपुरास्थानमण्डपयोः मध्ये कल्पयित्वा, यथायोगं अष्टसु दिक्षु बलिपीठानि तालद्वयेन विस्तारायामयुतानि प्रत्येकं चतुरङ्गुलोन्नतमेखलात्रययुतानि, तन्मध्ये वृत्ताकारेण चतुरश्राकारेण वा चतुरङ्गुलायामविस्तारकर्णिकायुतानि च कृत्वा, गेहस्य परितः पूर्वाद्यासु संस्थापयेत् ।

महापीठस्य पश्चिमभागे ध्वजस्तंभस्य पीठं च निर्मिमीत । प्रासादाभिमुखः स्तंभः कल्पनीयः । यथा-पूर्वाभिमुखे देवे

प्रत्यङ्मुखः, पश्चिमाभिमुखे देवे पूर्वाभिमुखः, सर्वं एवं संस्थाप्य, आचार्यः वास्तु होमाङ्कुरावापनादिकं सर्वं क्रियाकलापं शान्तिहोमावसानिकं मन्दिरस्य इव कृत्वा,

ततः प्रभाते सुमुहूर्ते मूलविद्यया महाकुम्भजलेन पीठं कूर्चेन संप्रोक्ष्य, तस्मिन् प्राच्यां विघ्नराजाय नमः, दक्षिणे ओं ईशानाय नमः, पश्चिमे ओं पक्षिराजाय नमः, उत्तरे दुर्गायै नमः, मध्यकर्णिकायां ओं सर्वेभ्यः विष्णुपार्षदेभ्यः नमः इति प्रोक्ष्य, अष्टास्वपि दिक्षु कुमुदादिगणेशान् स्वैः स्वैः अनुचरैः सह, स्वस्वमन्त्रेण आवाह्य, सन्निध्यं प्रार्थ्य, तेषु नित्यं बलिं दद्यात्।

यजमानः यथाशक्ति ब्राह्मणान् भोजयित्वा, तेभ्यः दक्षिणां वितीर्य, आचार्याय शतनिष्कां दक्षिणां दद्यात्।

## अथ महानसप्रतिष्ठाविधिः—

आचार्यः तत्र वास्तुहोमादिकं सर्वं कृत्वा, धान्यराशौ सलक्षणं कुम्भं एकं विन्यस्य, तस्मिन् मूलेन आवाह्य, अभ्यर्च्य, अग्निं संसाध्य, समिदाज्यचरुपायसैः प्रतिद्रव्यं मूलमन्त्रेण अष्टोत्तरशताहुतीः हुत्वा,

तत्रस्थानां देवानां चण्डप्रचण्ड क्षेत्रपालरुद्रगणेशजृंभलमाणिभद्रशिबिकुण्डलधर्मअधर्मधातृविधातृलक्ष्म्याद्यानां होमपूर्वं तत्त्वन्यासादिकं कर्म कृत्वा, चुल्लीषु, 'अग्निमीले' इति मन्त्रेण अग्निं निदधीत। तत्र पायसादीनां हविषां श्रपणं परिचारकाः कुर्युः।

नित्यहोमार्थं कुण्डे अग्निं पुरस्तात्तन्त्रपूर्वकं यथाविधि स्थापयित्वा, तदनु महाकुम्भजलेन चण्डादीनां न्यसनं कुर्यात्।

महानसद्वारे—ओं चण्डाय नमः, ओं प्रचण्डाय नमः, दक्षिणपार्श्वे—क्षेत्रपालाय नमः, ओं ईश्वराय नमः, उत्तरे—ओं गणपतये नमः, ओं जृंभलाय नमः, पश्चिमे—माणिभद्राय नमः, शिबिकुण्डलाय नमः, अन्येषु द्वारेषु सत्सु, प्रासादद्वारवत् लक्ष्म्यादीनां कल्पनं चरेत्। चुल्ल्याः वामे—धर्माय नमः, दक्षिणे—अधर्माय नमः, पृष्ठतः—धात्रे नमः, अग्रे—ओं विधात्रे नमः, तत्रैव चुल्ल्यभिमुखं महालक्ष्म्यै नमः, दीर्घ-चुल्ल्यास्तु उभयोः पार्श्वयोः, धर्माधर्मौ कल्पयेत्।

सर्वान् तान् अभ्यर्च्य, तत्रस्थानि सकलानि पात्राणि कुंभजलेन श्रीसूक्तेन प्रोक्षयेत्। गुरवे दक्षिणा च पूर्ववत्।

## धान्यागारादिप्रतिष्ठा—

धान्यागारधनागारसारस्वतगृहमज्जनशाला पुष्पवाटिका-सदनतांबूलकल्पनगृहतैलस्थानादीनांधाम्नां शिल्पिभिःकल्पितानां आचार्यः शास्त्रोक्तेन विधिना वास्तुहोमादिप्रोक्षणान्तं सर्वं मण्डपस्य इव कुर्यात्। दक्षिणा च यथावसु देया।

## अथ वापीकूपतटाकप्रतिष्ठाविधिः—

तेषांभागे पश्चिमे चतुर्हस्तायामां एकहस्तोच्छ्रितां वेदिकां कल्पयित्वा, सुवर्णेन अल्पकायं जलाधिदैवतं निर्माय, सुवर्णा-दिलोहजान् मृण्मयान् वा कलशान् सरत्नलोहकूर्चापिधानान् नव धान्यराशौ संस्थाप्य, यथाविधि आवाह्य अभ्यर्च्य, तैः

जलाधिदैवतं विधिवत् स्नापयित्वा, तदनु वेदिकायां सलक्षणायां शाययित्वा, तत्र महाकुम्भं संस्थाप्य, तस्मिन् जलाधिदैवतं आवाह्य अभ्यर्च्य, चतुर्षु कुण्डेषु एकस्मिन् वा अग्निं उपसमिध्य, तत्र तं आवाह्य, तद्दैवत्यैः मन्त्रैः समिदाज्यचरुभिः पृथक् अष्टोत्तरशताहुतीः हुत्वा, भूसुरैः वारुणसूक्तानि पाठयित्वा, ततः प्रभाते सुलग्ने पुण्याहं वाचयित्वा, वाप्यादीन् प्रोक्ष्य, आचार्यः अमृतवारिभिः पूरितान् विचिन्त्य, ततः सुवर्णादिलोहकृतानि मत्स्यकूर्मादीनि जलाधिदेवताप्रतिमां कहाकुम्भं च वाप्यादिषु निक्षिप्य, तत्र गङ्गादिसर्वसरितः स्वस्वमन्त्रैरेव आवाहयेत्।

यजमानः गुरवे यथावसु दक्षिणां दत्त्वा, तत्र ब्राह्मणान् भोजयित्वा, तेभ्यः अपि यथाशक्ति दक्षिणां दद्यात्।

इति श्रीवराहगुरुणा विरचितायां क्रियाकैरवचन्द्रिकायां
बलिपीठनिर्माणतत्प्रतिष्ठा— महानसधान्याद्यगार-
वापीकूपतटाकादिप्रतिष्ठाविधिः नाम
त्रयोविंशः परिच्छेदः



## अथ चतुर्विंशः परिच्छेदः

# प्रभाप्रतिष्ठा

अथ प्रभादीनां प्रतिष्ठाविधिः उच्यते—

कालांतरे चेत् प्रभादीनां प्रतिष्ठा, जलाधिवासाद्यखिलं कर्म यथापूर्वं कृत्वा,

गुरुः ज्वालामालासहस्राढ्यां विद्युत्संघातसन्निभां प्रभां ध्यात्वा, संस्पृश्य, अग्नौ समिदाज्यचरुभिः मूलमन्त्रेण प्रत्येकं अष्टोत्तरशतं आहुतीनां हुत्वा, सर्पिषा शान्तिहोमं च हुत्वा, संपातेन प्रभां संस्पृश्य, प्रभाते कुंभवारिणा मूलेन प्रोक्ष्य, प्रभां सुमुहूर्ते देवेन संयोज्य, महोत्सवं कुर्यात्। गुरवे दक्षिणा च पूर्ववत्।

**पीठस्थापनम्—**

पीठस्थापने तु गुरुः तत्र पीठं संस्थाप्य, योगासनमन्त्रैः आधारादिपद्मान्तैः अग्नौ हुत्वा, संपातेन पीठं संस्पृश्य, पद्मपीठं सुमुहूर्ते देवेन योजयेत्। दक्षिणा च पूर्ववत्।

**अथ घण्टाप्रतिष्ठा उच्यते—**

घण्टां पञ्चगव्येन पञ्चवारुणिकैः मन्त्रैः संस्नाप्य, नववाससा आवेष्ट्य, शालितण्डुलतिलैः स्थण्डिलं कृत्वा, तदूर्ध्वे नववस्त्रं सदर्भं विन्यस्य, तत्र घण्टां तन्मन्त्रेण शाययित्वा, नवेन वाससा आच्छाद्य, तत्र सलक्षणं कुम्भं एकं संस्थाप्य, तस्मिन्, 'शब्दब्रह्मस्वरूपिण्यै ओं घण्टायै नमः', इति आवाह्य अभ्यर्च्य,

कुण्डे स्थण्डिले वा तन्मन्त्रेण समिदादिभिः पृथक् अष्टोत्तरशतं आहुतीनां, चरुणा नृसूक्तेन षोडश च हुत्वा, घण्टायाः शोषणादि कृत्वा, तां शब्दब्रह्ममयीं ध्यात्वा, शान्तिहोमं कृत्वा, संपातेन घण्टां संस्पृश्य, प्रभाते कुम्भतोयेन प्रोक्ष्य, ततः घण्टां देवस्य सर्वकर्मसु चालयेत्। गुरवे दक्षिणा च पूर्ववत्।

**धूपदीपप्रतिष्ठा—**

धूपदीपयोस्तु पूर्ववत् सर्वं कर्म कृत्वा, 'ओं धूपपात्राधिदैवताय पावकाय नमः' इति धूपं, 'ओं दीपपात्राधिदैवताय भास्कराय नमः' इति दीपं च होमानन्तरं महाकुम्भजलेन प्रोक्षयेत्। दक्षिणा च पूर्ववत्।

**भेर्यादिप्रतिष्ठा—**

भेर्यादीनां तु पञ्चगव्येन शुद्धिं कुर्यात्।

**रथादियानानां छत्रादीनां च प्रतिष्ठा—**

रथादियानानां तु शुद्धिं पूर्ववत् कृत्वा, स्वस्वदेवतामन्त्रेण महाकुम्भजलेन प्रोक्षणं कुर्यात्। छत्रादीनामपि पूर्ववत्।

सर्वत्र ब्राह्मणान् भोजयित्वा, पुण्याहपूर्वकं यथाविधि सर्वं कर्म कुर्यात्। यजमानश्च गुरवे वित्तानुसारतः दक्षिणां दद्यात्।

## अक्षमालाप्रतिष्ठाविधिः—

अथ अक्षमालाप्रतिष्ठाविधिः उच्यते—

सुवर्णरजतताम्रत्रपुसीसकांस्यायस्स्फटिक सूर्यकान्तचन्द्रोपलपुत्रजीवेन्द्राक्षीविभीतकनिंबपद्मसितअम्भोजकमलाक्षरुद्राक्ष-शङ्खजलजकुशग्रन्थ्यादिषु जप्तुः अभिमतकर्मानुगुणान् मणीन् अष्टोत्तरशतसंख्याकान् तदर्धान् सप्तविंशति संख्याकान् वा अक्षास्थितुल्यान् धात्रीफलास्थिसदृशान् बदरास्थिसमानान् वा संपाद्य, तान् दोषवर्जितान् निरीक्ष्य, पञ्चवारुणिकैः पञ्चोपनिषत्-मन्त्रैश्चपञ्चगव्यैः संक्षाल्य, तान् हैमे राजते वा, सूत्रे त्रिगुणीकृते केशादिदोषवर्जिते कार्पाससूत्रे वा पृष्ठेन पृष्ठं मुखेन मुखं

परस्परेण यथा न संबध्येत, तथा अन्तरान्तरा सुवर्णेन वा सूत्रेण वा मध्यबन्धयुतान् आरोप्य, तां मालां कटकाकारां कृत्वा,

तन्मौलौ महत्तरं अन्यं मणिं निधाय, एवं अक्षमालिकां कृत्वा, तां पुण्याहजलेन प्रोक्ष्य, पद्मदले संस्थाप्य, कुङ्कुमाद्यैः विलिप्य, शालितण्डुलैः, भारादिप्रमाणयुतैः स्थण्डिलं कृत्वा, तत्र चक्रपद्मं विलिख्य, कुशैः नववस्त्रैश्च आच्छाद्य, तत्र तां विन्यस्य, नवेन वाससा आच्छाद्य, हेमवस्त्रयुतं महाकुम्भं धान्यपीठे निक्षिप्य,

तस्मिन्, 'ओं नमो भगवते अक्षमालिकाधिदैवताय मन्त्रपुरुषाय नमः' इति मन्त्रेण आवाह्य अभ्यर्च्य कुण्डे स्थण्डिले वा अग्निं उपसमिध्य, समिच्चरुघृतैः तन्मन्त्रेण पृथक् अष्टोत्तरशतं आहुतीनां हुत्वा, ततः तस्याः शोषणादि कृत्वा, तां अण्डमयीं ध्यात्वा,

'तन्मध्ये पुरुषं ध्यायेत् बद्धाञ्जलिमवस्थितम् ।
चतुर्भुजं वलक्षाभं वरदाभयहस्तकम् ॥
अक्षमालां च बिभ्राणं शिखाग्रे कटकाकृतिम् ॥'

इति ध्यात्वा, तदनु शान्तिहोमानन्तरं संपातेन तां संस्पृश्य, सुमुहूर्ते तस्यां सृष्टिक्रमेण तत्त्वानि विन्यस्य, आचार्यः स्वहृदयकमले मन्त्ररूपिणीं अभिन्नां तेजसा आदित्यसंकाशां वैष्णवीं शक्तिं ध्यात्वा, तां ब्रह्मरन्ध्रात् अक्षमालिकायां तन्मन्त्रेण आवाह्य, महाकुम्भजलेन प्रोक्ष्य,

'सन्निधत्तां भवान् देव मन्त्रमूर्ते जनार्दन ।
जपाक्षमालावलये भक्तानुग्रहकाम्यया ॥'

इति गाथां उदीर्य, तत्र मन्त्रविग्रहं अक्षमालां बिभ्राणं चतुर्भुजं वलक्षाभं देवं ध्यात्वा, अभ्यर्च्य, गुरुः यजमानाय दद्यात् ।

पूर्वं गुरुः अक्षमालायां यं मन्त्रं स्थापितवान् तमेव गणयेत् । यथावित्तं गुरवे दक्षिणा देया ।

इति श्रीवराहगुरुणा विरचितायां क्रियाकैरवचन्द्रिकायां
प्रभापीठघण्टाधूपदीपभेर्यादिवाद्यरथादियानछत्रा-
दिपरिबर्हाक्षमालाप्रतिष्ठाविधिः नाम
चतुर्विंशः परिच्छेदः

---

## अथ पञ्चविंशः परिच्छेदः

# गृहार्चाप्रतिष्ठाविधिः

अथ गृहार्चाप्रतिष्ठाविधिः उच्यते—

सुवर्णादिलोहजां, यद्वा चन्दनागरुदेवदारुबिल्वब्रह्मवृक्ष-शमीनमेरूदुंबराश्वत्थन्यग्रोधप्लक्षप्रियङ्गुपुत्रजीवसरलतमालचूतब-दरीपनसक्षीरिणीसप्तलाजातिस्पन्दनतिमिशकदंबकुरवकतिलक-मधूकासनजंबूपुन्नागकनदखदिरनिंबविभीतकशाल्मल्यादिवृक्ष-जां यजमानाभीष्टकर्मानुरूपां ब्राह्मणस्य चेत् हस्तमानमितां,

क्षत्रियस्य चेत् एकविंशाङ्गुलमानां वैश्यस्य चेत् एकोनविंशाङ्गुलां, शूद्रस्य सप्तविंशाङ्गुलां, लोहजां चेत् ब्राह्मणस्य द्वादशाङ्गुलमानेन, क्षत्रियस्य नवाङ्गुलमानेन, विशः सप्ताङ्गुलमानेन, शूद्रस्य पञ्चाङ्गुलेन कृतां प्रतिमां रत्नजां मणिजां वा श्रीभूमिभ्यां श्रिया वा युतां केवलां वा प्रभापीठादियुतां सलक्षणां संहारशयनमात्ररहितां यथाविधि शिल्पिना कारयित्वा गृहस्य मारुत्यां दिशि स्थापयेत्।

तत्प्रतिष्ठार्थं सर्वान् संभारान् संभृत्य, यजमानः स्वयं आचार्यवरणं कृत्वा अंगणे नदीतीरे वा, यद्वा सुपूजिते क्षेत्रे प्रपां समध्यवेदिकां सचतुष्कुण्डां सैककुण्डां वा निर्माय आचार्येण प्रतिष्ठां कारयेत्।

आचार्यः पूर्वं अङ्कुरान् अर्पयित्वा, तदनु जलाधिवास नयनोन्मीलनपाद्यादिद्रव्यकलशस्नपनशयनाधिवास कुम्भावाहनादिकं यथापूर्वं प्रतिष्ठायामिव कृत्वा कुण्डे अग्निं उपसमिध्य पुरस्तात्तन्त्रपूर्वकं तत्त्वहोमादिशान्तिहोमावसानिकं हुत्वा, पूर्ववत् संपातेन संस्पृश्य सुमुहूर्ते प्रतिमास्थापनस्थाने रत्नन्यासं कृत्वा, तत्र यथाविधि संस्थाप्य, आवाहनादिकं कर्म कुर्यात्।

जङ्गमस्य चेत् आवाहनादिकं, अभिप्रेतवेदिकायां कृत्वा, तदनु स्थाने स्थापयेत्। द्वारे चण्डप्रचण्डक्षेत्रपालविघ्नेशवास्तुनाथदुर्गागुहविष्वक्सेनशङ्खपद्मनिधींश्च आवाह्य अभ्यर्चयेत्।

तदनु यजमानः च आचार्यचोदितः भूमौ दण्डवत् प्रणम्य इमां गाथां उदीरयेत्।

'दासोऽस्मि तव देवेश सपुत्रगणबान्धवः ।
सन्निधत्स्व गृहे यावत् अन्ववायो ममाच्युत ॥
पूजां मयां यथाशक्तिविहितां विकलामपि ।
गृह्णीष्व भगवन् भक्तजनानुग्रहकाम्यया ॥'

इत्थं आचार्यसन्निधौ भगवन्तं याचयित्वा गुरवे मूर्तिपेभ्यश्च यथाशक्ति दक्षिणां वितीर्य ब्राह्मणान् भोजयित्वा तेभ्यः अपि दक्षिणां दद्यात् ।

## श्रीवत्सप्रतिष्ठाः—

अथ श्रीवत्सप्रतिष्ठा उच्यते—

श्रीवत्सं अचे शालिभारे सशाटिके निवेश्य, पुण्याहादिपूर्वकं सर्वं कर्म कृत्वा, तत्त्वानि विन्यस्य, कुम्भे च आवाह्य अभ्यर्च्य, पद्मकुण्डे अग्निं उपसमिध्य, श्रीवत्समन्त्रेण समिदाज्यचरुभिः प्रत्येकं शतं अष्टोत्तरं आहुतीनां हुत्वा तत्त्वहोमं शान्तिहोमं च कृत्वा, संपातेन स्पृष्ट्वा, कुम्भजलेन प्रोक्ष्य, सुमुहूर्ते विष्णोः वक्षसि निवेशयेत् । गुरवे दक्षिणा च पूर्ववत् ।

## कौस्तुभप्रतिष्ठाः—

कौस्तुभं तु यथापूर्वं स्वमन्त्रेण स्थण्डिले स्थापयित्वा सुवर्णप्रतिमां कौस्तुभाकारेण कारयित्वा महाकुम्भे विन्यस्य पूर्ववत् सर्वं कर्म कुर्यात् ।

## वनमालाप्रतिष्ठाः—

वनमालां सुवर्णमयीं नानारत्नपरिष्कृतां पूर्वोक्तविधिना स्वमन्त्रेण प्रतिष्ठाप्य सुमुहूर्ते विष्णोः कण्ठे लंबयेत्।

## अथ किरीटप्रतिष्ठाः—

शुद्धकार्तस्वरमयं रत्नाञ्चितं वा किरीटं भगवद्योग्यं कृत्वा पाद्यादिघृतान्तैः सप्तदशद्रव्यकलशैः किरीटमन्त्रेण संस्नाप्य सवस्त्रधान्यकृतस्थण्डिले निधाय, कुम्भे तन्मन्त्रेण आवाह्य अभ्यर्च्य, कुण्डचतुष्टये वा एकस्मिन् कुण्डे वा समिदाज्य-चरुभिः तन्मन्त्रेण पृथक् अष्टोत्तरशतमाहुतीनां हुत्वा, शान्ति-होमं हुत्वा, संपातेन किरीटं संस्पृश्य सुमुहूर्ते कुम्भजलेन स्वविद्यया प्रोक्ष्य तदनु भद्रासने समासीनं देवं राजवत् उपचर्य संस्नाप्य अलंकृत्य आराध्य वेदघोषैः वाद्यघोषैः सर्वोपचारैः सह आचार्यः मूर्तिपैः साकं पञ्चोपनिषन्मन्त्रैः देवस्य मूर्धनि किरीटं आरोप्य, देवं यानं आरोप्य, तूर्यघोष-पुष्पवृष्ट्याद्युपचारपुरस्सरं ग्रामं प्रदक्षिणीकृत्य मन्दिरे विनिवेश्य अर्चयेत्। गुरवे दक्षिणा च देया।

## भूषणादिप्रतिष्ठाः—

हारादिनूपुरान्तं भूषणजालं द्वादशाक्षरमन्त्रेण गन्धजलेन संक्षाल्य धान्यराशौ संस्थाप्य अग्नौ स्वविद्यया हुत्वा तत्त-द्भूषणं ध्यात्वा द्वादशाक्षरमनुं जपन् तत्तन्मन्त्रेण तैस्तैः भूषणैः देवं भूषयेत्।

## चक्राद्यायुधप्रतिष्ठाः—

अथ चक्राद्यायुधानां प्रतिष्ठाविधिः उच्यते—

'चक्रं तु हस्तमानेन यद्वा सप्तदशांगुलम् ।
अष्टादशांगुलं यद्वा विंशत्यंगुलसंमितम् ॥
चतुर्दशांगुलं वापि षोडशांगुलमेववा ।
द्वादशांगुलमानं वा स्वलक्षणपरिष्कृतम् ॥
मूलबिम्बाननसमं सहस्रारं समुज्ज्वलम् ।
यद्वा शतारमथवा चतुर्विंशत्यरान्वितम ॥
षोडशारमथाष्टारं अथवा षडरं वरम् ।
सहस्रज्वालमथवा षड्ज्वालं नाभिमण्डितम् ॥
त्रिलोहनिर्मितं चक्रं नालपीठसमन्वितम् ।
कृत्वा करण्डमकुटं बिभ्राणं वा सुदर्शनम् ॥
चतुर्भुजधरं क्रुद्धं भ्रुकुटीकुटिलाननम् ।
पुरुषं द्विभुजं यद्वा दक्षिणेनापि तर्जनम् ॥
स्पृशन्तं कटिमन्येन च इतराभ्यां कृताञ्जलिम् ।
मुख्याभ्यां च कराभ्यां तु सुस्थितं पद्मविष्टरे ॥'

एवं रूपयुतं चक्रं कल्पयित्वा पूर्ववत् अङ्कुरार्पणजलाधिवासनयनोन्मीलनस्नपनशयनाधिवासद्वारतोरणकुम्भपूजानां अनन्तरं महाकुम्भे सुदर्शनं तन्मन्त्रेण आवाह्य अभ्यर्च्य,

'अत्युग्रं पुरुषं ध्यायेत् द्विभुजं रक्तवाससम् ।
रक्तदंष्ट्राननं नाभौ सुस्थितं चक्रनायकम् ॥'

इति ध्यात्वा चतुष्कुण्डेषु यद्वा एकस्मिन् समिदाज्य-चरुभिः तन्मन्त्रेण पृथक् अष्टोत्तरशतं आहुतीनां हुत्वा चक्रं शोषणादिभिः संशोष्य, शान्तिहोमावसाने संपातेन नाभ्याद्य-वयवान् संस्पृश्य सुमुहूर्ते स्वविद्यया प्रोक्ष्य संपूजयेत्।

## शङ्खादिप्रतिष्ठाः—

शङ्खादीनां चतुर्णां यथापूर्वं आचार्यः स्वस्वमन्त्रैः प्रतिष्ठां कृत्वा यथाविधि पूजयेत्। गुरवे दक्षिणा च पूर्ववत्।

## चण्डादिद्वारपालप्रतिष्ठाः—

चण्डादिद्वारपालानां जलाधिवासनयनोन्मीलनस्नपन शयनाधिवासैककुम्भपूजनतत्त्वहोमन्यासशान्तिहोम (संपात) स्पर्शनादि कर्म कृत्वा आचार्यः तत्तन्मन्त्रेण बीजयुक्तेन कुम्भ-जलेन प्रोक्षयेत्। गुरवे दक्षिणा च पूर्ववत्।

## गरुडप्रतिष्ठाः—

अथ वैनतेयप्रतिष्ठा उच्यते—

अङ्कुरावापनादि कर्म यथाविधि पूर्ववत् कृत्वा आचार्यः पूर्वादिषु चतुर्षु कोणेषु क्रमेण सत्यसुपर्णगरुडताक्ष्यान् आवाह्य तेषु क्रमेण बृहत्सामसुपर्णमनुरथन्तरगरुडगायत्रीमन्त्रैः प्रत्येकं प्रतिद्रव्यं अष्टोत्तरशतं आहुतीनां हुत्वा पुरस्तादुपरिष्टाश्च शिष्टं कर्म यथापूर्वं कुर्यात्। गुरवे दक्षिणा च देया।

## आदित्यप्रतिष्ठाः—

आदित्यप्रतिष्ठायां तु स्वगायत्र्याराधनम्। तथैव होमः।

'विभ्रा'डित्यनुवाकेन सावित्र्या च स्थापनं सूर्यमूलविद्यया कुम्भप्रोक्षणं च कुर्यात्।

'ब्रह्मादीनां च सर्वेषां देवानां च यथापुरम्।
स्वतन्त्रे परतन्त्रे च स्वैः मन्त्रैः स्थापनं भवेत्॥
दुर्गा च मातरः सप्त याः काश्चित् देवताः स्त्रियः।
तासां प्रतिष्ठा लक्ष्मीवत् स्वैः स्वैः मन्त्रैः विशिष्यते।

## विष्वक्सेनप्रतिष्ठाः—

विष्वक्सेनस्य भगवद्बिंबस्येव सर्वकर्माणि कृत्वा स्वमन्त्रेण स्थापनं कुर्यात्। सर्वत्र दक्षिणा च पूर्ववत्।

## भक्तप्रतिष्ठाविधिः—

भक्तानां प्रतिकायं स्वतन्त्रं स्वामितन्त्रं वा शिलादिभिः यथालाभं कृताञ्जलिपुटं सौम्यं स्थितं आसीनं वा यथावर्णरूपं यथाश्रमधर्मं यथावयोरूपधरं पद्मपीठे प्रतिष्ठितं कर्मानुरूप्येण वा प्रतिष्ठितं शिल्पिना कल्पयित्वा शुभे दिने गुरुः आदौ अङ्कुरान् युग्मास्वेव पालिकासु अर्पयित्वा वेदिकाधिवासन-कुम्भाष्टकरहितं सर्वं अन्यत् कर्मजालं पूर्ववत्, द्वारतोरणयजन-पूर्वकं प्रणवेन, अन्यैः मन्त्रैश्च यथाविधि कृत्वा, कुम्भप्रोक्षणं तन्मन्त्रेणैव कुर्यात्। तेषां स्वातन्त्र्ये सिद्धादिङ्मूर्तिवर्जितं मन्दिरं कुर्यात्।

## दीक्षागुरुप्रतिष्ठाः—

आचार्यः मन्त्रसिद्ध्ये दीक्षागुरोः प्रतिमां कृत्वा पुण्याह-पूर्वकं सर्वं कर्मजालं भक्तानामिवकृत्वा, ब्राह्मणान् भोजयित्वा

तेभ्यः दक्षिणां च वितीर्य, तत्र स्वाध्यायाध्ययनादि विप्रैः कारयित्वा स्वयं च कुर्यात् ।

तेषां स्वातन्त्र्ये ध्वजारोहणे होमबलि तीर्थयात्रादिरहितमुत्सवं कुर्यात् । पारतन्त्र्ये भगवता साकं भगवत्प्रीतये कुर्यात् । गुरवे दक्षिणा च पूर्ववत् ।

इति श्रीवराहगुरुणा विरचितायां क्रियाकैरवचन्द्रिकायां
गृहार्चाश्रीवत्सकौस्तुभवनमालाकिरीटभूषणचक्रा-
द्यायुधचण्डादिद्वारपालगरुडादित्यभक्तदी-
क्षागुरुप्रतिष्ठाविधिः नाम पञ्चविंशः
परिच्छेदः क्रियापादप्रयोगः

---

# अथ चर्यापादप्रयोगः

## षड्विंशः परिच्छेदः

## दीक्षाविधिः

अथ तावत् दीक्षाविधिः उच्यते—

दीक्षामण्डपं प्रतिष्ठामण्डपवत् समध्यवेदिकं कल्पयित्वा, वेदिकायाः पश्चिमे तालत्रयात् बहिः, ब्राह्मणस्य चेत् दीक्षा

तालद्वयसम्मितचतुरश्रं कुण्डं, क्षत्रियस्य यदि गोकर्णयुग्मेन वृत्तं, यदि वैश्यस्य वितस्तिभ्यां चापाकारं, पादजस्य प्रादेशद्वयेन त्रिकोणं च कुण्डं कल्पयित्वा, स्रुक्स्रुवौ च एवमेव वर्णानुपूर्व्येण, एवं अन्यानि पात्राणि समिदादीन् यागसंभारान् च दशम्यां संपाद्य, तदनु एकादश्यां सायाह्ने दीक्षाचार्यः मण्डपे सर्वालङ्कारयुते पूर्ववत् द्वारतोरणकुम्भादीन् संस्थाप्य, पूर्ववत् अङ्कुरावापनं कृत्वा, पुण्याहजलेन मध्यवेदिकां प्रोक्ष्य, प्राणायामपूर्वकं तस्यां चन्दनार्द्राणि सूत्राणि प्रागायतानि सप्तदश तावन्ति उदगायतानि च निपात्य, तेषु षट्पञ्चाशदुत्तरद्विशतपदेषु मध्ये षट्त्रिंशत्कोष्ठानि सम्मृज्य, तन्मध्ये शङ्कुं संस्थाप्य, वृत्तानि समानि पञ्चबिम्बानि यथा स्युः तथा भ्रामयित्वा, तेषु प्रथमं बिम्बं कर्णिकाक्षेत्रं, द्वितीयं त्रेधा विभज्य, तथा कृतेषु प्रथमं केसरान्तवलयं, द्वितीयं दलान्तवलयं, तृतीयं नाभिमण्डलं, तन्नाभिमण्डलमपि त्रेधा विभज्य, तद्बहिः शिष्टेषु बिम्बेषु अरक्षेत्रं द्वाभ्यां, तद्बहिः एकेन नेमिमण्डलं च कल्पयित्वा, तद्बहिः अष्टाविंशतिपदैः पीठिकां, तद्बहिः पङ्क्तिद्वयेन अशीतिपदैः वीथिकां च कल्पयेत्।

तद्बहिः पङ्क्तिद्वितयेन द्वादशाधिकशतपदैः द्वयोः पङ्क्त्योः चतुरश्रं कृत्वा, तन्मध्ये पूर्वादि उत्तरान्तं चतुश्चतुष्पदैः चतुर्द्वाराणि आग्नेयादिषु कोणेषु अपि तथैव च कृत्वा, द्वारपार्श्वयोः बाह्यरथ्यायां द्वे द्वे अवान्तररथ्यायां एकैकं च परिमार्जयेत्। एवं चेत् अर्धशोभाः भवन्ति।

अर्धशोभयोः मध्ये बहिः पङ्क्तौ एकैकं आन्तरपङ्क्तौ त्रीणि च एवं चतुर्भिः पदैः शोभाः भवन्ति। * एवं चतसृषु दिक्षु शोभानां अष्टकं, अर्धशोभानां षोडशकं च कृत्वा ततः वर्णकलापपरिपूरणं कुर्यात्।

पञ्चरत्नैः[१] धातुभिः वा तेषां चूर्णैः वा पञ्चवर्णैः पुष्पैः वा मण्डलपदानां परिपूरणं कुर्यात्। सितस्य शाल्यादितण्डुलपिष्टं, कृष्णस्य पुटदग्धं, श्यामस्य क्षुण्णशुष्कपत्रचूर्णं, रक्तस्य कौसुम्भं, पीतस्य हरिद्राचूर्णं, सर्वत्र वर्णानां इति अनुषङ्गः। पीतेनकर्णिकां, शुक्लैः बिन्दून्, कर्णिकारेखाः पाटलैः, केसरावनिं द्विधा कृत्वा, श्वेतेन पूर्वभागं, उत्तरं पीतेन, केसराणि शुक्लेन, बिन्दून् रक्तेन, अष्टदलानि श्वेतेन, दलान्तानि रक्तैः, दलान्त-वलयं रक्तेन श्वेतेन वा, नाभिमण्डलत्रयं श्यामेन पीतेन रक्तेन, अरान्तवलयं कृष्णेन, द्वादशाराणि रक्तेन, नेम्यन्तमेदिनीं सितेन, नेमिं द्वेधा कृत्वा, कृष्णेन पूर्वभागं, उत्तरं सितेन, अन्तरालानि श्यामेन कृष्णेन वा, तद्बहिः पीठं पीतेन पाटलेन श्वेतेन वा, तद्बहिः वीथिकां सितेन लतावितानयुतां, शोभाष्टकं

---

* मूले तु—"चतुर्षु कोणेषु तथा प्रत्येकं शङ्खसिद्धये।
कोष्ठद्वयं तु सम्मार्ज्यं द्वयोः पङ्क्त्योः चतुर्मुख॥
उपशोभार्थमप्येवं व्यत्यासेन चतुष्टयम्।
सम्मार्ज्यमेवंकोष्ठानां विनियोगः प्रदर्शितः॥"
इति भेदः प्रदर्शितः।

१. कनकं कुलिशं मुक्ता पद्मरागं च नीलकम्।

रक्तेन, अर्धशोभाः षोडश पीतेन, उत्तरादि द्वारचतुष्टयं क्रमेण शुक्लरक्तपीतकृष्णैः, कोणान् कृष्णेन च वर्णेन, सर्वत्र अन्तरालानि कृष्णेन श्यामेन वा वर्णेन आपूर्य, चतुर्षु कोणेषु श्वेतेन शङ्खान् कृत्वा, ततः मण्डलाराधनं कुर्यात्।

कर्णिकायां मन्त्राध्वानं अर्चयेत्। तत्स्वरूपं तु द्वादशाक्षर[1]अष्टाक्षर[2]बलमन्त्र[3]पवित्रमन्त्र[4]विष्णुगायत्री[5]सुदर्शनमन्त्र[6]चतुर्मूर्तिमन्त्र[7]नृसिंहमन्त्र[8]राममन्त्र[9]कृष्णमन्त्र[10]वराहमन्त्रान्[11] उच्चार्य अर्चयेत्।

---

१ द्वादशाक्षरमन्त्रः— ओं नमो भगवते वासुदेवाय।

२ अष्टाक्षरमन्त्रः— ओं नमो नारायणाय।

३ बलमन्त्रः—
चमूषच्छ्येनः शकुनो विभृत्वा गोविन्दुर्द्रप्स आयुधानि बिभ्रत्।
अपामूर्मिं सचमानः समुद्रं तुरीयं धाम महिषो विवक्ति॥

४ पवित्रमन्त्रः— येनदेवाः पवित्रेण आत्मानं पुनते सदा।
तेन सहस्रधारेण पावमान्यः पुनन्तु माम्॥

५ विष्णुगायत्री—ओं नारायणाय विद्महे वासुदेवाय धीमहि।
तन्नो विष्णुः प्रचोदयात्॥

६ सुदर्शनमन्त्रः—
चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि।
तेनपवित्रेण शुद्धेन पूता अतिपाप्मानमरातिं तरेम॥

७ चतुर्मूर्तिमन्त्राः—(वराहनृसिंहानन्तहयग्रीवेति चतुर्मूर्तयः)

(१) वराहमन्त्रः—

खड्गो वैश्वदेवः श्वा कृष्णः कर्णो गर्दभस्तरक्षुस्ते रक्षसामिन्द्राय सूकरः सिंहो मारुतः कृकलासः पिप्पका शकुनिस्ते शरव्यायै विश्वेषां देवानां पृषतः ॥

(२) नृसिंहमन्त्रः—

प्रतद्विष्णुस्तवतेवीर्येणमृगो न भीमः कुचरो गिरिष्ठाः ।
यस्यो रुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥

(३) अनन्तमन्त्रः—

विचक्रमे पृथिवीमेष एतां क्षेत्राय विष्णुर्मनुषे दशस्यन् ।
ध्रुवासो अस्य कीरयो जनास उरूक्षितिं सुजनिमाचकार ॥

(४) हयग्रीवमन्त्रः—ज्ञानानन्दमयं देवं निर्मलस्फटिकाकृतिम् ।
आधारं सर्वविद्यानां हयग्रीवमुपास्महे ॥

८ नृसिंहमन्त्रः—उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम् ।
नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम् ॥

९ राममन्त्रः—

भद्रोभद्रया सचमान आगात् स्वसारं जारो अभ्येति पश्चात् ।
सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन् रुशद्भिर्वर्णैरभि राममस्थात् ॥

१० कृष्णमन्त्रः—

कृष्णं न एम रुशतः पुरो भाश्चरिष्ण्वर्चिर्वपुषामिदेकम् ।
यदप्रवीता दधतेह गर्भं सद्यश्चिज्जातो भवसीदु दूतः ॥

११ वराहमन्त्रः— नमस्तस्मै वराहाय लीलयोद्धरते महीम् ।
खुरमध्यगतो यस्य मेरुः खणखणायते ।

केसरेषु तत्त्वाध्वार्चनम्, जीवप्राणमनोबुद्धि—अहङ्कार-शब्दस्पर्शरूपरसगन्धश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थपृथिव्यप्तेजोवाय्वाकाशरूपाणि जीवतत्त्वानि धातृविधातृमित्रावरुणभगविवस्वत्पूषसवितृरवित्वष्टृविष्णुवीरभद्रशंभुगिरिशशर्वोमापतीशानहरस्थाणुभवशिवशूल्यादिरूपतत्त्वानि च प्रणवादिचतुर्थ्यन्तानि अर्चयेत्। दलेषुवर्णाध्वार्चनम्। 'ओं क्षं नमः पराय' इत्यारभ्य 'ओं द्यं नमःपराय' इत्यन्तेन नाभिभागे पदाध्वार्चनम्, तत्र केशवादीन् सप्तऋषीन् च, प्राच्यादिषु आदिवराहनारसिंहश्रीधरहयवक्त्रभार्गवरामराघववामनवासुदेवान् च, कुमुदादिसुप्रतिष्ठान्तांश्च, जयविजयचण्डप्रचण्डभद्रसुभद्रधातृविधातृसूर्यचन्द्रकामब्रह्मविनायकषण्मुखदुर्गाकुबेरशंकरान् च, विमलोत्कर्षिणीज्ञानाक्रियायोगप्रह्वीसत्येशानानुग्रहशक्तीश्च, आदित्यादिकेत्वन्तान् च, लक्ष्मीसरस्वतीरतिशान्तितुष्टिपुष्टिक्रियाकीर्तिवाराहीश्च, प्रणवादिचतुर्थ्यन्तं अर्चयेत्। अरेषु कलाध्वपूजनं तत्र अकारादिस्वरार्चनं कुर्यात्। नेमिभागे भुवनाध्वार्चनम्; तत्प्रकारस्तु—अतलवितलसुतलनितलमहातलरसातलतलातलभूर्भुवस्सुवर्महर्जनस्तपस्सत्यगन्धर्वलोकयक्षलोकाप्सरोलोककिन्नरलोकयमलोकनिर्ऋतिलोकवरुणलोकरुद्रलोकदेवलोकब्रह्मलोकशिवलोकविष्णुलोकसदाविष्णुलोककुम्भीपाकमहारौरवक्षुरालसन्निमालशीतलोष्णजलसन्तपनतप्तलोहशाल्मलिरूपधीयन्त्रधनुर्भिन्नशुद्धनिरयान् प्रणवादिचतुर्थ्यन्तेन अर्चयेत्।

बिन्दुषु द्वादशाक्षराणि कर्णिकायां परमात्मानं केसरेषु श्रीसरस्वतीरतिशान्तिप्रीतिकीर्तिपुष्टितुष्टीः दलभूमिषु श्रीवत्सादिद्वादशशक्तीः दलस्य परितः व्याप्त्याद्याः, प्रथमनाभौ विष्णुं, द्वितीये ब्राह्मणं, तृतीये रुद्रं द्वादशारेषु विष्ण्वादीन् द्वादश, अरान्तवलये मत्स्यादिदशमूर्तीः, प्रथमनेमिवलये शंखादीन, आग्नेयादिपीठकोणचतुष्के वराहनारसिंहानन्तहयग्रीवान, लतावीथिकायां इन्द्रादिलोकपालान, द्वारचतुष्के चण्डादिद्वन्द्वं, वीथ्यां ईशाने विष्वक्सेनं, पूर्वद्वारबाह्ये वैनतेयं, दक्षिणे पद्मं, पश्चिमे गदां, उत्तरे शंखं च प्रणवादिनमोन्तैः स्वस्वमन्त्रैः अर्चयेत्।

तदनु हेमादिमयं कुम्भं तादृशं करकं च मृण्मयं चेत् सूत्रवेष्टितं तद्युगलं गालितोदकेन आपूर्य, न्यस्तरत्नसुवर्णस्रवचन्दनपरिष्कृतं अहतवासोयुग्म संवेष्टितं कृत्वा करक अस्त्रमन्त्रेण शतवारं अभिमन्त्र्य, अविच्छिन्नधारया वेदिकां परितः प्रादक्षिण्येन करकं तस्याः पृष्ठतः कुम्भं च नीत्वा चक्रपद्मस्य ईशानकोणे धान्यराशौ दक्षिणे कलशं वामे करकं च संस्थाप्य (करके षडक्षरेण सुदर्शनं, अथ) कुम्भे मूलमन्त्रेण हरिं पीठकल्पनपूर्वकं आवाह्य अभ्यर्च्य, मण्डले च सांगं सपरिवारं परमात्मानं यथाविधि समभ्यर्च्य तदनु अष्टाक्षरेण अग्निं मथित्वा, कुण्डमध्ये निधाय, तत्र शृतं चरुं चतुर्धा विभज्य, भागमेकं मण्डलस्थाय हरये, कुम्भस्थाय अंशं एकं च निवेद्य, अग्नौ एकं अंशं हुत्वा, गुरुः स्वयं एकं अंशं उपयुञ्जीत।

तत्र अग्नौ समिधां अष्टोत्तरशतं आज्याहुतीनां अपि तथा मूलमन्त्रेण चरुं पुरुषसूक्तेन हुत्वा, पूर्णाहुतिं कुर्यात्। तदनु आचार्यः स्नातं जितक्रोधं मदादिरहितं शुचिं अहतक्षौमवसनं सोत्तरीयं अलङ्कृतं शिष्यं आहूय नवेन वाससा नेत्रे स्वमन्त्रेण बद्ध्वा तं आत्मनः दक्षिणपार्श्वे प्राङ्मुखं विनिवेश्य तेन दर्भैः संस्पृष्टः सन् द्वादशाक्षरेण आज्यचरुसमित्पुष्पतिलैः द्वादशाहुतीः जुहुयात्। ततः गुरुः शिष्यस्य मूर्धानं प्रसृतिमुद्रया त्रिः प्रादक्षिण्येन अष्टाक्षरेण स्पृशन् भस्मना पाण्डरेण मूलमनुना शिरः स्पृष्ट्वा, शिष्यस्य ऊर्ध्वपुण्ड्रं विधाय अस्त्रमन्त्रेण प्रतिसरं बद्ध्वा, शिष्यं पञ्चगव्यं चरुं च प्रणवेन प्राशयित्वा, दन्तान् धावयित्वा, दन्तकाष्ठं भूमौ निपात्य अवलोकयेत्। नैर्ऋतवारुणयाम्येषु यद्यग्रं अशुभं भवति, तदा नृसिंहमन्त्रेण[1] तिलैः अष्टोत्तरशतं आहुतीनां जुहुयात्। ततः गुरुः शिष्यं आचान्तं करे गृहीत्वा देवेशं प्रणम्य,

"संसारपाशबद्धानां पशूनां पाशमोक्षणे।
त्वमेव शरणं देव गतिरन्या न विद्यते॥
पाशमोक्षणहेतुर्यः त्वत्समाराधनात्मकः।
तेनेमान् जन्मपाशेन पाशितान् पशुजन्मनः॥
विपाशयामि देवेश तदनुज्ञातुमर्हसि।"

इति इमां गाथां उदीर्य शुक्लकृष्णरक्तवर्णं तन्तुं त्रिगुणीकृत्य पुनश्च त्रिगुणीकृतेन तेन मायासूत्रेण शिष्यस्य शिखां

---

१ ओं ट्क्ष्रों ट्ज् क्ष्रौं नमः ज्वलनायुतदीप्तये नृसिंहाय स्वाहा।

उपक्रम्य पादान्तं पञ्चविंशतिसंख्यया मूलमन्त्रेण वेष्टयित्वा, तेनैव मन्त्रेण सर्पिषा अष्टोत्तरशतं आहुतीनां स्पृशन् शिष्यं पूर्णाहुत्यवसानिकं हुत्वा, स्वप्नाधिपतिमन्त्रेण[1] सर्पिषा अष्टोत्तरशतं आहुतीश्च हुत्वा, माषोदनेन भूतेभ्यः बलिं दत्त्वा, शिष्यनेत्रबन्धं देहबन्धं च विमोच्य, मायासूत्रं अन्यस्मिन शरावे निधाय अन्येन पिधाय, कुम्भपार्श्वे निधाय, दर्भान् भूमौ संस्तीर्य, तत्र शिष्यं शाययेत्। तदा मण्डलकुण्डाग्निस्थदेवान न उद्वासयेत्।

प्रभाते शिष्यस्य सुस्वप्नदर्शने सद्य एव दीक्षेत। दुस्स्वप्नदर्शने तु सद्यः गुरुः स्नात्वा यागमण्डपं आसाद्य, "दुस्स्वप्नदोषशान्त्यर्थं शान्तिहोमं करिष्ये" इति संकल्प्य, पूर्ववत् शान्तिहोमं कृत्वा, पूर्ववत् तोरणध्वजकुम्भपूजनं कृत्वा, मण्डलस्थं कुम्भस्थं च देवं अभ्यर्च्य, चतुर्विधं अन्नं निवेद्य, नत्वा प्रदक्षिणीकृत्य, शिष्यस्य नेत्रे पूर्ववत् बद्ध्वा, तं आत्मनः दक्षिणपार्श्वं प्रापय्य, समिदाज्यादिभिः मूलमन्त्रेण प्रत्येकं अष्टोत्तरशतं आहुतीनां हुत्वा, तत् मायासूत्रं पञ्चविंशतिधा छित्वा,

---

१ ओंकारः प्राक्तनः प्राणो लोकेशोपरि संस्थितः।
तदूर्ध्वे व्यापकं चान्द्रं ह्रीङ्कारस्तदनन्तरम्।
स्वप्नाधिपतये दद्यात्पदं चाथ, षडक्षरम्॥
रजनीश्वरायशब्दं वै विष्णवे त्र्यक्षरं ततः।
स्वाहा समन्वितो विंशत्यक्षरः स्वप्नमन्त्रराट्॥
(जयाख्य संहिता पटल १६ श्लोक २०१)

तेन प्रत्येकं अष्टोत्तरशतं अष्टकृत्वः वा प्रकृत्यादीनि हुत्वा, गुरुः स्वहृत्पद्मे परमं पुरुषं ध्यायन्, तस्मिन् शिष्यजीवं संहार-क्रमेण संहृत्य, तस्य शोषणादि कृत्वा, तदनु तत्त्वसृष्टिहोम-पूर्वकं शिष्यस्य स्थूलशरीरं सृष्ट्वा, स्वहृदयस्थं मण्डले विचिन्त्य, मण्डलस्थं शिष्ये ध्यात्वा, शिष्यं सजीवं ध्यात्वा, मूलमन्त्रेण कुम्भजलेन प्रोक्ष्य, शिष्यस्य नेत्रबन्धं उन्मुच्य, अन्यत् वासः परिधाप्य, तस्य पादप्रक्षालनं आचमनान्तं कारयित्वा, अन्येन वाससा शिष्यस्य नेत्रे बद्ध्वा, गुरुः तं अन्तिके प्राङ्मुखं उपवेश्य, षडध्वनः शोधयित्वा, महाव्याहृति-मन्त्रेण आज्येन अष्टोत्तरशतं आहुतीनां हुत्वा, हुतशेषेण शिष्यस्य पादौ तिलैः तावतीः तन्मन्त्रेण हुत्वा हुतशेषेण शिष्यस्य नाभिं, कुशेशयैः तावतीः पूर्वोक्तविद्यया हुत्वा, हुतशेषेण शिष्यस्य हृदयं, पूर्वोक्तेन मनुना चरुणा पूर्वोक्त-संख्यया हुत्वा, हुतशेषेण शिष्यस्य मूर्धानं च संस्पृश्य, होमान्ते गुरुः शिष्यं दक्षिणे करे गृहीत्वा, कुम्भं मण्डलं च प्रदक्षिणं प्रक्रमय्य मण्डलस्य* चतुर्णां द्वाराणां मध्ये यस्मिन्

---

* "चक्राब्जमण्डले शस्ता दीक्षा तस्याश्च मण्डलम् ।
एकद्वारं भवेत् तच्च सौम्यं स्यात् अग्रजन्मनां ॥
चित्रितं श्वेतवर्णेन प्राग्द्वारं पृथिवीभुजाम् ।
रक्तेन चित्रितं द्वारं पाश्चात्यं पीतवर्णकम् ॥
विशां भवेत् दाक्षिणात्यं असितं पादजन्मनां ।
द्वाराणि च अनुलोमानां उत्पादकवत् इष्यते ॥
शूद्रस्यवलजं प्राच्यां स्त्रीणां शूद्रवत् इष्यते ।" इति मूले—

कस्मिंश्चित् द्वारि तिष्ठन् गुरुः शिष्याञ्जलिं मणिभिः मुक्ताभिः प्रवालैः केवलैः पुष्पैः वा पूरयेत्।

तदनु सदस्यानुज्ञया गुरुणा अभ्यनुज्ञातः तस्मिन् मण्डले पूर्वं अञ्जलिपूरितं पुष्पादि शिष्यः विकिरेत्। तदुत्करः यत्र पतति तद्भागाधिपमूर्तीनां नामानि केशवादीनि तदन्तं भागवतः इति भट्टारकः इति वा गुरुः शिष्यस्य विनिर्दिशेत्। क्षत्रियस्य तु देवान्तं नाम, वैश्यस्य पालशब्दान्तं, शूद्रस्य दासान्तं। तदनु गुरुः शिष्यस्य नेत्रबन्धं विमुच्य, चक्राब्जमण्डलं प्रदर्श्य, तेन सह आचार्यः देवं नारायणं ध्यात्वा, शिष्यस्य कर्णे सप्रणवं सऋषिच्छन्दोदैवतं सांगं द्वादशाक्षरं, तदनु अष्टाक्षरं, पश्चात् मूर्तिमन्त्रान् च यथाविधि अध्यापयेत्। क्षत्रियवैश्ययोश्च एवं। शूद्राणां स्त्रीणां अनुलोमजानां च नमःप्रणवहुंफट्स्वाहा-कारवर्जितं केवलं केशवादिकं वैष्णवं नाम अध्यापयेत्।

तदनु कुम्भस्थं मण्डलस्थं च हरिं अर्चयित्वा, ध्यात्वा, गुरुः स्वहस्ते चक्राब्जमण्डलं ध्यात्वा, विष्णुहस्तं कृत्वा, स्थितस्य प्राञ्जलेः शिष्यस्य मूर्ध्नि निधाय, देशिकः तत्र अग्नि-सन्निधौ शिष्यस्य आचारान् नियमान् च सर्वान् बोधयेत्। यथा—

मन्त्रः परस्य नाख्येयः नाक्षसूत्रं प्रदर्शयेत्।
न च मुद्रां नापि सिद्धिं मन्त्रस्य कथयेत् स्वयम्॥
आचार्यनाम न वदेत् नियोगं नास्य लङ्घयेत्।
न गुरून् दूषयेत् वाचा नाचरेत् तस्य विप्रियम्॥

शयनादींश्च न गुरोः आक्रमेत् न च लङ्घयेत् ।
गुरुवत् गुरुदारेषु वर्तितव्यमसन्निधौ ॥
आचार्यं अच्युतं शास्त्रं त्रयं सम्मानयेत् सदा ।
नास्तिकान् भिन्नमर्यादान् वेदब्राह्मणनिन्दकान् ॥
न स्पृशेत् नैव तैस्साधं संवसेत् दुर्दशास्वपि ।
प्रसारयेत् नैव पादौ गुरुदेवाग्निसन्निधौ ॥
वेदितव्यं जगत् सर्वं वासुदेवमयं सदा ।
अनर्चयित्वा देवेशं नात्मपोषणमाचरेत् ॥
जपस्तोत्रप्रणामादीन् सन्ध्याकाले समाचरेत् ।
भगवद्ध्यानतत्कर्मकर्तव्येषु सदा रमेत् ॥
वैष्णवान् च यतीन् चैव दृष्ट्वा तान् प्रणमेत् क्षितौ ।
पुत्रदारगृहक्षेत्रपश्वादिधनमात्मनः ॥
व्यपदेश्यमशेषेण नाम्ना भगवतो वदेत् ।
समस्तसर्वेषु भूतेषु कामक्रोधविवर्जितः ॥
शनैश्शनैरिन्द्रियाणि विषयेभ्यो निवारयेत् ।
संसारविमुखैः सार्धं शास्त्राभ्यासं समाचरेत् ॥
श्रौतस्मार्तानि कर्माणि सदा सेवेत नेतरत् ।
स्वसूत्रोक्तेन विधिना निषेकादिक्रिया भवेत् ॥
गुह्यं नाम च गोत्रं च प्राकृतं नान्यदिष्यते ।
आसीनो वा शयानो वा गच्छन् भुञ्जान एव वा ॥
कीर्तयेत् संस्मरेत् चैव वासुदेवं सनातनम् ।

इति गुरुः शिष्याय नियमान् संबोध्य, ततः पूर्णाहुत्यन्तं

शान्तिहोमं अखिलं च कृत्वा, अग्निं विसृज्य, कुम्भस्थं मण्डलस्थं च देवं उद्वास्य, शिष्याय आशिषः वाचयेत्। तदनु शिष्यश्च गुरवे गोभूहिरण्यभूषणयानदासीदासादि यथावित्तानुसारतः वितीर्य, ब्राह्मणान् भोजयित्वा, तेभ्यश्च दक्षिणां वितीर्य, तत्रैव हुतशेषं भुक्त्वा, अहश्शेषं उषित्वा, रवौ अस्तं गते सर्वालङ्कारयुतः गुरुणा अनुज्ञातः बन्धुभिः सह अलङ्कृतं स्वगृहं प्रविशेत्।

इति श्रीवराहगुरुणा विरचितायां क्रियाकैरवचन्द्रिकायां
दीक्षाविधिः नाम
षड्विंशः परिच्छेदः

---

## अथ सप्तविंशः परिच्छेदः

# समाराधनविधिः

अथ समाराधनविधिः उच्यते—

देशिकः वारुणदिव्याग्नेयवायव्यपार्थिवमान्त्रमानसाभिधेषु सप्तविधेषु स्नानेषु एकतमेन स्नात्वा, शुक्लोपवीतोत्तरीयचन्दनाद्यनुलेपनश्वेतमृत्स्नाकृतोर्ध्वपुण्ड्राद्यलङ्कृतः नित्यं स्वकृत्यं निर्वर्त्य, आजानुपादौ आमणिबन्धनात् हस्तौ च प्रक्षाल्य

आचम्य, आलयं द्विः प्रदक्षिणीकृत्य, द्वारपार्श्वं समासाद्य, आचक्राय इत्यादि मन्त्रैः षडङ्गन्यासं कृत्वा, अधिवलजं स्थितः❋ हस्ताभ्यां तालत्रयं कृत्वा, स्वयमेव उत्तमत्रयगेहकवाटत्रयं "ओं क्षं तार्क्ष्याय नमः" इति मन्त्रेण, मध्यमत्रयगेहकवाटत्रयं "ओं शान्ताय नमः" इति मन्त्रेण, अधमत्रयगेहकवाटत्रयं "ओं यं वायवे नमः" इति मन्त्रेण च उद्घाट्य, अन्यानि कवाटानि "ओं मुक्ताय नमः" इति परिचारकैः अन्यैः ब्राह्मणैः वा उद्घाटयित्वा "अधीपाता" इति साम पठन्, दक्षिणाङ्घ्रिणा गर्भगृहद्वारब्रह्मसूत्रदक्षिणेन अन्तः प्रविश्य, द्वादशाक्षरमनुना शिरसा देवं प्रणम्य, दीपान् प्रज्वाल्य, स्रक्पुष्पादीनि विसृज्य, वेदिकापात्रबिंबार्चनं चण्डप्रचण्डौ आरभ्य महाबलिपीठान्तं प्रतिष्ठोक्तविधानेन प्रणवादिनमोन्तैः तत्तन्मन्त्रैः शिष्येण वा परिचारकेण वा यथाविधि कारयेत्।

● अथ सर्वालंकारसंयुतः आचार्यः अन्तः प्रविश्य देवे

---

❋ दक्षेण वामं संताड्य वामहस्तेन दक्षिणं।
वामं दक्षिणहस्तेन कुर्यात्तालत्रयं बुधः॥
एकतालेन मरणं द्वितालें व्याधिपीडनम्।
त्रिताले सुखमाप्नोति तस्मात्तालत्रयं कुरु॥
इति विहगेन्द्रे।

● सर्वालंकारसंयुतः—
धृतपञ्चाङ्गभूषणः। अलाभे तु अङ्गुलीयेनापि अलङ्कृत्य....।
इति सारसमुच्चये।

पूर्वपश्चिमाभिमुखे स्वयं उदङ्मुखः दक्षिणोत्तराभिमुखे प्राङ्मुखः सन् देवपार्श्वे तालमात्रसमुत्सेधे तालद्वयसमायते कूर्मासने उपविश्य, भूतशुद्धिं कुर्यात्।

अपक्रामन्तु भूतानि पिशाचप्रेतगुह्यकाः।
सर्वेषां अविरोधेन विष्णोः कर्म समारभे॥
उत्क्रामन्तु पिशाचाः ये ये भूताः भूमिभागगाः।
ये भूताः विघ्नकर्तारः ते गच्छन्त्वाज्ञया हरेः॥
कूर्मादीन् दिव्यलोकं तदनु मणिमयं मण्डपं तत्र शेषम्।
तस्मिन् धर्मादिपीठं तदुपरि कमलं चामरग्राहिणीश्च॥
विष्णुं देवीविभूषायुधगणमुरगं पादुके वैनतेयम्।
सेनेशं द्वारपालान् कुमुदमुखगणान् विष्णुभक्तान् प्रपद्ये॥

इति उच्चार्य, वहिः तूर्यघोषे प्रवर्तिते यवनिकया गर्भगृह द्वारं निश्छिद्रं आच्छाद्य, घण्टायां "ओं ब्रह्मणे नमः", मुकुले ओं चक्राय नमः, सूत्रेषु ओं महानागेभ्यः नमः, जिह्वायां ओं सरस्वत्यै नमः, नादे ओं प्रजापतये नमः, इति आवाह्य अभ्यर्च्य घण्टां चालयेत्।

## भूतशुद्धिः—

आसनमन्त्रस्य मेरुपृष्ठऋषिः अतलं छन्दः श्रीकूर्मः देवता, आसने विनियोगः। पृथ्व्याः कूर्मऋषिः सत्यं छन्दः ब्रह्मा देवता, आसने विनियोगः ब्रह्मणे नमः, ओं ह्रीं ओं श्रीमदनन्तासनाय नमः, ओं कमलासनाय नमः, ओं विमलासनाय नमः, ओं योगासनाय नमः, ओं वीरासनाय नमः,

ओं कूर्मासनाय नमः इति आसनं अभ्यर्च्य,

पृथ्वि त्वया धृताः लोकाः देवि त्वं विष्णुना धृता ।
त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥
मां च पूतं कुरु धनैरे नतोस्मि त्वां सुरेश्वरीम् ।

इति प्रार्थ्य, पद्मं वा स्वस्तिकं वा आसनं बद्ध्वा, अस्मद्-गुरुभ्यः नमः, अस्मत्परमगुरुभ्यः नमः, अस्मत्परमेष्ठिगुरुभ्यः नमः इति गुरुवरं परां ध्यात्वा, तदनु शोषणादि कुर्यात् ।

शरीरस्य आत्मा ऋषिः प्रकृतिपुरुषौ छन्दसी, सत्यः देवता, आसने विनियोगः, ओं आत्ममन्त्रस्य आत्मा ऋषिः, पुरुषप्रकृती छन्दसी, सत्यः देवता, ओं ब्रह्मणे नमः, ओं विष्णवे नमः, ओं ईश्वराय नमः, ओं भूं भूम्यै नमः, ओं करतलकरपृष्ठाभ्यां नमः, ओं अङ्गुष्ठाभ्यां नमः, ओं तर्जनीभ्यां स्वाहा, ओं मध्यमाभ्यां वषट्, ओं अनामिकाभ्यां हुं, ओं कनिष्ठिकाभ्यां फट्, ओं नखमुखेभ्यः वौषट्, ओं चक्रमन्त्रस्य शंभुऋषिः, गायत्री छन्दः, श्रीसुदर्शनः देवता, रेफं बीजं, ह्रीं शक्तिः, रक्तोवर्णः दिग्बन्धनार्थे विनियोगः, अचक्राय हृदयाय नमः विचक्राय शिरसे स्वाहा, सुचक्राय शिखायै वषट्, सूर्य-चक्राय कवचाय हुं, ज्वालाचक्राय नेत्राभ्यां वौषट्, सुदर्शन-चक्राय अस्त्राय फट्,

चक्रं शङ्खं च चापं परशुमसिमिषुं शूलपाशाङ्कुशास्त्रम्,
बिभ्राणं वज्रखेटे हलमुसलगदाकुन्तमत्युग्रदंष्ट्रम् ।
ज्वालाकेशं त्रिणेत्रं ज्वलदनलवहं हारकेयूरभूषम्,

ध्यायेत् षट्कोणसंस्थं सकलरिपुजनप्राणसंहारिचक्रम् ॥

ओं रं कालवैश्वानरात्मने नमः, अग्निप्राकारमुद्रायै नमः, ओं सशराय सशार्ङ्गाय सनाराचाय हुं फट् सुदर्शनाय स्वाहा, आकाशे चक्रमुद्रायै नमः, इति चक्रमुद्रां न्यस्य, श्रीभगवतः वासुदेवस्य आज्ञया भगवत्भक्तियोगप्रतिबन्धकसमस्ताविद्या-कर्मकृतपापक्षयार्थं भगवत्समाराधनार्थं भूतशुद्धिं करिष्ये इति संकल्प्य, प्रणवस्य ऋषिः ब्रह्मा, देवी गायत्री छन्दः परमात्मा देवता, अं बीजं, उं शक्तिः, मं कीलकं, शुक्लो वर्णः, प्राणायामार्थे विनियोगः नारायणाय हृदयाय नमः। विभवे शिरसे स्वाहा, शान्ताय शिखायै वषट्, प्रणवार्थप्रकाशकाय कवचाय हुं, श्रीभूमिसहिताय नेत्राभ्यां वौषट्, आनन्दाय अस्त्राय फट्।

नारायणं विभुं शान्तं प्रणवार्थप्रकाशकम्।
श्रीभूमिसहितानन्दं हृत्पद्मे सततं भजे ॥

ततः रेचकपूरककुम्भकरेचकैः प्राणायामत्रयकरणम्। ओं योगमुद्रायै नमः, वायुबीजस्य किष्किन्धऋषिः, जगती छन्दः, महाभूतरूपी वायुः देवता, अस्मन्मनोवाक्कायकर्मकृतसमस्त-पापशोषणार्थे विनियोगः, "आवातवाहिभेषजं विवातवाहियद्रपः, त्वं हि विश्वभेषजो देवानां दूत ईयसे," "द्वाविमौ वातौवात आसिन्धोरापरावतः, दक्षं मे अन्य आवातु परान्यो वातु यद्रपः", नाभिकन्दे— "ओं यं वायवे नमः" वेद्याकारेण धूम्र-वर्णेन महावातात्मना अस्मच्छरीरस्थितं समस्तपापं शोषयामि। अग्निबीजस्य काश्यपऋषिः, त्रिष्टुप्छन्दः, वैश्वा-

नराग्निः देवता, अस्मन्मनोवाक्कायकर्मसमस्तपापदहनार्थे विनियोगः। "अग्नीरक्षाँ सिसेधति शुक्रशोचिरमर्त्यः, शुचिः पावकं रएड्यः", "अग्ने रक्षाणो अँहसः प्रतिष्मदेवरीषतः तपिष्ठैरजरोदह", "अग्ने हँसिन्यत्रिणं दीद्यन्मर्त्येष्वा, "स्वेक्षये शुचिव्रत", हृदये—'ओं वैश्वानराग्नये नमः' त्रिकोणेन रक्तवर्णेन वैश्वानराग्निना अस्मच्छरीरस्थितं समस्तपापं दहामि। पृथ्वीबीजस्य ब्रह्माऋषिः, गायत्री छन्दः, वराहरूपी विष्णुः देवता, उत्थितस्य अग्नेः कण्ठे स्तंभनार्थे विनियोगः। "स्योनापृथिवी भवानृक्षरानिवेशिनी, यच्छानः शर्मसप्रथाः" ओं लं पृथ्वीबीजेन स्पर्शनेन सहोत्थितं अग्निं कण्ठे स्तंभयामि, अमृतबीजस्य ब्रह्मा ऋषिः, गायत्री छन्दः, सोमो देवता, तादृशास्मत्शरीरस्य अमृतप्लावनार्थे विनियोगः, "यदतोवाततो गृहे अमृतस्य निधिर्हितः ततोनोधेहिजीवसे", "ततो नोधेहि-भेषजं ततोनोमहआवह, वात आवातु भेषजं" "शंभूर्मयोभूर्नोहृदे प्रण आयूँषि तारिषत्" ※'ओं वं वरुणाय स्वाहा' वृत्तात् स्फटिकवर्णात् वरुणबीजात् उत्थिताभिः अमृतधाराभिः अस्मत्शरीरं आपादतलमस्तकं प्लावयामि।

"तत्त्वसंहारमुद्रायै नमः" इति तत्त्वसंहारमुद्रां प्रदर्श्य, पृथ्वीबीजस्य ब्रह्मा ऋषिः, गायत्री छन्दः, श्रीवराहरूपी नारायणो देवता, ओं लं लं लं चतुरश्रां पीतवर्णां घ्राणोपस्थे-न्द्रिययुतां शब्दस्पर्शरूपरसगन्धगुणयुतां पृथिवीं बाह्यान् पूरकेण

---

※ वरुणायनमः—पा०

मम शरीरे पादादिजानुपर्यन्तं संपूरयामि, तन्मध्ये 'ओं ह्रां भं लं ह्रीं सकलसं पृथिव्यधिपतये विष्णवे सद्योजाताय नारायणाय निवृत्तिकलात्मने हुं फट्' इति पृथिवीमन्त्रं ध्यायन्, कुम्भेन पार्थिवं सर्वं तन्मन्त्रे संहरामि, 'ओं तन्नमः पराय सितवर्णाय गन्धतन्मात्रात्मने नमः', पृथिवीमन्त्रं गन्धतन्मात्रायां संहरामि, तां गन्धतन्मात्रां रेचकेन तोयाख्ये महाधारे निक्षिपामि। ओं श्लां श्लां श्लां पार्थिवांशपादादिजानुपर्यन्तात् चतुरश्रात् पार्थिवमण्डलात् आप्यांशे सापेक्षं लीनो भव।

अपां बीजस्य सिन्धुद्वीपऋषिः, गायत्री छन्दः, वरुणो देवता, ओं वं वं वं रसनापाण्यिन्द्रियद्युताः अर्धचन्द्राकृतीः श्वेताः शब्दस्पर्शरूपरसगुणयुताः अपः बाह्यात् पूरकेण जान्वादिकटिपर्यन्तं मम शरीरे संपूरयामि, तन्मध्ये 'ओं ह्रीं पं रीं सकलरीं अंभोधिपतये ब्रह्मणे वामदेवाय धनुर्धराय प्रतिष्ठाकलात्मने हुं फट्' इति मन्त्रं ध्यायन्, अं मयं सर्वं कुम्भकेन शनैश्शनैः तन्मन्त्रे संहरामि। 'ओं घं नमः पराय पाण्डरवर्णाय रसतन्मात्रात्मने नमः', अपां मन्त्रं रसतन्मात्रायां संहरामि, तां रसतन्मात्रां गन्धतन्मात्रया सह रेचकेन अग्नौ संयोजयामि, ह्वां ह्वां ह्वां आप्यांश जान्वादिकटिपर्यन्तात् आप्यात् अष्टदलपद्मात् तैजसांशे सापेक्षं लीनो भव।

अग्निबीजस्य काश्यप ऋषिः त्रिष्टुप्छन्दः, अग्निः देवता। ओं रं रं रं त्र्यश्रं पाटलवर्णं दृष्टिचरणेन्द्रिययुतं शब्दस्पर्शरूपगुणं अग्निं बाह्यात् पूरकेण गुह्यादि आनाभि मम शरीरे

संपूरयामि। तन्मध्ये 'ओं ह्रूं ह्रीं एयं ह्रीं सकलरुं अग्न्यधिपतये रुद्राय घोराय प्रद्युम्नाय विद्याकलात्मने हुं फट्' इति मन्त्रं ध्यायन्, तैजसं सर्वं कुम्भकेन शनैश्शनैः तन्मन्त्रे संहरामि। 'ओं दं नमः पराय ज्योतिर्वर्णाय रूपतन्मात्रात्मने नमः' ज्योतिर्मन्त्रं रूपतन्मात्रायां संहरामि, तां रूपतन्मात्रां गन्धरसशक्तिभ्यां सह रेचकेन वायौ संयोजयामि। ह्रां ह्रां ह्रां तैजसांश गुह्यादि आनाभि त्रिकोणाग्निमण्डलात् वायव्यांशे सापेक्षं लीनो भव।

वायुबीजस्य किष्किन्ध ऋषिः, जगती छन्दः, वायुर्देवता, ओं यं यं यं धूम्रं वृत्तं त्वक्केन्द्रिययुतं शब्दस्पर्शगुणं वायुं बाह्यात् पूरकेण नाभ्यादि नासिकान्तं मम शरीरे संपूरयामि। तन्मध्ये 'ओं ह्रैं एं सकलरैं वाग्ग्वधिपतये ईश्वराय तत्पुरुषाय संकर्षणाय शान्तिकलात्मने हुं फट्' इति मन्त्रं ध्यायन् वायव्यं सर्वं कुम्भकेन शनैश्शनैः तन्मन्त्रे संहरामि।' 'ओं धं नमः पराय लोहितवर्णाय स्पर्शतन्मात्रात्मने नमः' वायुमन्त्रं स्पर्शतन्मात्रायां संहरामि, तां स्पर्शतन्मात्रां गन्धरसरूपतन्मात्राभिः सह रेचकेन आकाशे संयोजयामि, स्यां स्यां स्यां वायव्यांश नाभ्यादि नासिकान्तात् षड्बिन्दुलाञ्छितात् वायुमण्डलात् नाभसांशे सापेक्षं लीनो भव।

आकाशबीजस्य ब्रह्मा ऋषिः, गायत्री छन्दः, परमहंसः देवता, ओं हं हं हं नीलोत्पलदलनिभं वाक्श्रोत्रेन्द्रिययुतं शब्दगुणं आकाशं बाह्यात् पूरकेण नासादिमूर्धान्तं मम शरीरे

संपूरयामि। तन्मध्ये 'ओं ह्रौं ह्रीं ह्रीं सकलरौं आकाशाधिपतये सदाशिवाय ईशानाय वासुदेवाय शान्त्यादिकलात्मने हुं फट्' इति मन्त्रं ध्यायन्, नाभसं सर्वं कुम्भकेन शनैश्शनैः तन्मन्त्रे संहरामि। 'ओं नं नमः पराय शुक्लवर्णाय शब्दतन्मात्रात्मने नमः', आकाशमन्त्रं शब्दतन्मात्रायां संहरामि, तां शब्दतन्मात्रां गन्धरसरूपस्पर्शतन्मात्राभिः सह रेचकेन स्वान्ते संहरामि। दमां दमां दमां नाभसांश नासिकादि मूर्धान्तात् वृत्तद्वयात्मकात् नाभसान् मण्डलात् स्वान्ते सापेक्षं लीनो भव।

'ओं पं नमः पराय सितासितवर्णाय मनस्तत्त्वात्मने नमः', स्वान्तं अहङ्कृतौ संहरामि, 'ओं फं नमः पराय पाटलवर्णाय अहङ्कारात्मने नमः', अहङ्कारं बुद्धौ संहरामि, 'ओं बं नमः पराय स्फटिकाभासाय बुद्धितत्त्वात्मने नमः'; बुद्धिं प्रकृतौ संहरामि, 'ओं भं नमः पराय सितवर्णाय प्रकृत्यात्मने नमः', प्रकृतिं जीवे संहरामि, 'ओं मं नमः पराय स्फटिकाभासाय जीवतत्त्वात्मने नमः', सुसूक्ष्मं भास्कराभं वासनाविवशं जीवं नाभिचक्रस्थितं पद्मसूत्रसुसूक्ष्मया सुषुम्नया नाड्या कुम्भकेन वायुना अन्तर्देहे उपरि आरोप्य, ब्रह्मरन्ध्रं भित्वा देहात् बहिः निर्गत्य, सूर्यमण्डलं प्रविश्य उपरि सहस्रदलयुते श्वेतपद्मे संस्थितं परब्रह्मणि संयोजयामि। ओं मं हंसः हे जीव नाभिचक्रात् सुषुम्ना वर्त्मना परमात्मनि सापेक्षं लीनो भव।

पादादि मूर्धान्तं 'ओं ह्रीं योनिमुद्रायै नमः', इति मुद्रां प्रदर्श्य, ओं लां नमः पराय सर्वात्मने श्रीमते नारायणाय नमः, ओं वां नमः पराय निवृत्त्यात्मने अनिरुद्धाय नमः, ओं रां नमः पराय विश्वात्मने प्रद्युम्नाय नमः, ओं यां नमः पराय पुरुषात्मने संकर्षणाय नमः, ओं षौं नमः पराय परमेष्ठ्यात्मने वासुदेवाय नमः,

ब्रह्महत्याशिरस्स्कन्धं स्वर्णस्तेयभुजद्वयम् ।
सुरापानहृदायुक्तं गुरुतल्पकटीद्वयम् ॥
तत्संयोगिपदद्वन्द्वं रक्तश्मश्रु विलोचनम् ।
उपपातकरोमाणं अङ्गप्रत्यङ्गसंयुतम् ॥
खड्गचर्मधरं कृष्णं कुक्षौ पापं विचिन्तयेत् ।

इति रीत्या ध्यात्वा, पादाग्रे रक्तवर्णाय त्रिकोणाय अग्नये नमः, तज्ज्वालया देहं आपादतलमस्तकं दहामि, ओं लं लं लं उत्थितमग्निं स्तंभयामि, आकाशे ओं वं वं वं अमृतबीजं ध्यायामि, तदुत्थामृतधारयातद्भस्म लावयामि । ओं पृथ्वीबीजस्य मेरुपृष्ठ ऋषिः, अतलं छन्दः श्रीकूर्मः देवता, लावितभस्मपिण्डीकृतार्थे विनियोगः, 'ओं भूमिर्भूम्न[1]' इत्यारभ्य 'पितरं च प्रयन्त्सुवः' इत्यन्तं जप्त्वा, ओं लं लं लं श्यामवर्णाय

---

१ ओं भूमिर्भूम्ना द्यौर्वरिणान्तरिक्षं महित्वा ।
उपस्थे ते देव्यदितेऽग्निमन्नादमन्नाद्यायादधे ॥१॥
आयङ्गौः पृश्निरक्रमीदसदन्मातरं पुरः ।
पितरञ्च प्रयन्त्सुवः ॥२॥

पृथिव्यात्मने नमः, तद्भस्मकूटं पिण्डीकरोमि, 'आकाशशरीरं ब्रह्म, सत्यात्म प्राणारामं मन आनन्दं, शान्तिसमृद्धममृतं, इति प्राचीनयोग्योपास्व, ओं श्रीं ह्रीं शक्तिबीजेन सर्ववर्णेन सर्वात्मना शरीरं सकरचरणाद्यवयवं करोमि। ओं सृष्टिमुद्रायै नमः, आकाशे, 'ओं वां नमः पराय निवृत्यात्मने नमः, इति अमृत-बीजं ध्यायामि, तस्मात् 'ओं पीयूषनिधये नमः', इति ध्यायन तस्मिन् 'ओं श्वेतायाव्यक्तपङ्कजाय नमः इति पद्मं ध्यात्वा, तस्मिन् परब्रह्मणः सकाशात् जीवं उत्पन्नं स्मरामि। ओं मं नमः पराय स्फटिकाभासाय जीवतत्त्वात्मने नमः, 'आं ह्रीं क्रों यरलवशपसह ओं मं हंसः हे जीव परब्रह्मणः सकाशात् एतस्मिन् श्वेते पङ्कजे सापेक्षमागच्छ 'ओं मं जीवमुद्रायै नमः'। तर्जन्यङ्गुष्ठपर्वनिवेशः जीवमुद्रा। तां प्रदर्श्य, ओं भं नमः पराय सितवर्णाय प्रकृत्यात्मने नमः', जीवात् ओं श्रीं ह्रीं नमः, त्रिगुणात्मिकां प्रकृतिं सृजामि, ओं बं नमः पराय स्फटिका-भासाय बुद्धितत्त्वात्मने नमः प्रकृतेः वाण्यात्मिकां बुद्धिं सृजामि, ओं फं नमः पराय पाटलवर्णाय अहङ्कारात्मने नमः, बुद्धेः अहंकृतिं सृजामि, ओं पं नमः पराय सितासितवर्णाय मनस्तत्त्वात्मने नमः, अहङ्कारात्मनस्तत्वं सृजामि।

ओं नमः पराय शुक्लवर्णाय शब्दतन्मात्रात्मने नमः, मनसः शब्दतन्मात्रां सृजामि, शब्दतन्मात्रायाः ओं ह्रौं ह्रीं ह्रीं सकलरौं आकाशाधिपतये सदाशिवाय ईशानाय वासुदेवाय शान्त्यादिकलात्मने हुं फट् भिन्नाञ्जनवर्णं वाक्श्रोत्रेन्द्रिययुतं

शब्दगुणं ओं कं नमः पराय आकाशतत्त्वं सृजामि, आकाशात् ओं धं नमः पराय लोहितवर्णाय स्पर्शतन्मात्रात्मने नमः, स्पर्शतन्मात्रां सृजामि, स्पर्शतन्मात्रायाः ओं ह्रैं एं सकलरैं वाग्वधिपतये ईश्वराय तत्पुरुषाय संकर्षणाय शान्तिकलात्मने हुं फट् धूम्रं वृत्तां त्वक्करेन्द्रिययुतं शब्दस्पर्शगुणं ओं खं नमः पराय वायुतत्त्वं सृजामि।

वायोः ओं दं नमः पराय ज्योतिर्वर्णाय रूपतन्मात्रात्मने नमः, रूपतन्मात्रां सृजामि रूपतन्मात्रायाः ओं ह्रूं एयं ह्रीं सकलरूं अग्न्यधिपतये रुद्राय घोराय प्रद्युम्नाय विद्याकलात्मने हुं फट् शब्दस्पर्शरूपगुणसहितं दृष्टिचरणेन्द्रिययुतं पाटलवर्णं त्रिकोणं ओं गं नमः पराय अग्नितत्त्वं सृजामि, अग्नेः ओं थं नमः पराय पाण्डरवर्णाय रसतन्मात्रात्मने नमः रसतन्मात्रां सृजामि, रसतन्मात्रायाः ओं ह्रीं षं ह्रीं सकलरीं अंभोधिपतये ब्रह्मणे वामदेवाय धनुर्धराय प्रतिष्ठाकलात्मने हुं फट् रसना-पाय्विन्द्रियसहितं शब्दस्पर्शरूपरसगुणयुतं श्वेतवर्णं अर्धचन्द्राकृति, ओं घं नमः पराय अप्तत्त्वं सृजामि, अप्तत्त्वात् ओं तं नमः पराय सितवर्णाय गन्धतन्मात्रात्मने नमः गन्धतन्मात्रां सृजामि, गन्धतन्मात्रायाः ओं ह्रां भं लं ह्रीं सकलरां पृथिव्य-धिपतये विष्णवे सद्योजाताय नारायणाय निवृत्तिकलात्मने हुं फट् पीताभं चतुरश्रं घ्राणोपस्थेन्द्रिययुतं शब्दस्पर्शरूपरस-गन्धगुणं ओं ङं नमः पराय पृथिवीतत्त्वं सृजामि। एवं पाञ्चभौतिकसप्तधातुमयं षण्णवत्यङ्गुलायतं दिव्यं शरीरं

ओं षौं नमः पराय परमेष्ठ्यात्मने वासुदेवाय नमः, यां नमः पराय पुरुषात्मने संकर्षणाय नमः, रां नमः पराय विश्वात्मने प्रद्युम्नाय नमः, वां नमः पराय निवृत्त्यात्मने अनिरुद्धाय नमः, लां नमः पराय सर्वात्मने श्रीमते नारायणाय नमः, ओं भं नमः पराय स्फटिकाभासाय जीवतत्त्वात्मने नमः, ओं ह्रीं क्रों यरलवशषसह ओं मं हंसः, हे जीव श्वेतपङ्कजात् मम हृत्कमले सांपत्तं आगच्छ।

उपरि ओं प्रबुद्धाय पङ्कजाय नमः, तदुत्पन्नामृतपूरितैः हेमकुम्भैः दिव्यनारीकरधृतैः आत्मानं अभिषिञ्चामि। हरेः आराधनयोग्यं शुद्धं अनघं मम शरीरं अर्चयामि। ओं अस्मद्गुरुभ्यः नमः।

मातृकान्यासमन्त्रस्य ब्रह्मा ऋषिः, देवी गायत्री छन्दः, मातृकासरस्वती देवता। हलो बीजानि, स्वराः शक्तयः, सकलमन्त्रोपबृंहणार्थे विनियोगः, ओं अं कं खं गं घं ङं आं अङ्गुष्ठाभ्यां नमः, ओं इं चं छं जं झं ञं ईं तर्जनीभ्यां स्वाहा, ओं उं टं ठं डं ढं णं ऊं मध्यमाभ्यां वषट्, ओं एं तं थं दं धं नं ऐं अनामिकाभ्यां हुं, ओं पं फं बं भं मं औं कनिष्ठिकाभ्यां वौषट्, ओं अं यं रं लं वं शं षं सं हं लं क्षं अः नखमुखेभ्यः फट्। एवं षडङ्गन्यासश्च।

पञ्चाशद्वर्णभेदैः विहितवदनदोष्पादहृत्कुक्षिवक्षो—,
देहां भास्वत्कपर्दाकलितशशिकलां इन्दुकुन्दावदातां।
अक्षस्रक्कुम्भचिह्नां लिखितवरकरां त्रीक्षणांपद्मसंस्थां,

इच्छाकल्पां अतुच्छस्तनजघनभरां भारतीं तां नमामि ॥

अथ केशवादिमातृकान्यासः—

ओं अं केशवकीर्त्तिभ्यां नमः ललाटे। ओं आं नारायणकान्तिभ्यां नमः मुखे। ओं इं माधवतुष्टिभ्यां नमः, ओं ईं गोविन्दपुष्टिभ्यां नमः नेत्रयोः। ओं उं विष्णुधृतिभ्यां नमः, ओं ऊं मधुसूदनशान्तिभ्यां नमः श्रोत्रयोः। ओं ऋं त्रिविक्रमक्रियाभ्यां नमः, ओं ॠं वामनदयाभ्यां नमः नासापुटयोः। ओं ऌं श्रीधरमेधाभ्यां नमः, ओं ॡं हृषीकेशहर्षाभ्यां नमः गण्डयोः। ओं एं पद्मनाभश्रद्धाभ्यां नमः, ओं ऐं दामोदरलज्जाभ्यां नमः दन्तपङ्क्त्योः। ओं ओं वासुदेवलक्ष्मीभ्यां नमः, ओं औं संकर्षणसरस्वतीभ्यां नमः ओष्ठयोः। ओं अं प्रद्युम्नप्रीतिभ्यां नमः रसनाग्रे। ओं अः अनिरुद्धरतिभ्यां नमः मुखमण्डले।

ओं कं शङ्खिछायाभ्यां नमः, ओं खं चक्रिजायाभ्यां नमः, ओं गं गदिदुर्गाभ्यां नमः, ओं घं खड्गिसत्याभ्यां नमः, ओं ङं शार्ङ्गिप्रभाभ्यां नमः, दक्षिणबाहौ पञ्चविभागशः। ओं चं हलि— वाणीभ्यां नमः, ओं छं मुसलिविलासिनीभ्यां नमः, ओं जं शूलिलयाभ्यां नमः, ओं झं पाशिविनताभ्यां नमः, ओं ञं अङ्कुशिविश्वाभ्यां नमः, वामबाहौ पञ्चविभागशः। ओं टं मुकुन्दविमदाभ्यां नमः, ओं ठं नन्दसुनन्दाभ्यां नमः, ओं डं नन्दिस्मृतिभ्यां नमः, ओं ढं नरजर्भिभ्यां नमः, ओं णं नरकजित्समृद्धिभ्यां नमः तथा दक्षिणपादे। ओं तं हरिशुद्धिभ्यां

नमः, ओं थं कृष्णबुद्धिभ्यां नमः, ओं दं सत्यभुक्तिभ्यां नमः, ओं धं सत्त्वमतिभ्यां नमः, ओं नं शौरिक्षमाभ्यां नमः तथा वामपादे।

ओं पं शूररमाभ्यां नमः, ओं फं जनार्दनोमाभ्यां नमः कुक्षिपार्श्वयोः। ओं बं भूधरक्लेदिनीभ्यां नमः पृष्ठे। ओं भं वैकुण्ठवसुधाभ्यां नमः पायौ। ओं मं विश्वमूर्तिसंक्लिन्नाभ्यां नमः मेहने। ओं यं पुरुषोत्तमप्रथाभ्यां नमः नाभौ। ओं रं बलापराभ्यां नमः कुक्षौ। ओं लं बलानुजधारणाभ्यां नमः हृदये। ओं वं बालसूक्ष्माभ्यां नमः कण्ठे। ओं शं विषघ्नसन्धिभ्यां नमः, ओं षं वृषप्रज्ञाभ्यां नमः स्तनयोः। ओं सं हंसप्रभाभ्यां नमः; ओं हं वराहनिशाभ्यां नमः भुजयोः। ओं क्षं ओं श्रीं ह्रीं क्लीं क्ष्रौं ओं नमो नारायणाय क्षं नृसिंहमोहाभ्यां नमः मुखे।

अस्य श्रीमदष्टाक्षरमहामन्त्रस्य अन्तर्यामी नारायण ऋषिः, दैवी गायत्री छन्दः, परमात्मा नारायणः देवता। अं बीजं, ह्रीं शक्तिः, परमव्योमक्षेत्रं, बुद्धिः तत्त्वं, शुक्लादिः वर्णः, उदात्तादिः स्वरः, भगवत्समाराधनार्थे विनियोगः। * ओं ओं

---

* अङ्गुलीनां च सर्वासां पर्वसु आद्यन्तवर्तिषु।
इष्यते प्रणवन्यासः मध्यमेषु तु पर्वसु॥

मन्त्राक्षराणि विन्यसेत्—मूले—

ततश्च मध्यमपर्वणि सप्रणवं मन्त्राक्षरं आद्यन्तपर्वणोः प्रणवद्वयं च विन्यसेत् इति आयातम्—इति केचित्।

ओं, ओं नं ओं, ओं मों ओं, ओं नां ओं, दक्षिणतर्जनीम् आरभ्य, कनिष्ठिकान्तं पर्वसु, ओं यं ओं, ओं णां ओं, ओं यं ओं, ओं रां ओं, वामतर्जनीम् आरभ्य तथा कनिष्ठान्तं। ओं रां ओं नाभौ, ओं यं ओं मेहने, ओं णां ओं जङ्घयोः, ओं यं ओं पादयोः ओं ओं ओं मूर्ध्नि, ओं नं ओं नेत्रयोः, ओं मों ओं मुखे, ओं नां ओं हृदये,, ओं क्रुद्धोल्काय स्वाहा ज्ञानाय हृदयाय नमः, ओं महोल्काय स्वाहा ऐश्वर्याय शिरसे स्वाहा, ओं वीरोल्काय स्वाहा शक्त्यै शिखायै वषट्, ओं द्युल्काय स्वाहा बलाय कवचाय हुं, ओं सहस्रोल्काय स्वाहा वीर्यायास्त्राय फट्, ओं तेजोल्काय स्वाहा तेजसे नेत्राभ्यां वौषट्।

चतुर्भुजमुदाराङ्गं चक्राद्यायुधसेवितम्।
कालमेघप्रतीकाशं पद्मपत्रायतेक्षणम्॥
पीतांबरधरं सौम्यं प्रसन्नेन्दुनिभाननम्।
चारुहासं सुताम्रोष्ठं रत्नोज्ज्वलितकुण्डलम्॥
सुभ्रूललाटमकुटं घनकुञ्चितमूर्धजम्।
ललाटतिलकं सौम्यं दीपवत् श्वेतमृत्स्नया॥
स्फुरत्कटककेयूरहारकौस्तुभभूषितम्।
स्फुरद्भास्वरवर्णाभं शोभितं वनमालया॥
प्रद्योतनसहस्राभभूषणैरपि मण्डितम्।
दिव्यचन्दनलिप्ताङ्गं दिव्यमालाविभूषितम्॥
श्रीभूमिभ्यां सुखासीनं स्वर्णसिंहासने शुभे।

ध्यात्वैवं देवदेवेशं मन्त्रजापपरो भवेत् ॥
शुक्लं हिरण्मयं कृष्णं रक्तं कुङ्कुमसन्निभम् ।
पद्मकिञ्जल्कसदृशं सर्ववर्णकमष्टकम् ॥

इति ध्यायन् मन्त्रं जपेत् ।

ओं अस्य श्रीद्वादशाक्षरमन्त्रस्य, वासुदेवः ऋषिः, देवी गायत्री छन्दः, परमात्मा वासुदेवो देवता । अं बीजं, क्रों शक्तिः, श्वेतो वर्णः, बुद्धिः तत्त्वं, परमव्योमक्षेत्रम् , भगवत्-समाराधनार्थे विनियोगः । ओं ओं ओं, ओं नं ओं, ओं मों ओं, ओं भं ओं, ओं गं ओं, ओं वं ओं, दक्षतलमारभ्य कनिष्ठान्तम् । ओं यं ओं, ओं वां ओं, ओं दें ओं, ओं ओं सुं ओं, ओं वां ओं, ओं तें ओं, वामतलमारभ्य कनिष्ठान्तम् । ओं सुं ओं, ओं दें ओं, ओं वां ओं, ओं यं ओं, नाभ्यादि पादान्तम् । ओं ओं ओं, शिरसः पूर्वभागे, ओं नं ओं दक्षिणे, ओं मों ओं पश्चिमे, ओं भं ओं उत्तरे । ओं गं ओं मध्ये, ओं वं ओं नेत्रयोः, ओं तें ओं मुखे, ओं वां ओं हृदये, ओं ओं ओं ज्ञानाय हृदयाय नमः, ओं नं ओं ऐश्वर्याय शिरसे स्वाहा, ओं मों ओं शक्त्यै शिखायै वषट् , ओं भं ओं बलाय कवचाय हुं, ओं गं ओं तेजसे नेत्राभ्यां वौषट् । ओं वं ओं वीर्याय अस्त्राय फट् । ओं तें ओं उदराय नमः, ओं वां ओं पृष्ठाय नमः, ओं सुं ओं बाहुभ्यां नमः, ओं दें ओं ऊरुभ्यां नमः, ओं वां ओं जानुभ्यां नमः, ओं यं ओं पादाभ्यां नमः, ओं किरीटाय

नमः शिरसि, ओं श्रीवत्साय नमः, ओं कौस्तुभाय नमः, उरसि। ओं वनमालायै नमः कण्ठे। ओं चक्राय नमः, ओं पद्माय नमः दक्षिणकरयोः, ओं शङ्खाय नमः, ओं गदायै नमः, वामकरयोः, ओं गरुडाय नमः पादाग्रे।*

चतुर्बाहुमुदाराङ्गं सर्वलक्षणलक्षितम्।
शुद्धस्फटिकवर्णाभं अयुतेन्दुसमप्रभम्॥
चारुहासं सुताम्रोष्ठं कर्णान्तायतलोचनम्।
निर्धूतपद्मरागाभदन्तच्छविसुशोभितम्॥
महोरस्कं महाबाहुं प्रसन्नेन्दुनिभाननम्।
सुभ्रूललाटं सुमुखं घनकुञ्चितमूर्धजम्॥
तटिच्छतसहस्राभपीतनिर्मलवाससम्।
पाणिपादतलाम्भोजं पुण्डरीकायतेक्षणम्॥
श्रीवत्साङ्कं किरीटादिसर्वाभरणभूषितम्।
पद्मचक्रगदाशङ्खधारिणं कौस्तुभोरसम्॥
दिव्यगन्धविलिप्ताङ्गं दिव्यमालाविभूषितम्।
शेषाहिभोगे विपुले सुखासीनं चतुर्मुख॥
श्रीभूमिसहितं देवं ललाटे श्वेतमृत्स्नया।
कृतोर्ध्वपुण्ड्रतिलकैः मण्डितं चण्डभानुभिः॥
नियुतैरयुतैश्चन्द्रैः विद्युत्कालाग्निकोटिभिः।
समवेतैरिवैकत्र तेजःपुञ्जैः विसर्पिभिः॥
भ्राजमानं दुरालोकं देहमण्डलनिर्गतैः।

---

* किरीटादीनां मुद्राः— पाठान्तरे।

भासयन्तं जगत्सर्वं ध्यायेत् प्रक्षीणकल्मषः ॥
सितं कृष्णं च धूम्राभं श्यामं तारानिभं तथा ।
स्फटिकाभं च शङ्खाभं रक्तं शुक्लं च लोहितं ॥
तमोरूपं पीतवर्णं ध्यायेन्मन्त्रं[1] द्विषाक्षरम् ।

इति ध्यायेत् ।

षडंगस्य—रूपाणि षण्णां कुमुदं बन्धूकं असितोत्पलं । अब्जकेसरमंभोजं अतसीसूनसंपदम् । इति । आत्मानं दिव्यायुधवस्त्रमाल्यानुलेपनकौस्तुभवनमालाश्रीवत्सदिव्यलक्षणधरं साक्षात् परमेश्वरं ध्यायामि इति ध्यात्वा, न्यस्तबीजानि गन्धादिभिः अभ्यर्च्य तदनु हृदयकमलमध्यं अध्यासीनं भगवन्तं मानसोपचारैः होमान्तैः वक्ष्यमाणविधिना अर्चयेत् ।

## मानसयागविधिः—

अथ मानसयागविधिः उच्यते—

अत्र तु हृत्कर्णिकाधारे वा यत्र कुत्र वा भगवन्मूर्तौ वा मूलमन्त्रशरीरस्थपरिवारयजनेन कृतोलययागः । कर्णिकामध्ये मन्त्रराजस्य केसरेषु लक्ष्म्यादीनां च यजनं भोगाभिधः । कमलादीनां पृथक्त्वेन यजनं अधिकाराभिधः । एवं लयभोगाधिकारान् ज्ञात्वा नादावसानगगनस्थं हृदयकमलमध्ये भोगाभिधयागविधिना आवाह्य, वक्ष्यमाणेन वर्त्मना यजेत् । पद्मासनादि कमलासनं बद्ध्वा, नाभौ ब्रह्माञ्जलिं कृत्वा, . ऋजु-

१ द्वादशकाक्षरं मनुम् इति पा० ।

कायः नासाग्रन्यस्तनयनः दन्तैः दन्तान् असंस्पृश्य, तालुनि जिह्वां विन्यस्य, किञ्चित् कुञ्चितशिराः श्लथबाहुद्वयः आचार्यः बाह्येन्द्रियाणि मनसि उपरतानि कृत्वा, मनः बुद्धौ, बुद्धिं ज्ञानगोचरां विधाय ज्ञानभावनया पारमार्थिकं कर्म कुर्यात्। नाभिमेढ्रान्तरे चतुर्धा भाजितेषु पदेषु क्रमात् आधारादीन् स्मरेत्। ओं अस्मद्गुरुभ्यः नमः। नाभिमेढ्रान्तरे ओं ह्रीं ङं घं गं खं कं पृथिव्यप्तेजोवाय्वाकाशपञ्चभूतमयाय स्वसत्त्वविभवान्तस्थाय आधाराय नमः। शान्तं उज्झितचेष्टं सितं अन्तर्मुखस्मितं आधेयोल्लिङ्गिताकारं आधारं स्मरामि। उपरि ओं ज्ञौं * घ्यूं ज्वालौघविभवांतस्थाय नं धं दं थं तं शब्दस्पर्शरूपरसगन्धगुणयुताय कालाग्निरूपाय कूर्माय नमः। कूर्ममुद्रान्वितं कूर्मवक्त्रं निष्टप्तकाञ्चननिभं शङ्खचक्रधरं स्वस्तिकेन स्थितं कूर्मं ध्यायामि। उपरि ओं अं स्वभोगविभवान्तस्थाय ञं झं जं छं चं वाक्पाणिपादपायूपस्थयुताय अनन्ताय नमः। अनन्तशशिसंकाशं सहस्रफणालङ्कृतं सहस्रभुजं स्वपाणिसंपुटेन भुवं दधानं सितारविन्दशङ्खाक्षसूत्राभयकरं अनन्तं ध्यायामि। उपरि ओं भूं काञ्चनविभवान्तस्थायै णं ढं डं ठं टं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणयुतायै भूम्यै नमः। निश्शेषरत्नहोमाङ्गां प्रावृट्छ्रियमिवोज्ज्वलां पद्मासनोपविष्टां पद्माञ्जलिधरां भुवं ध्यायामि।

नाभौ ओं वं अमृतासार विभवान्तस्थाय पं मनस्तत्त्व-

* घ्रूं—पा—

युताय क्षीरार्णवाय नमः। फुल्लकुन्दावदातं सितस्निग्धजटाधरं शङ्खं ध्मायमानं मुक्तादामविराजितं विस्तीर्णसर्वावयवं विक्षिप्तोरुद्वयं स्थितं विक्षिप्तजानुपादं क्षीरार्णवं ध्यायामि। उपरि ओं फं अहङ्कारतत्त्वयुताय स्वबीजकोशकिसलयदलविभवान्तस्थाय अनन्तदलपद्माय नमः। सुपक्वाम्रफलश्यामपाणिपादतलोज्ज्वलं रक्ताक्षं विप्रकीर्णकेशं स्मिताननं पद्मासनस्थितं अलिमालावृतं सुदीर्घचरणं पद्ममुद्रान्वितं पद्मं ध्यायामि। तस्मिन् आग्नेये ओं वं बुद्धितत्त्वयुताय विवेकविभवान्तस्थाय धर्माय नमः। तुहिनवर्णं मृगेन्द्रवदनं धर्ममूर्तिं ध्यायामि। नैर्ऋते ओं वं बुद्धितत्त्वयुताय विवेकविभवान्तस्थाय ज्ञानमूर्तये नमः। अच्छोपलवर्णं मृगेन्द्रवदनं ज्ञानमूर्तिं ध्यायामि। वायव्ये ओं बं बुद्धितत्त्वयुताय विवेकविभवान्तस्थाय वैराग्याय नमः। मुक्ताफलरुचिं मृगेन्द्रवदनं वैराग्यमूर्तिं ध्यायामि। ऐशाने ओं वं बुद्धितत्त्वयुताय विवेकविभवान्तस्थाय ऐश्वर्याय नमः। शशिवर्णं मृगेन्द्रवदनं ऐश्वर्यमूर्तिं ध्यायामि। पूर्वे ओं बं बुद्धितत्त्वयुताय अविद्याविभवान्तस्थाय अधर्माय नमः। पद्मरागवर्णं मृगेन्द्रवदनं अधर्ममूर्तिं ध्यायामि। दक्षिणे ओं बं बुद्धितत्त्वयुताय अविद्याविभवान्तस्थाय अज्ञानाय नमः। प्रवालवर्णं मृगेन्द्रवदनं अज्ञानमूर्तिं ध्यायामि। पश्चिमे ओं वं बुद्धितत्त्वयुताय अविद्याविभवान्तस्थाय अवैराग्याय नमः। अग्निवर्णं मृगेन्द्रवदनं अवैराग्यमूर्तिं ध्यायामि। उत्तरे ओं बं बुद्धितत्त्वयुताय अविद्याविभवान्तस्थाय अनैश्वर्याय नमः।

दाडिमफलवर्णं मृगेन्द्रवदनं अनैश्वर्यमूर्त्तिं ध्यायामि।

प्रागीशानदिङ्मध्ये—ओं वं बुद्धितत्त्वयुताय वाक्प्रपञ्च-विभवान्तस्थाय ऋग्वेदाय नमः। हेमवर्णं वाजिवक्त्रं ऋग्वेदं ध्यायामि। प्रागाग्नेयदिगंतरे ओं बं बुद्धितत्त्वयुताय वाक्प्रपञ्च-विभवान्तस्थाय यजुर्वेदाय नमः। चंपकवर्णं वाजिवक्त्रं यजुर्वेदं ध्यायामि। निर्ऋतिवरुणमध्ये—ओं वं बुद्धितत्त्वयुताय वाक्प्रपञ्चविभवान्तस्थाय सामवेदाय नमः। खद्योतवर्णं वाजि-वक्त्रं सामवेदं ध्यायामि। वायव्यवरुणान्तरे—ओं बं बुद्धि-तत्त्वयुताय वाक्प्रपञ्चविभवान्तस्थाय अथर्वणवेदाय नमः। हरितालवर्णं वाजिवक्त्रं अथर्वणवेदं ध्यायामि। ईशानसोम-दिङ्मध्ये—ओं वं बुद्धितत्त्वयुताय त्रुट्याद्याकल्पविभवान्त-स्थाय कृतयुगाय नमः। वृषेन्द्रवदनं सुपक्वाम्रफलवर्णं कृतयुगं ध्यायामि। अन्तकाग्न्यन्तरे—ओं वं बुद्धितत्त्वयुताय त्रुट्याद्या-कल्पविभवान्तस्थाय त्रेतायुगाय नमः। अतसीपुष्पनिभं वृषेन्द्र-वदनं त्रेतायुगं ध्यायामि। याम्यराक्षसमध्ये—ओं वं बुद्धितत्त्व-युताय त्रुट्याद्याकल्पविभवान्तस्थाय द्वापरयुगाय नमः। वृषेन्द्र-वदनं नीलाब्जवर्णं द्वापरयुगं ध्यायामि। सोमसमीरणान्तरे—ओं बं बुद्धितत्त्वयुताय त्रुट्याद्याकल्पान्तस्थाय कलियुगाय नमः। वृषेन्द्रवदनं शुक्लवर्णं कलियुगं ध्यायामि। एतान् संपूर्णनरलक्षणान् सद्वस्त्रसत्पुष्पसदलङ्करणान्वितान् शङ्खपद्म-वराभयकरान् आधेयचक्रविन्यस्तमस्तकान् स्वात्मसिद्धये परस्मिन् मन्त्रकारणे समर्पितान्तःकरणान् षोडशवार्षिकान्

ध्यायामि ।

उपरि—ओं रं वं हं धामत्रयाश्रयाय ह्रीं अगन्मायाविभवान्तस्थाय कालचक्राय नमः । युगान्तार्काग्निसंकाशं स्वगोमण्डलमध्यगं स्वमुद्राव्यग्रपाणिं वल्गन्तं हेतिराजं ध्यायामि । उपरि ओं भं प्रकृतितत्त्वयुताय गौणीवृत्तिविभवान्तस्थाय अव्यक्तपद्माय नमः । हिमहेमाग्निभास्वरं वायव्योद्भूतनालं शान्तं अष्टभुजं स्वस्तिकेन स्थितं सौम्यं ऊर्ध्वमुखं विकाराधारसुस्थितं हृत्पुण्डरीकरूपं अव्यक्तपद्मं ध्यायामि । उपरि— ओं मं चिदादित्यस्वरूपाय विमलादिकलाजालविभवान्तस्थाय जीवात्मने नमः । स्फटिकोपलकान्तिं चिद्घनं ध्रुवं अव्यक्तं सर्वशक्तिनिधिं अमूर्तं चित्प्रभाकारं जीवं ध्यायामि ।

देहमध्ये—ओं सुषुम्नानाडिकायै नमः । नाभिकन्दात् ब्रह्मरन्ध्रेण सूर्यपथात् परं गतां पायुद्वारेण पातालं भित्त्वा स्वगोचरं यातां सूत्रे मणिगणवत् स्वप्रतिष्ठितसर्वसंकल्पविषयां त्रिदीप्तिभास्वरां सुषुम्नाभिधां मध्यनाडिकां ध्यायामि । जीवात्मनः उपरि—ओं ह्रीं श्रीं ऐं क्लीं सौः नानामन्त्रगणरूपिण्यै शब्दब्रह्मशक्त्यै नमः । सर्वमन्त्रजननीं आकारादि हान्तं धारासन्तानरूपं वर्णजं नादं नदन्तीं परां वाक्भ्रमरीं शब्दब्रह्मेतिविश्रुतां शान्तात्मनां शक्तिं ध्यायामि । उपरिनादावसानगगने— ओं नमो भगवते वासुदेवाय नमः' शान्तं सनातनं संवित्स्वरूपं नित्यतृप्तनिरंजनं सर्वाकारं अमूर्तं भक्तानुग्रहकाम्यया मूर्ततां गतं अनुपमं सहस्ररविवह्नीन्दुलक्षकोटिसमप्रभं देवं ध्यायामि ।

इति ध्यात्वा, तदनु ओं अस्मद्गुरुभ्यः नमः इति ध्यायेत्।

हृत्कमलदलेषु पूर्वादिषु—ओं विमलायै नमः, ओं उत्कर्षिण्यै नमः, ओं ज्ञानायै नमः, ओं क्रियायै नमः, ओं योगिन्यै नमः, ओं प्रह्व्यै नमः, ओं सत्यायै नमः, ओं ईशान्यै नमः, कर्णिकायां—ओं अनुग्रहायै नमः, ओं सहस्रशीर्षा पुरुषः, सहस्राक्षस्सहस्रपात्, स भूमिं विश्वतो वृत्वा, अत्यतिष्ठद्दशाङ्गुलं, ओं नमो भगवते वासुदेवाय, अव्यक्तपङ्कजकर्णिकामध्ये आगच्छागच्छ, पुरुष एवेदँसर्वँ, यद्भूतं यच्च भव्यं, उतामृतत्वस्येशानः, यदन्नेनातिरोहति, आसनं समर्पयामि,

"स्वागतं देवदेवेश सन्निधिं भजमेऽच्युत।
गृहाण मानसीं पूजां यथार्थपरिभाविताम्॥"

ओं आवाहनमुद्रायै नमः, ओं स्थापनमुद्रायै नमः, ओं सन्निधानमुद्रायै नमः, ओं सन्निरोधमुद्रायै नमः, ओं सांख्यमुद्रायै नमः, ओं प्रार्थनामुद्रायै नमः।

शिरसः उपरि—ओं पद्मान्तराकाशस्थितायै गंगायै नमः। सुषुम्नावर्त्मना भगवन्मूर्ध्निच्युतां अमृतमयीं गंगां ध्यायामि इति ध्यात्वा, तज्जलेन अमृतमयेन अर्घ्यादिदानं स्मरेत्। एतावानस्य महिमा, अतो ज्यायाँश्च पूरुषः, पादोस्य विश्वा भूतानि, त्रिपादस्यामृतं दिवि, पाद्यं समर्पयामि। त्रिपादूर्ध्व उदैत् पुरुषः, पादोस्येहाभवात्पुनः, ततो विष्वङ्व्यक्रामत्, साशनानशने अभि, अर्घ्यँ समर्पयामि, तस्माद्विराडजायत, विराजो अधि पूरुषः, सजातो अत्यरिच्यत, पश्चात् भूमिमधो-

पुरः, आचमनं समर्पयामि। ओं नमो भगवते वासुदेवाय, मन्त्रासनं कल्पयामि। द्वादशाक्षरमन्त्रस्य वासुदेवः ऋषिः, गायत्री छन्दः, वासुदेवोदेवता, ॐ बीजं, क्रों शक्तिः, भगवत्-समाराधनार्थे विनियोगः, ओं ओं ज्ञानाय हृदयाय नमः, ओं नं ऐश्वर्याय शिरसे स्वाहा, ओं मों शक्त्यै शिखायै वषट्, ओं भं बलाय कवचाय हुं, ओं गं तेजसे नेत्राभ्यां वौषट्, ओं वं वीर्याय अस्त्राय फट्, ओं तें उदराय नमः, ओं वां पृष्ठाय नमः, ओं सुं बाहुभ्यां नमः, ओं दें ऊरुभ्यां नमः, ओं वां जानुभ्यां नमः, ओं यं पादाभ्यां नमः, ओं क्रुद्धोल्काय हृदयाय नमः, ओं महोल्काय शिरसे स्वाहा, ओं वीरोल्काय शिखायै वषट्, ओं द्व्युल्काय कवचाय हुं, ओं सहस्रोल्काय अस्त्राय फट्, ओं तेजोल्काय नेत्राभ्यां वौषट्।

ओं किरीटमुद्रायै नमः, श्रीवत्समुद्रायै नमः, कौस्तुभ-मुद्रायै नमः, ओं वनमालामुद्रायै नमः, ओं चक्रमुद्रायै नमः, ओं शङ्खमुद्रायै नमः, ओं धनुर्मुद्रायै नमः, ओं पद्ममुद्रायै नमः, ओं गदामुद्रायै नमः, ओं गरुडमुद्रायै नमः, ओं विष्वक्सेन-मुद्रायै नमः। देवस्य दक्षिणे केसरेषु—ओं श्रीं श्रियै नमः, आगच्छागच्छ, शब्दब्रह्मस्वरूपिणीं सर्वशक्तिमयीं श्रियं ध्यायामि। ओं श्रीं श्रियै नमः, पद्मासनं समर्पयामि, अर्घ्यं समर्पयामि, अमृतमयं पाद्यं समर्पयामि, अर्घ्यं समर्पयामि, आचमनं समर्पयामि, मन्त्रासनं कल्पयामि। श्रीदेवीमन्त्रस्य, भृङ्गुणऋषिः, गायत्री छन्दः, श्रीः देवता, श्रीं बीजं ह्रीं शक्तिः,

क्लीं कीलकं, समाराधनार्थे विनियोगः। श्रां हृदयाय नमः, श्रीं शिरसे स्वाहा, श्रूं शिखायै वषट्, श्रैं कवचाय हुं, श्रौं नेत्राभ्यां वौषट्, श्रः अस्त्राय फट्। कमलमुद्रायै नमः। देवस्य वामे—ओं भूं भूम्यै नमः, आगच्छागच्छ, सर्वशक्तिमयीं भूमिं ध्यायामि। अमृतमयं पाद्यं समर्पयामि, अर्घ्यं समर्पयामि, आचमनं समर्पयामि, मन्त्रासनं कल्पयामि, भूदेवीमन्त्रस्य कश्यपऋषिः, गायत्री छन्दः, भूः देवता। ह्रीं बीजं, श्रीं शक्तिः, क्लीं कीलकं, समाराधनार्थे विनियोगः। ह्रां हृदयाय नमः, ह्रीं शिरसे स्वाहा, ह्रूं शिखायै वषट्, ह्रैं कवचाय हुं, ह्रौं नेत्राभ्यां वौषट्, ह्रः अस्त्राय फट्, कमलमुद्रायै नमः।

परिवारकल्पनं करिष्ये। देवस्य परितः दलेषु पूर्वादिषु—ओं श्रीवत्साय नमः, ओं वनमालायै नमः, ओं योगात्मिकायै नमः ओं वैष्णव्यै नमः, ओं विमलायै नमः ओं सृष्ट्यै नमः, ओं उत्कर्षिण्यै नमः, ओं प्रज्ञायै नमः, ओं सत्यायै नमः, ओं ईशान्यै नमः, ओं अनुकम्पायै नमः, ओं पितामह्यै नमः तत्परितः ओं व्याप्त्यै नमः, ओं कान्त्यै नमः, ओं तृप्त्यै नमः, ओं श्रद्धायै नमः, ओं विद्यायै नमः, ओं जयायै नमः, ओं क्षमायै नमः, ओं शान्त्यै नमः, तत्परितः—द्वितीयावरणे—ओं शङ्खिने नमः, ओं चक्रिणे नमः, ओं गदिने नमः, ओं शार्ङ्गिणे नमः, ओं पाशिने नमः, ओं अङ्कुशिने नमः, ओं मुसलिने नमः, ओं वज्रिणे नमः, तत्परितः, ओं इन्द्राय नमः, ओं अग्नये नमः, ओं यमाय नमः, ओं निर्ऋतये नमः, ओं

वरुणाय नमः ओं वायवे नमः, ओं सोमाय नमः, ओं ईशानाय नमः, पुरतः गरुडाय नमः, ईशानदिशि विष्वक्सेनाय नमः। एतान् भगवदभिमुखान् प्राञ्जलीन् ध्यायामि।

ओं नमो भगवते वासुदेवाय श्रीभूमिसहिताय स्नानासनं कल्पयामि। यत्पुरुषेण हविषा, देवा यज्ञमतन्वत, वसन्तो अस्यासीदाज्यं, ग्रीष्म इध्मश्शरद्धविः, ओं नमो भगवते श्रीभूमिसहिताय स्नानं समर्पयामि।

ओं अलङ्कारासनं कल्पयामि। सप्तास्यासन् परिधयः, त्रिस्सप्तसमिधः कृताः, देवा यद्यज्ञं तन्वानाः, अबध्नन् पुरुषं पशुं ओं वस्त्रं समर्पयामि, तं यज्ञं बर्हिषि प्रौक्षन्, पुरुषं जातमग्रतः, तेन देवा अयजन्त, साध्या ऋषयश्च ये, उपवीतं समर्पयामि, तस्माद्यज्ञात् सर्वहुतः, संभृतं पृषदाज्यं, पशूँस्ताँ-श्चक्रे वायव्यान्, आरण्यान् ग्राम्याश्च ये, ओं गन्धं समर्पयामि, तस्माद्यज्ञात्सर्वहुतः, ऋचस्सामानि जज्ञिरे, छन्दाँसि जज्ञिरे तस्मात्, यजुस्तस्मादजायत, ओं पुष्पं समर्पयामि, तस्मादश्वा अजायन्त, ये केचोभयादतः, गावो ह जज्ञिरे तस्मात्, तस्माज्जाता अजावयः, ओं धूपं समर्पयामि, यत्पुरुषं व्यदधुः, कतिधा व्यकल्पयन्, मुखं किमस्य कौ बाहू, कावूरू पादावुच्येते, ओं दीपं समर्पयामि।

ओं नमो भगवते वासुदेवाय श्रीभूमिसहिताय भोज्यासनं कल्पयामि। ब्राह्मणोस्य 'मुखमासीत्। बाहू राजन्यः कृतः, ऊरू तदस्य यद्वैश्यः, पद्भ्याँ शूद्रो अजायत, ओं अमृतमयं

दिव्यं नैवेद्यं समर्पयामि। चन्द्रमा मनसो जातः, चक्षोस्सूर्यो अजायत, ओं ताम्बूलं समर्पयामि; ओं नमो भगवते वासुदेवाय आवाहनादि ताम्बूलान्तैः संकल्पजनितैः पवित्रैः अक्षयैः, शुभैः सांस्पर्शिकौपचारिकाभ्यवहारिकरूपैः सप्तलोकसमुद्भवैः यथोदितैः उत्कृष्टतरलक्षणैः अमृतमयैः भोगैः श्रीभूमिभ्यां सह सन्तुष्टो भव। ओं नमो भगवते वासुदेवाय श्रीभूमिसहिताय सर्वालङ्कारयुतानि धेनुयानानि समर्पयामि। नाभ्या आसीदन्तरिक्षं, शीर्ष्णोद्यौस्समवर्तत, पद्भ्यां भूमिर्दिशश्श्रोत्रात्, तथा लोकाँ अकल्पयत्, ओं श्रीभूमिसहितवासुदेवचरणौ शरणं प्रपद्ये, आनन्दाश्रुपरिप्लुतः सन् आत्मानं सपुत्रपौत्रदारं भगवते समर्पयामि।

ओं क्षं सर्वाभीष्टप्रदायिन्यै धेनुमुद्रायै नमः, सुरभिमुद्रां प्रदर्श्य, तज्जातैः अमृतमयैः वस्तुभिः सन्तुष्टो भव। अञ्जलिं सुवर्णपुष्पसंपूर्णं ध्यायामि इति अञ्जलिं कृत्वा तस्मिन् रेचकपूरककुम्भकैः प्रत्येकं मूलमन्त्रं उच्चार्य, तस्मिन्— ओं नमो नारायणाय आगच्छ आगच्छ इति वह्न्यर्केन्दुनिभं ध्यात्वा, सन्निरुध्य, तं देवमूर्ध्नि क्षिप्त्वा, भूयोऽपि अर्घ्यं पुष्पाञ्जलिं च वितीर्य, मूलमुद्रां प्रदर्श्य, लक्ष्म्यादीनां तत्तन्मुद्राश्च दर्शयित्वा, यथाशक्ति मूलमनुं जप्त्वा स्तोत्रैः स्तुत्वा, श्रीभूमिसहितं वासुदेवं प्रसादयेत्।

## मानसाग्निकार्यविधिः

अथ मानसाग्निकार्यविधिः उच्यते। नाभिचक्रमध्ये— ओं

गं (भं) ह्रीं त्रिगुणावृताय त्रिकोणाय ओं रं प्रधानाग्नियुताय वह्निगृहाय नमः। नाभिचक्रे त्रिकोणकुण्डस्थं अग्निं ध्यायामि। ध्यानारणिमन्थनेन चिदग्निं उत्पादयामि। वासुदेवात्मकं शुद्धं संस्कृतं दीप्तं ऊर्ध्वशिखं च अग्निं ध्यायामि। इति ध्यात्वा 'अदितेनुमन्यस्व' इति आरभ्य 'देव सवितः प्रसुव' इत्यन्तेन अमृतैः परिषेचनं ध्यात्वा, तज्ज्वालाग्रे—ओं नमो भगवते वासुदेवाय आगच्छ आगच्छ इति मन्त्रविग्रहं आवाह्य, सन्निरुध्य, पूर्ववत् अमृतेन अर्घ्यादि स्मृत्वा, वितीर्य, अमृतं आज्यं उपरिष्टात् पश्चात् सुवर्णपात्रे सुषुम्नावर्त्मना परिच्युतं ध्यात्वा, तेन आज्येन नाभिचक्रत्रिकोणकुण्डस्थचिदग्निज्वालाग्रावस्थितं मन्त्रविग्रहं मूलमन्त्रेण स्वाहान्तेन संतर्प्य, 'अदिते न्वमं स्थाः, इत्यारभ्य देवसवितः प्रासावीः'[1] इत्यन्तेन परिषेचनं ध्यात्वा, अमृतमयं निवेदनं ध्यात्वा, पुनश्च हृदयकमलमध्ये नाभिचक्रे चिदग्निज्वालाग्रावस्थितं पूर्ववत् आवाह्य, तत्र स्थितं ध्यात्वा, ततः दक्षिणतः करकं तोयपुष्पाक्षतैः पूर्णं भावयित्वा, तन्मध्ये ओं नमो भगवते वासुदेवाय इति संस्मृत्य, तन्मध्ये ओं श्रीं श्रियै नमः यागोत्थां फलसंपत्तिं लक्ष्मीरूपां ध्यायामि, इति ध्यात्वा, तन्मध्ये। पुनरपि पूर्ववत् मूलमन्त्रं स्मृत्वा, सशीर्षे जानुनी भूमौ कृत्वा विष्णोः निवेद्य, तं प्रसादाभिमुखं परितुष्टं विचिन्त्य, "नमस्ते

---

१ अदितेऽनुमन्यस्व, अनुमतेऽनुमन्यस्व, सारस्वतेऽनुमन्यस्व, देव सवितः प्रासावीः। (आप० गृ० सू० खं० २ सू० ३)

सर्वलोकेश भगवन्मन्त्रविग्रह। आराधयामि त्वां बिम्बे तावन्निवस मे हृदि ॥" इति उक्त्वा प्रणम्य, ततः बाह्यपूजां वक्ष्यमाणेन विधिना कुर्यात्।

### अथ मन्त्रशुद्धिः

ओं यं वायवे नमः, मन्त्रबीजानि शोषयामि। ओं रं अग्नये नमः, मन्त्रबीजानि दहामि। ओं लं पृथ्व्यै नमः, मन्त्रबीजदाहकाग्निज्वालां स्तंभयामि। ओं वं सोमाय नमः, अमृतधारया प्लावयामि। ओं हं मन्त्रबीजानि शोधयामि इति शोधनं कृत्वा, शुद्धमन्त्रं अक्षमालया अष्टोत्तरशतवारान् अष्टाविंशतिः अष्टौ वा बीजाद्यन्तसंपुटितं जपेत्। इयं मन्त्रशुद्धिः।

इति श्रीवराहगुरुविरचितायां क्रियाकैरवचन्द्रिकायां भूतशुद्धिमन्त्रन्यासान्तर्यागमानसाग्निकार्यमन्त्रशुद्धिविधिः नाम सप्तविंशः परिच्छेदः



## अष्टाविंशः परिच्छेदः

अथ सर्वाणि पूजाद्रव्याणि प्रक्षाल्य, दक्षिणे च गलन्तिकां प्रक्षाल्य अंबुपूरितां कृत्वा वामे च पार्श्वे विन्यस्य, ओं वर्धन्याद्यर्चनपात्राधिदैवताय वरुणाय नमः इति अभ्यर्च्य विष्णुगायत्र्या अर्घ्यादिपात्राणि प्रक्षाल्य, देवस्य आत्मनः वा अग्रे त्रिपादुकां विन्यस्य, तस्यां ओं रं त्रिपादुकाधिदैवताय त्रेताग्नये नमः इति आवाह्य अभ्यर्च्य, तदुपरि पात्राधारस्था-

लिकां विन्यस्य, तस्यां ओं लं पृथ्व्यै नमः इति आवाह्य अभ्यर्च्य, तदुपरि मध्यदक्षिणवामेषु पाद्यार्घ्याचमनपात्राणि निधाय, गालितोदकैः आपूर्य प्रणवेन स्पृष्ट्वा, कुशाग्रअक्षतफल-पुष्पचन्दनतिलसिद्धार्थयवान् अर्घ्यपात्रे, तिलदूर्वाविष्णुपर्णी-श्यामाकपद्माक्षतानि पाद्यपात्रे, एलालवंगकर्पूरजातीतक्कोल-चन्दनानि आचमनीयपात्रे च निक्षिप्य, दक्षिणहस्ते ओं रं द्वादशाराय चक्राय नमः, तन्मध्ये ओं हं सूर्याय नमः इति ध्यात्वा, दीप्तैः तद्रश्मिभिः द्रव्याणि दग्धानि ध्यात्वा, वामहस्ते षोडशदलयुताय विकस्वराय श्वेतपद्माय नमः, तन्मध्ये ओं वं षोडशकलायुताय अमृतमयाय चन्द्रमसे नमः, इति ध्यात्वा, तस्मादुत्थैः अमृतांबुभिः द्रव्याणि सिक्तानि ध्यात्वा, तानि यागयोग्यानि विचिन्त्य, हस्तयोः उभयोः ओं नमो नारायणायेति देवं ध्यात्वा, ताभ्यां द्रव्याणि संस्पृश्य, विष्णुगायत्र्या[1] अभिमन्त्र्य, ओं सुरभिमुद्रायै नमः इति सुरभिमुद्रां प्रदर्श्य तदुत्थेन अमृतेन च पूरितानि पात्राणि विचिन्त्य, ओं अर्घ्यं कल्पयामि, पाद्यं कल्पयामि, आचमनं कल्पयामि इति उच्चरन् तानि स्पृष्ट्वा, अर्घ्यपात्रात् किञ्चित् जलं अन्यस्मिन् पात्रे गृहीत्वा, आधारस्थालिकोपरि विन्यस्य, अर्घ्यपात्रे विष्णवे नमः, पाद्यपात्रे मधुसूदनाय नमः, आचमनीय-पात्रे ओं त्रिविक्रमाय नमः, इति आवाह्य, अभ्यर्च्य, पात्रान्तर-

---

१ ओं विश्वरूपाय विद्महे विश्वानीताय धीमहि तन्नो विष्णुः प्रचोदयात्। (जयाख्य संहितायां)

स्थं अर्घ्यजलं वामहस्ते संस्थाप्य, मूलमन्त्रेण सप्तवारं अभिमन्त्र्य, तज्जलेन सहस्रार हुं फट् , इति द्रव्याणि आत्मानं च कूर्चेन प्रोक्ष्य, देवस्य योगपीठं कल्पयेत् ।

ओं पृं द्रूं आधारशक्त्यै नमः, ओं ह्रूं कालपावककूर्माय नमः, ओं ह्रां सहस्रफणाधृतभूतमण्डलाय अनन्ताय नमः, ओं भूं भूम्यै नमः, तदुपरि आग्नेयादिकोणेषु ओं धर्माय नमः, ओं ज्ञानाय नमः, ओं वैराग्याय नमः, ओं ऐश्वर्याय नमः, एतान् योगासनांघ्रिरूपान् पुरुषाकृतीन् चतुर्भुजान् सिंहवक्त्रान् सितान् ध्यायामि । पूर्वाद्याशासु ओं अधर्माय नमः, ओं अज्ञानाय नमः, ओं अवैराग्याय नमः, ओं अनैश्वर्याय नमः, मध्ये सदाशिवाय नमः, एतान् अरुणवर्णान् पूर्वसदृशान् ध्यायामि । योगासनांघ्र्यन्तरान्तरा प्रागादिषु ओं ऋग्वेदाय नमः, ओं यजुर्वेदाय नमः, ओं सामवेदाय नमः, ओं अथर्वण-वेदाय नमः, ओं कृतयुगाय नमः, ओं त्रेतायुगाय नमः, ओं द्वापरयुगाय नमः, ओं कलियुगाय नमः, एतान् ईषारूपेण ध्यायामि । ओं वैकारिकाहंकाराय नमः, ओं तैजसाहङ्काराय नमः, ओं भौतिकाहंकाराय नमः, एतान् पाशरूपेण युतान् ध्यायामि, ओं सत्त्वगुणाय नमः, ओं रजोगुणाय नमः, ओं तमोगुणाय नमः, एतान् गुणरूपेण ध्यायामि, ओं ङं घं गं खं कं तूलिकारूपेभ्यः पृथिव्यप्तेजोवाय्वाकाशेभ्यः नमः, ओं मं आस्तरणरूपाय जीवात्मने नमः, तदुपरि ओं रं अग्निमण्डलाय नमः, ओं वं सोममण्डलाय नमः, ओं हं सूर्यमण्डलाय नमः

उपरि ओं श्वेताय द्वादशदलाय कर्णिकाकेसरयुताय गुणत्रयात्मकाय अव्यक्तपद्माय नमः, ओं भद्रासनाय नमः, इति आसनं तत्स्थदेवताश्च आवाह्य, गन्धादिचतुर्भिः अभ्यर्च्य, पीठदक्षिणपार्श्वे ओं ब्रह्मणे नमः, ओं विष्णवे नमः, ओं ईश्वराय नमः इति अभ्यर्च्य, उत्तरे ओं सनत्कुमाराय नमः, ओं सनकाय नमः, ओं सनन्दाय नमः इति अभ्यर्च्य, पश्चिमे ओं दुर्गायै नमः, ओं विघ्नेशाय नमः, ओं नारदाय नमः, इति अभ्यर्च्य, ओं अस्मद्गुरुभ्यः नमः, अस्मत्परमगुरुभ्यः नमः, अस्मत्सर्वगुरुभ्यः नमः, इति ध्यात्वा, तदनु आवाहनं कुर्यात्।

एकबेरविधाने तु न आवाहयेत्, सुरसिद्धावतारिते हरौ च। तत्र तु हृदयस्थं बिम्बे ध्यात्वा, आभिमुख्यकरणमेव आवाहनम्। न परिवारकल्पनं च। अन्यत्र तु आवाहनपात्रं अद्भिः प्रक्षाल्य, मूलमन्त्रेण अद्भिः आपूर्य, हस्ताभ्यां आललाटं उद्धृत्य, तस्मिन् ओं नमो नारायणाय आगच्छ आगच्छ इति वा बिम्बानुगुणं वारचतुष्टयं जप्त्वा, हृदयस्थं आवाह्य, कूर्चेन तत्तोयं प्रतिमामूर्ध्नि सेचयित्वा, पात्रस्थं प्रतिमायां विचिन्त्य, आवाहनमुद्रां प्रदर्श्य, किञ्चित् उत्थाय प्रणम्य, स्वागतं उक्त्वा, तन्मुद्रां प्रदर्श्य, प्रतिमामुद्रां च प्रदर्श्य, सन्निधिं कल्पयित्वा, मुद्रां प्रदर्श्य, तत्र हरेः स्थितिं यागावसानिकीं प्रार्थ्य, प्रार्थनामुद्रां च प्रदर्श्य, ओं नमो भगवते वासुदेवाय सन्मुखो भव इति सान्मुख्यमुद्रां प्रदर्शयेत्। एकबेरविषये मूलात् कर्मार्चायां यथाविधि उक्तवर्त्मना आवाह्य,

आवाहन[1] स्थापन[2] सन्निधान[3] सन्निरोध[4] सान्मुख्य[5] प्रार्थना-मुद्राः[6] प्रदर्श्य, मूलेन सपर्यासनं दत्त्वा, हस्तन्यासं विना देवदेहे मन्त्रन्यासं कृत्वा, किरीटश्रीवत्सकौस्तुभवनमालाचक्र-शङ्खगदापद्मगरुडमुद्राश्च प्रदर्श्य,

विभो, सकललोकेश विष्णो जिष्णो प्रभो हरे।
त्वां भक्त्या पूजयाम्यद्य भोगैः अर्घ्यादिभिः क्रमात् ॥
दिव्येनार्घ्योपचारेण यथाशक्ति यथावसु।
अर्चयिष्यामि समये भगवन्तं जनार्दनम् ॥'

इति देवेशं विज्ञाप्य, विष्णुगायत्र्या मूर्ध्नि अर्घ्यं, पादयोः 'त्रीणि पदा'[7] इति पाद्यं, 'आपः पुनन्तु'[8] इति मुखे च

---

१. आवाहनमुद्रा—किञ्चिदाकुञ्चयेद्धस्तं दक्षिणं हृदयोपगम्।
अङ्गुष्ठोविरलस्पष्टा मुद्राह्यावाहने स्मृता ॥

२. स्थापनमुद्रा— अधोमुखी कृता सैव स्थापनीति निगद्यते ॥

३ सन्निधिमुद्रा— आश्लिष्ठ मुष्टियुगला प्रोन्नताङ्गुष्ठयुग्मका ॥
सान्निधाने समुद्दिष्टा मुद्रेयं तन्त्रवेदिभिः ॥

४ सन्निरोधमुद्रा— अङ्गुष्ठगर्भिणी सैव सन्निरोधे समीरिता ॥

५ संमुखीमुद्रा— हृदि अञ्जली बंधनं संमुखीमुद्रा ॥

६ प्रार्थनामुद्रा— हृदि अञ्जली बंधनं प्रार्थनीमुद्रा ॥

७ त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः।
अतो धर्माणि धारयन् ॥

८ आपः पुनन्तु पृथिवीं पृथ्वी पूतापुनातु मां पुनन्तु ब्रह्मणस्पति-र्ब्रह्मपूता पुनातु मां यदुच्छिष्टमभोज्यं च यद्वा दुश्चरितं मम। सर्वं पुनन्तु मामापोऽसतां च प्रतिग्रहं स्वाहा ॥

आचमनं समर्प्य

'मधुक्षीरं च दध्याज्यं मधुपर्कमिति स्मृतं ।
एकांगं वा समस्तं वा मधुपर्कं न लोपयेत् ॥'

इति मधुपर्कं निवेद्य,

'हस्ताभ्यां शिरसा पद्भ्यां मनसा च धिया तथा ।
अहंकारेण चात्मानं निपात्य धरणीतले ॥'

इति अष्टाङ्गप्रणिपातेन देवं प्रणिपत्य,

'दासोऽहं ते जगन्नाथ सपुत्रादिपरिग्रहः ।
प्रेष्यं प्रशाधि कर्तव्ये मां नियुङ्क्ष्व हि तेजसा ॥'

इति देवेशं विज्ञाप्य, परिवारकल्पनं कुर्यात् ।

योगासनाब्जपत्रेषु पूर्वादिषु द्वादशसु— ओं श्रीवत्साय नमः, ओं वनमालायै नमः, ओं योगमायायै नमः, ओं वैष्णव्यै नमः, ओं विमलायै नमः, ओं सृष्ट्यै नमः, ओं उत्कर्षिण्यै नमः, ओं प्रज्ञायै नमः, ओं सत्यायै नमः, ओं ऐशान्यै नमः, ओं अनुकंपायै नमः, ओं पितामह्यै नमः, पीठस्य परितः प्रथमावरणे प्रागादिषु ओं व्याप्त्यै नमः, ओं कान्त्यै नमः, ओं तृप्त्यै नमः, ओं क्षमायै नमः, ओं शान्त्यै नमः, इति चामरधारिणीश्च, द्वितीयावरणे ओं शङ्खिने नमः, ओं चक्रिणे नमः, ओं गदिने नमः, ओं पद्मिने नमः, ओं मुसलिने नमः, ओं खड्गिने नमः, ओं शार्ङ्गिणे नमः, ओं वनमालिने नमः, इति च तृतीयावरणे इन्द्रादिलोकपालान् च, तत्रावरणात् बहिः, भगवत्प्रमुखं वैनतेयं च, तृतीयावरणात्

ब्रह्मिः, ऐशान्यां विष्वक्सेनं च अभ्यर्च्य, ओं स्नानासनं कल्पयामि, ओं पादुकाधिदैवताय अनन्ताय नमः, इति पादुकां अभ्यर्च्य, 'इदं विष्णुः'[1], 'त्रीणि पदा'[2] इति देवस्य पादुकारोहणं स्मृत्वा, 'उत्तिष्ठ ब्रह्मणस्पते'[3], इति देवं उत्थितं स्मृत्वा; 'भद्रं कर्णेभिः'[4] इति स्नानासनवेदिकायां निविष्टं विचिन्त्य, तदनु 'अस्य देवदेवस्य नित्यस्नपनकर्म करिष्ये' इति संकल्प्य, तदङ्गशुद्धिपुण्याहवाचनं कृत्वा, कुम्भान् स्नपनद्रव्याणि च प्रोक्ष्य, सुवर्णादिलोहजान् मृण्मयान् वा सूत्रवेष्टितान् नव कुम्भान् प्रक्षाल्य अर्धमण्डपमध्ये धान्यराशौ प्रागुदक्सूत्राणि षट् निपात्य, तेषु ब्रह्मादि ईशानान्तं कलशान् संस्थाप्य, तान् घृतपाद्यदध्यर्घ्यक्षीराचमनमधुपञ्चगव्यफलैः आपूर्य, तान् सवस्त्ररत्नकूर्चाश्वत्थपल्लवापिधानान् कृत्वा, तेषु घृतादिफलावसानेषु क्रमेण परवासुदेवविष्णुश्रीधरमधुसूदन-हृषीकेशत्रिविक्रमपद्मनाभवामनदामोदरान् आवाह्य, अभ्यर्च्य, दर्भैः आच्छाद्य, चक्रमुद्रां प्रदर्श्य, स्नानासनस्थदेवं पूर्ववत्

---

१ इदं विष्णुर्विचक्रमे त्रेधा नि दधे पदम्। समूढमस्य पांसुरे॥

२ त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः।
अतो धर्माणि धारयन्॥

३ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे। उप प्रयन्तु मरुतः
सुदानव इन्द्र प्राशूर्भवा सचा॥

४ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः॥

अर्घ्यादिभिः अभ्यर्च्य, 'तद्विष्णोः'[१] इति दन्तधावनं, विष्णुगायत्र्या[२] जिह्वानिर्लेपनं, वामदेव्येन अभ्यङ्गं, 'विष्णोर्नुकं'[३] इति आमलकं च दत्त्वा, 'न ते विष्णो'[४] इति, 'आपोहिष्ठे'[५]ति च अभिषिच्य, 'अतो देवा अवन्तु'[६] इति कनककंकतेन केशसंशोधनं कृत्वा, तदनु स्थापितकलशैः पाद्यादिघृतान्तैः स्नापयेत्। विष्णुगायत्र्या[७] पाद्येन, 'दधिक्राविष्ण'[८] इति दध्ना, पयोव्रतसाम्ना पयसा, 'न ते विष्णो'

---

१ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः।
दिवीव चक्षुराततम्॥

२ ओं नारायणाय विद्महे वासुदेवाय धीमहि।
तन्नो विष्णुः प्रचोदयात्॥

३ विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि।
यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः॥

४ न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप।
उदस्तम्ना नाकमृष्वं बृहन्तं दाधर्थ प्राचीं ककुभं पृथिव्याः॥

५ आपोहिष्ठा मयोभुवस्तानऽऊर्जे दधातन। महेरणाय चक्षसे॥

६ अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे।
पृथिव्याः सप्त धामभिः॥

७ ओं नारायणाय विद्महे वासुदेवाय धीमहि।
तन्नो विष्णुः प्रचोदयात्।

८ दधिक्राविष्णो अकारिषं जिष्णोरश्वस्य वाजिनः।
सुरभि नो मुखा करत् प्रण आयूंषि तारिषत्॥

इत्याचमनेन, 'मधुवाता'[1] इति मधुना, 'विष्णोः कर्माणि'[2] इति पञ्चगव्येन, 'याः फलिनीः'[3] इति फलवारिणा, 'घृतस्नात' इति साम्ना घृतेन च प्रतिद्रव्यघटं उपस्नानलोतवस्त्रोत्तरीयार्घ्य-पाद्याचमनगन्धपुष्पधूपदीपदानपुरस्सरं अभिषिच्य, 'हिरण्य-वर्णां हरिणीं'[4] इति हरिद्रया आलिप्य, 'हिरण्यवर्णाः शुचयः पावका'[5] इति चतसृभिः ऋग्भिः संक्षाल्य, गन्ध-

---

१ मधुवाता ऋतायते मधुक्षरन्ति सिन्धवः ।
माध्वीर्नः सन्त्वोषधीः ॥

२ विष्णोः कर्माणि पश्यत यतो व्रतानिपस्पशे ।
इन्द्रस्ययुज्यः सखा ॥

३ याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः ॥
वृहस्पति पसूतास्तानो मुञ्चन्त्व ठँ हसः ॥

४ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥

५ हिरण्यवर्णाः शुचयः पावका यासु जातः सविता यास्वग्निः ।
या अग्निं गर्भं दधिरे सुवर्णास्तान आपः शं स्योना भवन्तु ॥
यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यन् जनानाम् ।
या अग्निं गर्भं दधिरे सुवर्णास्तान आपः शं स्योना भवन्तु ॥
यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति ।
या अग्निं गर्भं दधिरे सुवर्णास्तान आपः शं स्योना भवन्तु ॥
शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोप स्पृशत त्वचं मे ।
घृतश्च्युतः शुचयो याः पावकास्तान आपः शं स्योना भवन्तु ॥

द्वारेति[१] गन्धांवुना च, विष्णुगायत्र्या कुंकुमेन आलिप्य पावमानीभिः[२] ब्रह्मजज्ञानं[३] कयानश्चित्र[४] इत्यभिषिच्य, गायत्र्या परिषिच्य, ओं सहस्रधाराधिदैवताय पूर्णचन्द्राय नमः, इति अभ्यर्च्य, नृसूक्तेन[५] सहस्रधारया कुम्भेन वा अभिषिच्य, ओं शङ्खाधिदैवताय जलेशाय नमः, पद्मधाराधिदैवताय पुष्ट्यै नमः, इति अभ्यर्च्य, अभिषिच्य, 'अग्निमूर्धा'[६] इति स्रोतेन अंगाम्बु निहृतं कृत्वा, विष्णुगायत्र्या वस्त्रं प्रणवेन ब्रह्मसूत्रं उत्तरीयं च दत्त्वा, अर्घ्यपाद्यादिभिः अभ्यर्च्य अलंकारासनार्थं पूर्ववत् पादुके दत्त्वा, अलंकारासनं विचिन्त्य, पूर्ववत् अर्घ्यादिभिः अभ्यर्च्य 'मूर्धानं दिवं'[७] इति अगरुज-

१ गन्ध द्वारां दुराधर्षां नित्यपुष्टां करीषिणीं ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ।

२ पृष्ठ ६८ में पावमानी ऋचायें हैं ।

३ ब्रह्मयज्ञानम्प्रथमं पुरस्ताद्विसीमतः सुरुचो व्वेन आवः । स वुध्न्या उपमा अस्य विष्ठाः सतश्च योनि मसतश्च व्वि वः ॥

४ कयानश्चित्रं आभुव दूती सदावृधः ।
सखा कया सचिष्ठया वृता ॥

५ नृसूक्तेन=पुरुषसूक्तेन ॥

६ अग्निमूर्धा दिवः ककुत्पतिः पृथिव्या अयम् ।
अपा ठँ रेता ठँ सि जिन्वति ॥

७ मूर्धानन्दिवोऽअरतिं पृथिव्या वैश्वानर मृत आजातमग्निम् ।
कवि ठँ सम्राजमतिथिञ्जनानामासन्ना पात्रञ्जनयन्त देवाः ॥

धूपेन आर्द्रान् केशान् संशोष्य, चन्दनेन 'गन्धद्वारां'[1] इति गन्धेन अनुलिप्य, 'तद्विष्णोः'[2] इति पुष्पाणि वितीर्य, 'जितं ते'[3] इति आभरणैः अलंकृत्य, विष्णुगायत्र्या अञ्जनं दत्त्वा, ओं दर्पणाधिदैवतायै लक्ष्म्यै नमः इति अभ्यर्च्य, व्याहृत्या ओं धूपपात्राधिदैवताय पावकाय नमः, इति अभ्यर्च्य धूपमुद्रां प्रदर्श्य, जितं ते इति देवस्य नासिकायां धूपं च, ओं दीपपात्राधिदैवताय भास्कराय नमः, इति अभ्यर्च्य, दीपमुद्रां प्रदर्श्य, देवस्य नेत्रयोः 'उद्दीप्यस्व' इति दीपं च प्रदर्श्य

'तिलं वस्त्रं तथा हेमं ताम्बूलं तण्डुलं तथा।
फलानि गव्यं आधारं गाश्च धान्यं यथा वसु॥
गोग्रासं देशिकायैव दद्यात् देवस्य सन्निधौ।'

इति मात्रादानं कृत्वा, तिरस्करिणीं अपोह्य, वाद्यानि आघोष्य, वेदपाठान् स्तोत्रपाठान् च पाठयित्वा, देवस्य नीराजनं 'ओं नीराजनदेवतायै स्वधायै नमः' इति अभ्यर्च्य दत्त्वा, देवस्य भोजनासनाय पूर्ववत् पादुके दत्त्वा, भोज्यासनस्थं विचिन्त्य, पूर्ववत् अर्घ्यादिभिः अभ्यर्च्य, मधुपर्कं निवेद्य, प्रणवेन

---

१ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्॥
ईश्वरीं सर्व भूतानां तामिहोपह्वये श्रियम्॥

२ तद्विष्णोः परम्पद ठँ सदा पश्यन्ति सूरयः॥
दिवीव चक्षुराततम्॥

३ ओं जितन्ते पुण्डरीकाक्ष नमस्ते विश्वभावन॥
सुब्रह्मण्य नमस्तेऽस्तु महापुरुष पूर्वज॥

ताम्बूलं च दत्त्वा,

'हविर्निवेदयेत् सिद्धं भोज्यभक्ष्यादिसंयुतम् ।
मधुरादिरसोपेतं विष्युक्तं सुसमाहितम् ॥
असंस्कृतैश्च निष्पन्नं युक्तमन्यैः फलादिभिः ।
अपक्वैः अतिपक्वैः च यथायोगं प्रकल्पयेत् ॥
राजोपचारवत् सर्वं उपचारं प्रकल्पयेत् ।'

इति नैवेद्यद्रव्याणि अस्त्रमन्त्रेण[1] प्रोक्ष्य, वर्ममन्त्रेण[2] परिषिच्य,

'शीतलोदकसंपूर्णं एलातक्कोलसंयुतम् ।
मन्दोष्णं वासनायुक्तं अर्हणांभ इति स्मृतम् ॥

इति अर्हणं प्रणवेन दत्त्वा, नैवेद्यस्य दाहनाप्यायने कृत्वा, सुरभिमुद्रां प्रदर्श्य, अर्घ्यात् पुष्पं आदाय, विष्णुहस्ते समर्प्य, दक्षिणजानुं भूमिस्पृष्टं कृत्वा, वामजानुं उन्नम्य, अन्वारब्ध-सव्येन प्रगृहीतार्घ्यपुष्पेण दक्षिणकरेण दर्शितग्रासमुद्रया, 'देवस्यत्वा'[3] इति मन्त्रेण यथोदितं नैवेद्यं देवस्य दक्षिण-हस्ते निर्वपेत् । ततः पानकं पानीयं च निवेद्य, आचमनं दत्त्वा, ताम्बूलं च निवेदयेत् ।

कर्मार्चायां च ध्रुववेरादौ यद्यत् उदीरितं तत् सर्वं आचरेत् । बहुबेरे तु श्रीभूम्योश्च ।

---

१ ओं हः नमः दीप्तोद्दप्त प्रभ अस्त्राय फट् ॥

२ ओं हुं नमः शाश्वतशरण्य कवचाय हुंम् ॥

३ ओं देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । अग्नये जुष्टं गृह्णाम्यग्नीषोमाभ्यां जुष्टं गृह्णामि ॥

'श्रीं श्रियै नमः' इति श्रियं, 'भूं भूम्यै नमः' इति भुवं च आवाह्य, पद्मासनं दत्त्वा, स्वस्वमन्त्रेण षडङ्गन्यासं कृत्वा, कमलमुद्रां प्रदर्श्य, अन्यत् सर्वं अर्घ्यादिनैवेद्यान्तं स्वस्वमन्त्रेण समर्पयेत्। तदनु देवं स्तुत्वा, द्वादशाक्षरं अन्यं वा मन्त्रं, यथोदीरितसंख्यया जप्त्वा, तदनु वक्ष्यमाणेन विधिना, अग्नौ देवं संपूज्य, भूतेभ्यः बलिदानं नित्योत्सवं च कृत्वा, देवेशं विज्ञाप्य, प्रणम्य च, पूजकः स्वसमाददीतावशिष्टानि पूजावस्तूनि आदाय, देवप्रीत्यर्थं तैः आत्मपूजनं कुर्यात्।

इति श्रीवराहगुरुविरचितायां क्रियाकैरवचन्द्रिकायां
अष्टाविंशः परिच्छेदः

---

## एकोनविंशः परिच्छेदः

अथ अग्निकार्यविधिः उच्यते—

तदनु आचार्यः अग्न्यगारद्वारे, 'ओं श्रों चण्डाय नमः', 'ओं प्रिं प्रचण्डाय नमः', मध्ये 'ओं क्षं गरुडाय नमः', इति अभ्यर्च्य अन्तः प्रविश्य, अग्निकुण्डस्य पश्चिमे पूर्वाग्रान् त्रीन् दर्भान् आस्तीर्य, तदुपरि कूर्मासनं निक्षिप्य, तत्र प्राङ्मुखं आसीनः आचार्यः, 'ओं असुरान्तकचक्राय स्वाहा अस्त्राय फट्' इति मन्त्रेण कुण्डस्य सम्मार्जनालेपने कृत्वा,

"प्राच्यां शिरस्समाख्यातं वाहुयुग्मं व्यवस्थितम् ।
ऐशान्याग्नेयकोणे तु जङ्घे वायव्यनैर्ऋते ॥
उदरं कुण्डमित्युक्तं योनिर्योनिर्विधीयते ।"

कुण्डं एवं ध्यात्वा, होमं करिष्ये इति संकल्प्य, पुण्याहं वाचयित्वा, ओं भूर्भुवस्सुवरिति पुण्याहजलेन द्विदर्भाभ्यां कुण्डस्य प्रोक्षणाभ्युक्षणानि कृत्वा, तदनु आत्मनः दक्षिणे पार्श्वे पुष्पभाजनं वामे च अन्यानि होमद्रव्याणि निक्षिप्य, स्वस्वमन्त्रन्यासं कृत्वा, कुण्डस्य उत्तरपार्श्वे प्रागग्रान् षट् दर्भान् आस्तीर्य, तेषु आज्यपात्रचरुस्थालीप्रोक्षणीप्रणीता-समित्कुशतण्डुलपरिधिस्रुक्स्रुवदर्व्यग्निर्विहरणव्यजनमेक्षणशु-ष्ककाष्ठवण्टाक्षतगन्धद्रव्याणि यथासंभवं न्यंचि निधाय, पात्राणि च द्वन्द्वानि अर्वाङ्मुखं संस्थाप्य, तदुपरि पूर्वाग्रान दर्भान् आस्तीर्य, कुण्डमध्ये 'ओं नमो नारायणाय' इति तिस्रः रेखाः, दक्षिणं आरभ्य उत्तरान्तं प्रागायताः पश्चिमादिपूर्वान्तं, उदगायतः ताः, तावतीः लिखित्वा, तच्छकलं विसृज्यं, हस्तं प्रक्षाल्य, दर्भस्तंबद्वयेन अद्भिः अभ्युक्ष्य दर्भमुष्टिभिः कुण्डस्य पर्यग्निकरणं कृत्वा, कुण्डमध्ये भद्रासनं कल्पयित्वा, तस्मिन्,

"कुण्डमध्ये तथा लक्ष्मीं सर्वाभरणभूषिताम् ।
सर्वावयवसंपूर्णां ऋतुस्नातां विचिन्तयेत् ॥
देवं नारायणं ध्यात्वा सर्वलक्षणलक्षितम् ।
चतुर्बाहुं विशालाक्षं कोमलं पीतवाससम् ॥
शङ्खचक्रगदापद्मैः चतुर्भिः कृतलक्षणम् ।

कंजपाणिं तथापादं श्रीवत्साङ्कितवक्षसम् ॥
कालमेघनिभं शान्तं चन्द्रबिम्बनिभाननम् ।
हारकेयूरसंयुक्तं किरीटेन उपशोभितम् ॥

एवं कुण्डमध्ये ध्यात्वा, अभ्यर्च्य, तत्र तयोः संगमं विचिन्त्य, तस्मात् उत्पन्नं अग्निं ध्यात्वा, अरणेः सूर्यकान्ताश्मनः वा अग्निं द्वादशाक्षरविद्यया मथित्वा, श्रोत्रियागाराद्वा समाहृत्य, ओं भूर्भुवस्सुवः इति प्रोद्य, दिव्याग्निं ध्यात्वा, अग्निबीजस्य काश्यपः ऋषिः, त्रिष्टुप्छन्दः अग्निर्देवता, होमार्थे विनियोगः, रां इत्यादिषडङ्गन्यासं कृत्वा, ओं रं अग्नये नमः आगच्छेति कुण्डमध्ये निधाय आवाह्य अभ्यर्च्य, ओं असुरान्तकचक्राय स्वाहेति इन्धनानि अग्नौ निक्षिप्य, वायुबीजस्य किष्किन्ध ऋषिः, जगती छन्दः, वायुर्देवता, अग्न्युद्दीपनार्थे विनियोगः । ओं यं वायवे नमः इति अग्निमुद्दीप्य अस्त्रमन्त्रेण अद्भिः परिसमूह्य ओं अचक्राय स्वाहेत्यादिषडङ्गन्यासं कृत्वा, त्रिभिः पञ्चभिः सप्तभिः नवभिः एकादशभिः वा पञ्चविंशतिनिष्ठान्तैः दर्भैः वासुदेवादिमन्त्रैः प्रादुदगग्रं प्रागाद्युत्तरान्तं अग्निं प्रादक्षिण्येन परिस्तीर्य, तत्र द्रव्याग्निमध्ये पूर्वाग्रान् दर्भान् आस्तीर्य, तदुपरि प्रणीतान्निधाय अद्भिः आपूर्य, अक्षतैः अभ्यर्च्य, दर्भयुग्मनिर्मितं, प्रादेशसम्मितं कूर्चं तस्यां विन्यस्य, त्रिभिः दर्भैः पवित्रैः आच्छाद्य, प्रोक्षणीं आत्मनः अग्रे विन्यस्य, प्रणीताजलं कूर्चेन सह प्रोक्षण्यां आवाप्य, तत्कूर्चं हस्तयोः अङ्गुष्ठानामिकाभ्यां, मूलेन,

पुनः आधारं त्रिः उत्प्लूय, तत्कूर्चेन प्रोक्षणीं होमद्रव्याणि सर्वाणि च प्रोक्ष्य, तेन नामादेशं यथायथं स्पृष्ट्वा, तानि पात्राणि उत्तानानि कृत्वा, पुनः प्रोक्ष्य, तानि प्रोक्षणीजलेन, 'सत्यंत्वर्तेन परिषिञ्चामि' इति प्रादक्षिण्येन स्नावयित्वा, प्रणीतां पुनः अद्भिः संपूर्य,

तस्मिन् 'ओं कौमोदकीशङ्खचक्रपद्मधराय वासुदेवाय नमः' इति आवाह्य, गन्धादिभिः अभ्यर्च्य, अग्नेः ऐशान्यां दर्भविष्टरे तां संस्थाप्य, अग्नेः दक्षिणतः दर्भेषु द्वादशदर्भकृत-कूर्चं पूर्वाग्रं विन्यस्य, तस्मिन्, "चतुर्मुखं भुजद्वन्द्वं साक्षमा-लाकमण्डलम्। हेमाभं शक्तिसहितं ब्रह्माणं तु विचिन्तयेत्।" इति ध्यात्वा,

'ओं कं ब्रह्मणे नमः', इति कूर्चे समावाह्य, ध्यात्वा, अभ्यर्च्य, विष्णुगायत्र्या स्थालीं प्रक्षाल्य, तण्डुलान् आढक-प्रमाणान्[1], 'ओं अचक्राय स्वाहा' इति तस्यां निक्षिप्य, 'ओं विचक्राय स्वाहा' इति शुद्ध जलैः संक्षाल्य, 'ओं सचक्राय स्वाहा' इति संशोध्य, 'ओं सूर्यचक्राय स्वाहा' इति अग्नौ आरोप्य, 'ओं ज्वालाचक्राय स्वाहा', इति अग्निं उद्दीप्य, 'ओं महासुदर्शनचक्राय स्वाहा', इति श्रपयित्वा, एवं महानसे चुल्ल्यां वा केवलान्नमौद्गान्नपायसान्नगुडान्नादिचतुर्विधचरून् श्रपयित्वा, अग्नेः उत्तरतो निक्षिप्य, आज्यपात्रं आत्मनः पुरतः संस्थाप्य, द्रावितं गालितं आज्यं आज्यपात्रे 'ओं अं विष्णवे

---

१ चार सेर का एक आढक—पृष्ठ ८५ में देखिए।

नमः आप्यायस्व'[1] इति मन्त्रेण निषिच्य, कुण्डस्य उत्तरे पूर्वाग्रान् दर्भान् आस्तीर्य, तेषु अङ्गारान् निरूह्य, तेषु आज्यपात्रं निधाय, दर्भान् आदीप्य दर्शयित्वा, विसृज्य,

'ओं श्रीमन्नारायणचरणौ शरणं प्रपद्ये' 'ओं श्रीमन्नारायणायनमः' इति वा मूलेन वा द्वे दर्भाग्रे तत्र प्रत्यस्य, ज्वलता दर्भस्तम्बेन त्रिः पर्यग्निकृत्वा, विसृज्य, दर्भकाण्डद्वयेन नीराजनं कृत्वा, आज्यस्थालीं उदगुद्वास्य, अङ्गारान् अग्निना संयोज्य, आज्यस्थालीं पुरतः कृत्वा, उदगग्राभ्यां पवित्राभ्यां अङ्गुष्ठानामिकाभ्यां मूलेन त्रिः उत्पूय, पवित्रग्रन्थिं विस्रस्य, अपः स्पृष्ट्वा, अग्नौ प्रहृत्य,

आज्यं सुरभिमुद्रया मृतीकृत्वा, दर्भैः आच्छाद्य, निधाय, अग्नेः अष्टसु दिक्षु, इन्द्रादीशानान्तं आवाह्य, संपूज्य च, उष्णोदकेन स्रुक्स्रुवौ प्रक्षाल्य, दर्भपञ्चककृतकूर्चेन स्रुक्स्रुवयोः

मूलं मूलेन, मध्यं मध्येन, अग्रं अग्रेण अस्त्रमन्त्रेण[2] सम्मृज्य, अग्नौ निष्टप्य, अद्भिः संप्रोक्ष्य, आत्मनः उदीच्यां स्रुक्स्रुवौ निधाय, कूर्चग्रन्थिं विस्रस्य, तं अग्नौ प्रहृत्य, स्रुवेण आज्यं आदाय, होमद्रव्येषु संसिच्य, कुण्डस्य पश्चिमे कुण्डायामसदृशं अङ्गुष्ठनहनं दक्षिणे तस्मात् अङ्गुलिहीनं मध्यमाङ्गुलिनहनं उत्तरे तस्मात् अङ्गुलिहीनं कनिष्ठानाहकं परिधित्रयं क्रमेण

---

१ ओं आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् भवा वाजस्य सङ्गथे ॥

२ ओं सुदर्शनाय हेतिराजाय अस्त्राय फट् ।

श्रीधर[1]नृसिंह[2]हयग्रीव[3]मन्त्रैः संस्थाप्य, मध्यमं परिधिं प्रणवेन उपस्पृश्य, आग्नेयैशानकोणयोः आघारसमिधौ च अग्नीशानमन्त्राभ्यां संस्थाप्य, 'अदितेनुमन्यस्व'[4] इति आरभ्य, 'देव सवितः प्रसुव' इत्यन्तेन, दक्षिणाद्युत्तरान्तं समन्ततः परिषिच्य,

अनुयाजसमिधं प्रणीतामुखे निधाय, पञ्चदशैकतः गोघृताक्ताः समिधः मुष्टिमुद्रया, प्रजापतिं मनसा ध्यायन्, सकृदेव मूलेन हुत्वा, कुशकूर्चवेष्टिते वामकरतले घृतपात्रं निधाय, 'ओं प्रजापतये इदं न मम' इति प्रथमं नैर्ऋत्यादीशानान्तं, 'ओं इन्द्राय इदं न मम' इति द्वितीयं वायव्यात् आग्नेयान्तं आघारं हुत्वा, ततः अग्नौ उत्तरे, 'ओं अग्नये स्वाहा अग्नय इदं न मम, दक्षिणे, 'ओं सोमाय स्वाहा सोमाय इदं न मम' इति मध्ये भूरादिव्याहृतिभिश्च हुत्वा, तदनु अग्निं संस्मरेत्।

"द्विशीर्षकं सप्तहस्तं त्रिपादं सप्तजिह्वकम्।
वरदं शक्तिपाणिं च बिभ्राणं स्रुक्स्रुवौ तथा ॥
अभीतिदं चर्मधरं वामे चाज्यधरं करे।
काली कराली सुमना लोहिता धूम्रयेवहि।
स्फुलिंगिनी विश्वरूपा सप्तजिह्वाः प्रकीर्तिताः ॥

---

१ ओं श्रीधरायनमः।

२ ओं नृसिंहायनमः।

३ ओं हयग्रीवाय नमः।

४ पृष्ठ १०० में।

काल्यास्तु मध्यमं स्थानं कराल्याः पूर्वदिग्भवेत् ।
मनोजवायाश्चाग्नेय्यां लोहितायास्तु वारुणे ॥
सुधूम्रा सोमनिलया स्फुलिंगिन्यनिलाश्रया ।
ऐशान्यां विश्वरूपी तु एवं स्थानं स्मरेत् क्रमात् ।
जिह्वायां दक्षिणे वक्त्रे धूम्रायां मारणादिकम् ॥
लोहितायां वशीकारः काल्यां कर्म च शान्तिकम् ॥
सर्वसिद्धिः स्फुलिङ्गिन्यां आनने दक्षिणेतरे ॥
विश्वरूपरसज्ञायां अणिमादिमहाफलम् ॥
करालिका विजयदा पुष्टिदा च मनोजवा ।
कार्ष्ण्यं लौहित्यमेतासां वर्णश्यामत्वमेव च ॥
स्फुलिङ्गरूपं च ततः वर्णः स्फटिकसन्निभः ।
तपनीयनिभः प्रोक्तः जिह्वानामानुपूर्वशः ॥"

एवं बालाग्निं ध्यात्वा,

त्रिनेत्रं पञ्चवक्त्राढ्यं रक्तवर्णं दिशाभुजम ।
त्रिमेखलं त्रिपादं च सप्तजिह्वासमन्वितम् ॥
उपवीतसमायुक्तं जटामकुटमण्डितम् ।
चक्रं परशुखड्गं च वज्रं च अभयदक्षिणे ॥
टंकं पाशाब्जचक्रं च वरदं वह्निवामके ।
स्वाहा दक्षिणपार्श्वे तु स्वधा वामे तथैव च ॥
हिरण्या कनकाकारा कृष्णा चैव तु सुप्रभा ।
अतिरिक्तो बहुरूपासप्तजिह्वाः प्रकीर्तिताः ॥
मेषारूढं यौवनाग्निं ध्यायेदुत्सवकर्मणि ।

चतुर्भुजं त्रिनेत्रं च एकवक्त्रं जटाधरम् ॥
शूलं परशुहस्तं च अभयं वरदान्वितम् ।
सप्तजिह्वान्वितं शक्तिं उपवीतोत्तरीयकम् ॥
मेषासीनं सितं नित्ये शिवं वृद्धाग्निमारभेत् ।
दीक्षाशान्तिप्रतिष्ठाग्निः बाल इत्यभिधीयते ॥"

एवं तत्तत्कर्मानुगुणं अग्निं ध्यात्वा, तदनु अग्नेः जातदोषशान्तये तिलान् आघारसम्मिश्रान् द्वादशाक्षरविद्यया अष्टोत्तरशतसंख्यया हुनेत्। आसां मध्ये काल्यां अग्निं 'गर्भाधानादिकर्मणा संस्करिष्ये' इति संकल्प्य, 'अदितेनुमन्यस्व'[1] इत्यादिना परिषिच्य, एवं गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणअन्नप्राशनचौलोपनयनप्राजापत्यसौम्यकवैष्णवशुक्रियश्चगोदानोपनिष्क्रमणसमावर्तनविवाहान् प्रतिकर्म संकल्पपूर्वकं परिषेचनसंपुटितं हुत्वा,

काल्यां समिधः मूलमन्त्रेण, मनोजवायां प्रणवेन आज्यं, सुलोहितायांवासुदेवमन्त्रेण[2] अन्नं, सुधूम्रायां सङ्कर्षणमन्त्रेण[3] लाजं, स्फुलिङ्गिन्यां प्रद्युम्नमन्त्रेण[4] तिलं, विश्वरूपायां अनिरुद्धमन्त्रेण[5] मुद्गं च, एवं प्रत्येकं षोडश आहुतीः हुत्वा, तदनु अग्निमध्ये योगपीठं संकल्प्य, आधारादिपद्मान्तं

१ पृष्ठ १०० में देखिए।
२ ओं वासुदेवाय नमः। ३ ओं संकर्षणाय नमः।
४ ओं प्रद्युम्नाय नमः। ५ ओं अनिरुद्धाय नमः।
* समावर्तनं इति गोविन्दराजीये।

सकृदाज्येन स्वाहान्तैः तत्तन्मन्त्रैः हुत्वा, तत्र चिद्रूपं परमेश्वरं हृदयात् अवतार्य ध्यात्वा, अर्घ्यादिनैवेद्यान्तं तत्तन्मन्त्रैः सकृत् सकृत् आज्येन हुत्वा, जपार्थं च सकृत् हुत्वा, समित्दलपुष्पबीजफलैश्च परिवारमन्त्रैश्च[1] सकृत् आज्येन जुहुयात्। एतत् अग्नौ आराधनम्।

अन्यत्र प्रतिमादौ चेत् अनन्तरं वक्ष्यमाणेन वर्त्मना समिदाज्यैः जुहुयात्।

"आयामः समिधान्तालः कनिष्ठानहनं क्रमात्।
चर्महीने विनाशः स्यात् भेदे क्षीणं कुलं भवेत्॥
आर्द्रासु बन्धुनाशः स्यात् पुत्रनाशः पुरातने।
क्षतासु भार्यामरणं कलहाय च शाखिनी॥"
उद्वेगाय भवेत् स्थूला ह्रस्वा अवग्रहकारिणी।
दीर्घा अतिवृष्टिजननी त्याज्या दोषयुतासमित्॥"

एतादृशेन समिधां शतेन तदर्धेन पादेन अष्टाभिः चतसृभिः वा समिद्भिः घृताक्ताभिः मूलमन्त्रेण आज्यसिक्तं चरुं ग्रासमुद्रया प्रत्यर्धं नृसूक्तेन पालाशपत्रेण हस्तेन वा षोडश आहुतीः स्रुवेण आज्येन समित्संख्यया च जुहुयात्।

"यज्ञवृक्षोद्भवैः शान्तिः सौभाग्यं कुसुमैः भवेत्।
धूपद्रव्यैः सदा आरोग्यं पुष्टिर्दध्ना पयः शुचिः॥

---

१ ओं आधारशक्त्यै नमः, ओं प्रकृत्यै नमः, ओं अखिलजगदाधाराय कूर्मरूपिणे नारायणाय नमः, ओं अनन्ताय नागराजाय नमः, ओं भूम्यै नमः।

अन्नेन विविधान् कामान् आज्येन आयुष्मतीः प्रजाः ।
श्वेतपद्मैस्तु जुहुयादिच्छन् ब्रह्मश्रियं नरः ।
लक्ष्मीपुष्पैस्तु जुहुयात् लक्ष्मीकामोऽथ वारुणैः ॥

पद्मबिल्वसमिद्भिः वा ज्ञानकामस्तु सर्पिषा ।
कन्याकामो हुनेत् लाजैः गोकामो गोमयैः पुनः ।
आयुष्कामस्तु दूर्वाभिः भूमिकामस्तु मृत्स्नया ।
यवैः च इन्द्रियकामस्तु तिलैः सर्वजनप्रियः ।
ब्रह्मवर्चसकामस्तु ब्रह्मवृक्षसमुद्भवैः ॥

वेणुभिश्च यवैश्चैव नीवारैः शालिभिः तथा ।
सर्वे कामाः प्रसिध्यन्ति होतुर्बीजैः यथोदितैः ॥
लाजहोमेन सिध्यन्ति सर्वे कामा न संशयः ।
अन्नेन अन्नाद्यकामस्तु पुत्रकामस्तु पायसैः ॥
निम्बपुष्पैः हिरण्यार्थी सर्वे सिध्यन्ति सर्पिषा ।
होमे सर्पिर्मधुक्षीरधाराः स्युः चतुरङ्गुलाः ॥
शुक्तिः दध्याहुतिः ग्रासं पायसाज्याहुतिर्भवेत् ।
भक्ष्याहुतिः तदर्धेन फलैः पुष्पैः अखण्डितैः ॥
निष्पावबीजमानेन धूपद्रव्याहुतिः भवेत् ।
तिलव्रीहियवाद्यैस्तु मुष्ट्यर्धार्धाहुतिः क्रमात् ॥
अष्टाङ्गुला तदर्धा वा समिद्दूर्वा षडङ्गुला ।
मृद्वीकाक्षप्रमाणेन गोमयाहुतिरिष्यते ॥
पूर्णाहुतिः घृतस्य स्यात् कुडुपेन चतुर्मुख ।
न्यूनाधिकप्रमाणेन हव्यकव्याहुतीः क्रमात् ॥

भुञ्जन्ति दानवाः दैत्याः निष्फलाय च कल्पते।"

तदनु अग्नौ परमपुरुषं ध्यात्वा, अर्घ्यादिभिः अभ्यर्च्य, कुक्कुटाण्डप्रमाणं घृताप्लुतं चरोः पिण्डं स्रुगावर्ते निक्षिप्य, स्रुवेण अभिघार्य,

समिद्दर्भकुसुमानि आनासिकं उद्धृत्य, मूलमन्त्रेण हुत्वा, पञ्चोपनिषन्मन्त्रैः[1] आज्येन यथाशक्तिशान्तिहोमं च कृत्वा, स्रुवं आज्येन संपूर्य, सदर्भसमित्कुसुमं स्रुवेण पिधाय, नासिकाग्रान्तं उद्धृत्य, मूलमन्त्रेण हुत्वा, तदनु आत्मनः अग्रे स्रुवं, तस्याः याम्ये च आज्यस्थालीं स्रुगुत्तरे स्रुवं च निधाय, उपयुक्तकुशानसर्वान् हस्ताभ्यां उदगग्रं गृहीत्वा, आज्यपात्रे मूलं, स्रुचो मध्ये मध्यं, स्रुचो गर्ते अग्रं यथाक्रमं स्पर्शयित्वा, एवं त्रिः कृत्वा, दर्भान् अग्नौ निक्षिप्य, अनुयाजपरिध्यूर्ध्व-समिधश्च क्रमेण हुत्वा, 'अदितेन्वमँस्थाः' इति परिषिच्य, आत्मनः अग्रे प्रणीतां संस्थाप्य, प्रोक्षणीजलं तस्यां संयोज्य, पूर्वादि सोमान्तं जलेन संसिच्य, पश्चिमायां निक्षिप्य, स्वात्मानं संप्रोक्ष्य ब्रह्माणं उद्वास्य परिषिच्य, अग्निमध्यस्थं देवं स्वहृदये समर्प्य, स्रुवं जलेन संपूर्य, कुण्डात् बहिः प्रादक्षिण्येन सेचयित्वा, शेषेण आत्मानं संप्रोक्ष्य, शिरसि भस्मना तिलकं कृत्वा, धाम्नि देवं अर्घ्यादिभिः अभ्यर्च्य,

"भक्त्या यत् अग्नौ विहितं यथाशक्ति यथाविधि।
आराधनं तवैवेदं गृहाण परमेश्वर॥"

---

१. चत्वारिंशत् पृष्ठे।

इति देवपादयोः हवनं समर्पयेत्। नित्यहोमेषु परिधीन् बहिर्दिक्षु न दापयेत्। एवं पूर्वं हवनं कृत्वा, तदनु नित्योत्सवं कुर्यात्।

इति श्रीवराहगुरुविरचितायां क्रियाकैरवचन्द्रिकायां
अग्निकार्यविधिः नाम
एकोनत्रिंशः परिच्छेदः

---

## अथ त्रिंशः परिच्छेदः

# अथ नित्योत्सवविधिः

अथ नित्योत्सवविधिः उच्यते—

अग्निपूजानन्तरं आचार्यः सौवर्णं राजतं ताम्रं वा पात्रं तण्डुलैः शुद्धैः आपूर्य, पद्मं द्वादशदलं आलिख्य, कर्मार्चायै निधाय, मूलात् भगवन्तं मूलेन तस्मिन् समावाह्य, तद्दलेषु श्रीवत्सादिद्वादशशक्तीः तदनु विष्ण्वादिमूर्तीश्च प्रागादिक्रमेण आवाह्य, दिने प्रातरायतनं परिक्रामेत्।

मध्याह्ने तु अन्नेन एवं कृत्वा तेन, सायाह्ने कुसुमसंघातैः एवं कृत्वा तेन परिक्रामेत्।

एवं त्रिसन्ध्यं तण्डुलान्नपिष्टेषु देवं आवाह्य, त्रिभिः बलिं कल्पयेत्। अथवा त्रिसन्ध्यं बिम्बेन वा द्विकालं एककालं वा हरेः नित्योत्सवं अन्नेन कुर्यात्।

"मध्यंदिने वा सर्वार्थं परिक्रम्य बलिं क्षिपेत् ।
यद्वोत्सवप्रतिकृतेः अन्वये वा बलिर्भवेत् ॥"

त्रिसन्ध्यं छत्रचामरादिसंयुतं केवलं तण्डुलादिकं अन्नं वा पूर्ववत् कृत्वा तेन सह पञ्चावरणके धाम्नि पञ्चसु आवरणेषु बलिं दत्त्वा, गेयवाद्यपुरस्सरं पर्यटनं उत्कृष्टोत्सवः । एककालहीनः मध्यमः । कालद्वयहीनः अधमः । कालत्रयहीनः क्षुद्रः ।

"विना बलिप्रदानेन न उत्सवः अभ्युदयावहः ।
महावातादिसंक्षोभे न नित्योत्सवं आचरेत् ॥"

चण्डप्रचण्डयोरेव वा केवलं बलिं दत्त्वा, तत्रैव 'सर्वेभ्यः श्रीविष्णुपार्षदेभ्यो नमः' इति बलिं क्षिपेत् ।

शुक्लांबरधरं शुचिं सर्वालङ्कारसंयुतं गरुडात्मना भावितं परिचारकं आहूय, पूर्वोक्तविधिना वाहितं पात्रं स्तुतिध्वजचामरचक्रवाहनसंयुतं तन्मूर्ध्नि निक्षिप्य, सर्ववाद्यगीतनृत्तपुरस्सरं चण्डादीनां गीततालनृत्तपुरस्सरं बलिं यथाविधि दद्यात् ।

'ओं च्त्रों चण्डाय नमः' बलिं ददामि, ओं पृं प्रचण्डाय नमः बलिं ददामि,

इति तोयपूर्वं तोयोत्तरं बलिं दत्त्वा, मल्लतालं षड्जस्वरं वैजयन्तीनृत्तं च दर्शयित्वा, वितानधवलछत्रचामरव्यजनादिभिः बल्यर्थं प्रथमावरणादिसर्वावरणानां परिभ्रमणं कुर्यात् ।

प्रथमावरणे चण्डप्रचण्डौ आरभ्य पञ्चमावरणपर्यन्तं स्थितानां सर्वेषां द्वारपालानां गन्धपुष्पधूपदीपबलिप्रदानानन्तरं मल्लतालऋषभस्वरवैजयन्तीनृत्तानि दर्शयेत् ।

गोपुरोत्तरसाले ओं सूर्याय चन्द्रमसे च बलिं दत्त्वा, धैवतस्वरं, भद्रतालं, सर्वमङ्गलनृत्तं, सालाश्रितानां सर्वेषां बलिप्रदानानन्तरं, प्रथमावरणदेवतासु आग्नेये कामाय, सर्वमङ्गलनृत्तं धैवतस्वरं भद्रतालं, याम्यायां 'ओं ब्रह्मणे सदेवीवाहनपरिवाराय नमः बलिं ददामि' इति दत्त्वा, ब्रह्मतालं मध्यमस्वरं मेघरञ्जिरागं सर्वमङ्गलनृत्तं, नैर्ऋते ओं गजाननाय, भद्रतालं पञ्चमस्वरं वराटिरागं हस्तिनृत्तं, वारुण्यां ओं षण्मुखाय भद्रतालं धैवतस्वरं सर्वमङ्गलनृत्तं, वायौ ओं दुर्गायै तथैव सौम्यायां ओं धनाधिपतये भद्रतालं निषधस्वरं तक्केशीरागं पृष्ठकुट्टिमनृत्तं, ऐशाने ओं ईशाय ढक्करीतालं धैवतस्वरं शालापाणीरागं वामजानूर्ध्वनृत्तं, गरुडस्य मध्यमस्वरं गरुडगन्धारीरागं गरुडतालं विष्णुक्रान्तनृत्तं, विष्वक्सेनस्य बलितालं ऋषभस्वरं वराटीरागं स्वस्तिकनृत्तम्। इदं एकावरणमात्रविषयम्।

अन्तर्हारोपेते धाम्नि तु अन्तर्मण्डलनाम्नि प्रथमावरणे गोपुरोत्तरसाले ओं पुरुषाय, दक्षिणे ओं अच्युताय, तालादीनि पूर्वोक्तानि। आग्नेये ओं हयग्रीवाय बद्धावतालं ऋषभस्वरं कोल्लिरागं सर्वतोभद्रनृत्तं, याम्यायां ओं संकर्षणाय गान्धारस्वरं कौशिकरागं भृङ्गिणीतालं भेटकनृत्तं, नैर्ऋते ओं वराहाय चक्रमण्डनृत्तं मध्यमस्वरं नट्टभाषारागं जयतालं, वारुण्यां ओं प्रद्युम्नाय कान्तारनृत्तं पञ्चमस्वरं श्रीरागं समतालं, वायौ ओं अनन्ताय कुट्टिमनृत्तं धैवतस्वरं कामदरागं जयतालम्,

उत्तरस्य ओं अनिरुद्धाय पृष्ठकुट्टिमनृत्तं निषधस्वरं तक्केशीरागं भद्रतालं, ऐशाने ओं नृसिंहाय कटिबन्धननृत्तं धैवतस्वरं दत्तरागं ढक्करीतालं, अङ्गणे इन्द्रादिपीठिकास्थानेषु, पूर्वे ओं चक्रिणे विलासनृत्तं षड्जस्वरं गान्धाररागं समतालं, आग्नेये ओं मुसलिने सर्वतोभद्रनृत्तं ऋषभस्वरं कोल्लीरागं बद्धावतालं, याम्यायां ओं शङ्खिने खेटकनृत्तं गान्धारस्वरं कौशिकरागं भृङ्गिणीतालं, नैर्ऋते ओं खड्गिने चक्रमण्डलनृत्तं मध्यमस्वरं नट्टभाषारागं मल्लतालं, वारुण्यां ओं गदिने कान्तारनृत्तं पञ्चमस्वरं श्रीकामदरागं मङ्गलतालं, वायौ ओं शार्ङ्गिणे कुट्टिमनृत्तं धैवतस्वरं तक्केशीरागं जयतालं, कौबेर्यां ओं पद्मिने पृष्ठकुट्टिमनृत्तं निषधस्वरं दत्तरागं भद्रतालं, ऐशाने ओं वज्रिणे वामजानूर्ध्वनृत्तं धैवतस्वरं शालापाणीरागं ढक्करीतालं, अन्तर्हारनाम्नि द्वितीयावरणे सूर्यादीनां पूर्वमेव उक्तानि ।

अङ्गणे पूर्वे ओं इन्द्राय सुराधिपतये सदेवीवाहनपरिवाराय नमः बलिं ददामि, समतालं षड्जस्वरं गान्धाररागं विलासनृत्तं, आग्नेये ओं अग्नये नमः ऋषभस्वरं कोल्लीरागं बद्धावतालं सुभद्रकनृत्तं, याम्ये ओं यमाय कान्तारस्वरं कौशिकरागं भृङ्गिणीतालं खेटकनृत्तं, नैर्ऋते ओं निर्ऋतये चक्रमण्डलनृत्तं मध्यमस्वरं नट्टभाषारागं मल्लतालं, वारुणे ओं वरुणाय कान्तारनृत्तं पञ्चमस्वरं कामदरागं मङ्गलतालं, वायव्ये वायवे कुट्टिमनृत्तं धैवतस्वरं तक्केशीरागं जयतालं, सौम्ये ओं कुबेराय पृष्ठकुट्टिमनृत्तं निषधस्वरं दत्तरागं

भद्रतालं, ऐशाने ओं ईशानाय वामजानूर्ध्वनृत्तं धैवतस्वरं शालापाणिरागं ढक्करीतालम् ।

मध्यान्तर्हारनाम्नि तृतीयावरणे धात्रादिद्वारपालानां द्वादशादित्यानां च भद्रतालं धैवतस्वरं सर्वमङ्गलनृत्तं, अग्नि-यममध्ये वसवः, यमनिर्ऋतिमध्ये पितृगणाः निर्ऋतिवारुण-मध्ये विश्वेदेवाः, वारुणवायुमध्ये सप्तमरुतः, वायुकुबेरमध्ये सप्तऋषयः, कुबेरेशानमध्ये एकादशरुद्राः, भद्रतालं धैवतस्वरं सर्वमङ्गलनृत्तं, तत्राङ्कणे कुमुदादयः, तेषां तालरागनृत्तानि उक्तानि । मर्यादायां द्वारपालाः दुर्जयादयः, आवरणदेवतास्तु पूर्वे साध्याः, आग्नेये नव ग्रहाः, याम्यायां अङ्गिरसः, नैर्ऋते अश्विनौ, वारुण्यां लक्ष्मीसरस्वतीविघ्नेशाः, वायौ इन्द्रादी-शान्ताः, उत्तरस्यां ब्रह्मादिवास्तुदेवगणाः, ऐशान्यां सप्तविंशति-नक्षत्राणि । तेषां च भद्रतालं धैवतस्वर सर्वमङ्गलनृत्तानि, अङ्गणे उपेन्द्रादयः, तेषां इन्द्रादिवत् तालादीनि ।

महामर्यादानाम्नि पञ्चमावरणे द्वारपालाः कुमुदादयः तेषां तालादीनि उक्तानि । आवरणदेवतास्तु पूर्वस्यां सिद्ध-ऋषिनागाः, आग्नेये असुराः, याम्यायां राक्षसाः, नैर्ऋते यक्षविद्याधराः, पश्चिमायां सौरभेयीगुह्यगन्धर्वाः, वायव्ये अप्सरसः, सौम्यायां प्रजापतयः मर्त्याश्च, ऐशाने अधिरोहिण्यः, एतेषां बलितालं धैवतस्वरं सर्वमङ्गलनृत्तं, अङ्कणे इन्द्रादि-पीठिकासु विश्वेशादयः । तेषां इन्द्रादिवत् तालरागनृत्तानि ।

एवं प्रथमावरणादिसर्वावरणेषु बलिप्रदानमात्रं चेत्

वल्यर्थं क्रमात् परिभ्राम्य, पीठं प्रदक्षिणीकृत्य आलयं प्रविश्य, तं च प्रदक्षिणीकृत्य अन्तः प्रविश्य अर्घ्यं दत्त्वा, मूलमन्त्रेण मूलबेरे समुत्सृज्य, बलिशेषं किञ्चित् विष्वक्सेनस्य शिरसि निक्षिप्य, परिशिष्टं अक्षतादिकं च बलिपीठे निक्षिपेत्।

नित्योत्सवे तु तद्बिम्बं शिबिकादिषु वा परिचारकशिरसि वा आरोप्य, परिभ्रमणं आचरेत्। तदा तत्र विलासकर्तर्यादिनृत्तभेदसंयुतं पुष्पप्रपाछत्रचामरसर्ववादित्रसर्वगेयब्रह्मघोषबहुदीपसंकुलं उत्सवं कुर्यात्।

तस्य बिम्बस्य श्रीवत्साद्यष्टमङ्गलानि दर्शयित्वा, देवस्य सन्निधाने एव सर्वेषां बलिं दत्त्वा, आवरणेषु पृथुकादिताम्बूलं च नैवेद्यं आचरेत्। शङ्खनिनदेन केवलं प्राकारद्वारा निर्गत्य बलिपीठस्य पुरतः मन्दिराभिमुखं देवं स्थापयित्वा, पीठस्य सर्वासु दिक्षु वादित्रेषु घोषितेषु, क्षालिते पीठिकामूर्ध्नि गुरुः विष्णुपार्षदान् संपूज्य, तत्र बलिं निरवशेषं दत्त्वा, पीठं प्रदक्षिणीकृत्य, धामान्तः प्रविश्य, मुखमण्डपे देवस्य पादुके दत्त्वा, यानादेः अवरोप्य, देवं विष्टरे प्राङ्मुखं आरोप्य, अर्घ्यादिभिः अभ्यर्च्य, अवसरोचितं उपहारादिकं प्रदाय, गर्भगेहं प्रविश्य, बहिरङ्गणभूमिषु गेयवादित्रनृत्तेषु न्यूनभावं समाधातुं शुद्धताण्डवं दर्शयित्वा, देवं मूलमन्त्रेण मूले समर्प्य, प्रणम्य, स्तुत्वा, प्रदक्षिणीकृत्य, स्वगृहं प्रविश्य, स्वार्थं देवं प्रपूजयेत्।

[स्वार्थार्चनं प्रथममेव इति केचित्।]

इति श्रीवराहगुरुणा विरचितायां क्रियाकैरवचन्द्रिकायां
नित्योत्सवविधिः नाम
त्रिंशः परिच्छेदः

---

## अथ एकत्रिंशः परिच्छेदः

# स्नपनविधिः

अथ स्नपनविधिः उच्यते—

विषुसंक्रमणग्रहणायनद्वयद्वादशीश्रवणकर्तृजन्मदिनत्रयतिथित्रयव्यतीपातरोहिणीदर्शपौर्णमासीपुनर्वसुपञ्चम्यादिशुभतिथिनक्षत्रवारादिषूक्तं स्नपनं केवलम्। प्रतिष्ठोत्सवादिषु कर्माङ्गम्। कर्माङ्गे न अङ्कुरावापननिशाचूर्णस्नपनादिकं, केवले सर्वं चतुस्स्थानार्चनयुतं कुर्यात्।

आचार्यः तत्पूर्वेद्युः देवस्य अङ्कुरप्रतिसरपुरस्सरं अधिवासं सद्यो वा कुर्यात्। अधिवासस्तु स्नपनप्रतिमायां तीर्थप्रतिकृतौ वा तदलाभे उत्सवबिम्बकर्मार्चाकूर्चादिषु लेपमृण्मयभित्तिस्थपटस्थविषये सकूर्चदर्पणे अधिवासं कुर्यात्।

स्नपनार्थं प्रासादस्य अग्रतः सर्वासु आवरणभूमिषु सर्वासु दिक्षु यथावकाशं चतुर्द्वारं चतुस्तोरणस्तम्भवेष्टनवितान-

मुक्तादामपूर्णकुम्भदर्भमालादिभिः अलङ्कृतं दशहस्तविस्तृतं द्विगुणेन आयतं मण्डपं कारयित्वा, तस्मिन् पूर्वक्लृप्ते वा मण्डपे तत् त्रेधा विभज्य, तृतीयेंशे पश्चिमे चतुरश्रां चतुर्हस्त-विस्तारां शिलादिनिर्मितां उपानादियुतां वेदिकां कल्पयित्वा तदुपरि चतुरश्रां वृत्तां वा प्रादेशेन विस्तीर्णं अष्टाङ्गुलेन चतुर-ङ्गुलेन वा उन्नतं वलयं वेदिकोपरि च आधारतुल्यं आश्व-भ्रमेदिनीं कुर्यात् ।

"मृण्मयादिषु बिम्बेषु बहिर्वेदिप्रकल्पनम् ।
एकबेरे तु न बहिः स्नानवेदिप्रकल्पनम् ।
तोरणादि न कर्तव्यं गृहार्चास्नपने तथा ॥"

इति विधाय, तत् गोमयेन अनुलिप्य, सुधाचूर्णाक्षत-दूर्वाङ्कुरदीपसांकुरपालिकादिभिः अलङ्कृत्य, तस्य रौद्रे कोणे गालितस्वादुसुगन्धिजलपूरितानि जलद्रोण्यादिभाजनानि च, वेदिकायां दक्षिणे भूतले पवमानादिभिः सूक्तैः अभिमन्त्रितं सापिधानं उपस्नानाम्बुभाजनं च कल्पयित्वा, अर्घ्यादिदीप-पर्यन्तानि पूजाद्रव्याणि स्नपनोपयुक्तानि च, तदनु वेदिकाग्रे, चन्दनार्द्राणि सूत्राणि चतुर्दश प्रागायतानि उदगायतानि च आस्फाल्य, तेषु एकोनसप्तत्युत्तरशतकोष्ठेषु धान्यपीठानु-रूप्येण षोडशाङ्गुलायामविस्तारेषु ब्रह्मादीशानपर्यन्तं नव नव पदानि एकाधिकाशीतिसंख्याकानि कलशास्पदानि विसृज्य, शेषाणि अष्टोत्तराशीतिसंख्याकानि वीथ्यर्थं सम्मार्ज्य, प्रतिपदं व्रीह्याढकेन तदर्धेन अर्धार्धेन वा तण्डुलेन तदर्धेन तिलेन च

पीठिकां आरचय्य, तदुपरि द्वौ द्वौ दर्भौ प्रत्यस्य, तदुपरिष्टात्, सौवर्णान् राजतान् ताम्रान् वा मृण्मयान् पक्वबिम्बफलोपमान् अच्छिद्रान् स्वनवतः कालमण्डलवर्जितान् अभिन्नान् पाषाण-स्फोटवर्जितान् द्रोणेन तदर्धेन वा वारिणा परिपूरणोचितान् सप्तदशकुम्भान् वार्याढकेन पूरणोचितान् चतुष्षष्टिशुद्धोदक-कुम्भान् च तन्तुना 'इन्द्रं नत्वा' इति परिवेष्टितान् विष्णुगायत्र्या प्रक्षाल्य, कलशास्पदमेदिन्याः पश्चिमे भागे धान्यपीठं विधाय आचार्यः स्वयं भूतशुद्धिं कृत्वा, पुण्याहं वाचयित्वा, संप्रोक्ष्य, तस्मिन् प्रागग्रान् उदगग्रान् वा दर्भान् संस्तीर्य, तेषु एतान् ओं इति ब्रह्मादीशानान्तं अधोमुखान् संस्थाप्य, तेषां उपरि ओं पौं नमः पराय परमेष्ठ्यात्मने नमः इति त्रीन् त्रीन् दर्भान् विन्यस्य, प्राङ्मुखः सन् अर्घ्यतोयेन ओं यां नमः पराय पुरुषात्मने नमः इति प्रोक्ष्य, ओं रां नमः पराय विश्वात्मने नमः इति अक्षतान् विकीर्य, ओं वां नमः पराय निवृत्त्यात्मने नमः इति उत्तानीकृत्य, विधिवत् अग्निं संसाध्य,, विष्णुगायत्र्या आज्येन स्नपनद्रव्याणि संसिच्य, यथोचितं वस्त्रपूतैः घृतादि-स्नपनद्रव्यैः तत्तन्मन्त्रैः कुम्भान् आपूरयेत ।

ओं लां नमः पराय सर्वात्मने नमः इति सप्तदशकलशान् उद्धृत्य, तेषु एकं मध्यमनवकमध्यमं कुम्भं द्रोणप्रमाणेन घृतेन ओं वासुदेवाय नमः इति संपूर्य, मध्ये संस्थाप्य, तादृशप्रमाणेन उष्णोदकेन आपूर्य ओं पुरुषाय नमः इति घृतकुम्भस्य प्राच्यां च, तस्य आग्नेयदिक्कुम्भं माणिक्यपद्मरागनीलवज्रपुष्यराग-

प्रवालमौक्तिकमरतकवैदूर्यनामभिः नवरत्नैः सरत्नोदकं ओं केशवाय नमः इति संपूर्य, तद्याम्यायां सोदकुम्भं कदलीदाडिम चूतामलकबिल्वनालिकेरपनसमातुलुङ्गाभिधैः भिन्नैः फलैः ओं सत्याय नमः इति, घृतस्य नैर्ऋतकुम्भं लोहोदकेन सुवर्णरजत-ताम्रसीसत्रपुकांस्यायोभिधानैः प्रत्येकं निष्कप्रमाणैः सप्तभिः लोहैः 'ओं नमो नारायणाय' इति तत्पश्चिमे सजलं कुम्भं रजनीसूर्यवर्तिनीसहदेवीशिरीषसदाभद्रकुशाग्रैः मार्जनद्रव्यैः प्रत्येकं मुष्टिप्रमाणैः ओं अच्युताय नमः इति, तस्य मारुतं सजलं कुम्भं चन्दनकुष्ठकुङ्कुमागरुशीरह्रीवेरगिरिसंभवमांसीमु-राभिधैः पृथक् पलमितैः गन्धद्रव्यैः ओं माधवाय नमः इति, तस्य कौवेरं सजलं कुम्भं नीवारवेणुशालि प्रियङ्गुयवकङ्कुषाष्टिक-गोधूमतण्डुलैः प्रत्येकं मुष्टिमात्रैः ओं अनन्ताय नमः इति, तस्य ऐशानं सजलं कुम्भं यववेणुयवव्रीहिभिः प्रत्येकं कुडुप-प्रमाणैः ओं गोविन्दाय नमः इति च संपूर्य, ब्रह्मस्थाननवकस्य प्राच्यां कुम्भनवकस्य मध्यमं कुम्भं सोदकं पाद्याभिधानं तुलसीपद्मदूर्वाक्षतश्यामाकविष्णुपर्णीबिल्वपत्रैः पलमात्रेण चन्दनेन च 'ओं विष्णवे नमः' इति, याम्यनवकस्य मध्यमं अर्घ्याख्यं सोदकं कुम्भं सिद्धार्थाक्षतकुशाग्रपूर्वोक्तफलयवतिल-चन्दनपुष्पैः प्रत्येकं मुष्टिमात्रैः, चन्दनेन त्रिनिष्कमात्रेण ओं मधुसूदनाय नमः इति, पश्चिमकुम्भनवकस्य मध्यमं उपस्पर्श-नाख्यं सजलं कुम्भं तक्कोलचंपकमुकुलकर्पूरजातीफलैलालवङ्ग-त्वक्चन्दनपुष्पैः प्रत्येकं पलार्धपरिमाणैः ओं त्रिविक्रमाय नमः,

उत्तरनवकस्य मध्यमं पञ्चगव्याख्यं कुम्भं दधिद्विगुणेन आधारेण, तस्मात् त्रिगुणेन पयसा तच्चतुर्गुणेन मूत्रेण तस्मात् चतुर्गुणेन शकृत्वारिणा च,

"गोमूत्रं विष्णुगायत्र्या[1] गन्धद्वारेति[2] गोमयम् ।
आप्यायस्वेति[3] च क्षीरं दधिक्राविण्णेति वै दधि[4] ॥
घृतं शुक्रमसीत्येवं[5] गव्यानि सह योजयेत् ॥"

अथवा विष्णुगायत्र्या, यद्वा "परमेष्ठीशकृन्मन्त्रः गोमूत्रस्य तु पूरुषः । विश्वमन्त्रः भवेत् दध्नः निवृत्तिः सर्पिषो भवेत् । पयसः सर्वमन्त्रः स्यात् यद्वाचाष्टाक्षरेण वा ।" एवं संयोज्य, देवस्यत्वेति[6] सर्वाणि एकीकृत्य, एवं साधितेन एतेन

---

१ ओं नारायणाय विद्महे वासुदेवाय धीमहि,
तन्नो विष्णुः प्रचोदयात् ॥

२ ओं गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥

३ ओं आप्यायस्व समेतु ते विश्वतः सोमवृष्ण्यम् ।
भवा वाजस्य संगथे ॥

४ ओं दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः
सुरभिनो मुखा करत् प्रण आयूंषितारिषत् ॥

५ ओं तेजोऽसि शुक्रमस्यमृतमसि धाम नामासि ।
प्रियं देवानामनाधृष्टं देव यजनमसि ॥

६ ओं देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । आददेऽध्वरकृतं देवेभ्य इन्द्रस्य बाहुरसि दक्षिणः सहस्रभृष्टिः शततेजा वायुरसि तिग्मतेजा द्विषतो वधः ॥

पञ्चगव्येन द्रोणमानेन। एवं संयोजनप्रकारः स्नपनविधौ, प्रोक्षणे तु एतत्सर्वं पञ्चकं समं, प्राशने तु गोमयेन समं मूत्रं दधिस्यात् द्विगुणं ततः। ततः चतुर्गुणं सर्पिः सर्पिषोऽष्टगुणं पयः। प्राशने पञ्चगव्यस्य प्रमाणमिदमीरितम्॥ द्रोणमानं[1] पञ्चगव्यं घृतमानं च तादृशं। तादृगेव दधि क्षीरं तावदेव च माक्षिकं॥ अर्धं वास्यादाढकं वा न्यूनं चेदासुरं भवेत्। गृहार्चास्नपने न्यूनं प्रस्थेनैव[2] प्रकल्पयेत्। पञ्चगव्यानि गृह्णीयात् मृत्पात्रे नूतने शुभे॥ कपिलायाः जरायाः वा (?) पञ्चगव्यं प्रशस्यते। न आर्तायाः न च गर्भिण्याः न वृद्धायाः कदाचन॥ न अवत्सायाः उपादद्यात् धेनोर्मूत्रं शकृद्द्वयम्। भूमिष्ठं गोमयं ग्राह्यं सोष्णं कृम्याद्यदूषितम्॥ निष्पीड्य सम्यक् गृह्णीयात् गोमयस्य रसं पुनः। सद्यस्तप्तं घृतं शुद्धं अहोरात्रोषितं दधि॥ क्षीरं ग्राह्यमतप्तं च दशाहाज्जन्मनः परम्।"

एवं सम्पाद्य, ओं वामनाय नमः इति, आग्नेयनवकस्य मध्यमं कुम्भं दध्ना ओं श्रीधराय नमः इति नैर्ऋतकुम्भनवकस्य मध्यमकुम्भं पयसा ओं हृषीकेशाय नमः इति, वायवीयकुम्भ-नवकस्य मध्यमं कुम्भं मधुना ओं पद्मनाभाय नमः इति ऐशान्यां कुम्भनवकस्य मध्यमं कुम्भं शमीपलाशखदिरबिल्वा-श्वत्थविकङ्कतौदुम्बरन्यग्रोधत्वग्भिः पलार्धपरिमिताभिः कृतेन

---

१ चार सेर का १ आढक ८ आढक का १ द्रोण।

२ एक सेर का एक प्रस्थ।

कषायेन ओं दामोदराय नमः इति च संपूर्य, विष्णुगायत्र्या सप्तदशद्रव्यकुम्भान् संस्थाप्य, मध्यमनवकस्य पूर्वनवकाद्यष्टनवकमध्यद्रव्यकुम्भानां च परितः अष्टौ अष्टौ शुद्धोदककलशान् द्वादशाक्षरमन्त्रेण संस्थापयेत्।

पूर्वोक्तद्रव्यालाभे तु—

पाद्ये द्रव्यान्तरालाभे दूर्वाद्येऽपि च सर्षपः।
शस्तमाचमनीये तु तक्कोलं मार्जनांभसि॥
सहदेवी गन्धतोये चन्दनक्षोद इष्यते।
कषायतोये च अश्वत्थं शीतं उष्णोदके अर्सात॥
रत्नोदके वज्रमेकं कदल्येका फलांभसि।
सुवर्णं लोहपानीये शालितण्डुलमक्षते॥
यवोदकघटे व्रीहिः शस्यते कमलासन।
अलब्धे दधिनि क्षीरं क्षीराभावे तु तद्दधि॥
मधुन्यलब्धे सर्पींषि तदलाभे भवेन्मधु।
अलाभे पञ्चगव्यानां घृतमेवैकमिष्यते॥
पञ्चगव्येषु यस्य स्यात् अलाभः तत्पदे घृतम्।"

इति भगवदुक्तेः।

एवं द्रव्यपूरणं कृत्वा परिस्तीर्य, सप्तभिः पञ्चभिः त्रिभिः वा दर्भैः कृतान् कूर्चान् कुम्भेषु अवागग्रान् महाकुम्भें चतुर्विंशतिभिः दर्भैः कृतं कूर्चं कर्णमानं तथा निक्षिप्य, तान्

चक्रमन्त्रेण[1] शरावैः पिधाय, 'युवा सुवासा'[2] इति मन्त्रेण वाससा प्रत्येकं अलाभे प्रतिव्यूहं वा सर्वान् आवेष्ट्य, आचार्यः मूर्तिपैः ब्राह्मणैः सह देवसमीपं आसाद्य, 'उत्तिष्ठ ब्रह्मणस्पते'[3] इति देवं उत्थाप्य, 'भद्रं कर्णेभिः'[4] इति स्नानासनवेदिकायां विनिवेश्य, वेदविद्भिः ब्राह्मणैः अयुग्मैः सह पुण्याहं वाचयित्वा, तान् यथा वित्तानुसारं तोषयित्वा, गुरुः प्राणानायम्य, स्थापितेषु तोरणध्वजकुम्भेषु तत्तद्दैवतानि आवाह्य, अभ्यर्च्य, मण्डपद्वारेषु तौर्यत्रिकं प्रवर्तयित्वा, पूर्वं संसाधिताग्नौ यावत्कलशसंख्यया मूलमन्त्रेण आज्याहुतीः हुत्वा, अन्यस्मिन् संपाताज्यं संगृह्य, चरुणा नृसूक्तेन षोडशाहुतीश्च हुत्वा, देवं गन्धादिभिः अभ्यर्च्य, कुम्भेषु संपाताज्यारोपणं आरचय्य, घृतादिद्रव्यकुम्भेषु आधारादिपद्मान्तं पीठं संकल्प्य अभ्यर्च्य घृतकुम्भे, ओं नमो भगवते परमात्मने वासुदेवायागच्छागच्छ इति आवाह्य, अभ्यर्च्य,

---

१ ओं सुदर्शनाय हेतिराजाय स्वाहा ।

२ ओं युवाः सुवासा परिवीत आगात् स उ श्रेयान् भवति जायमानः । तन्धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः ।

३ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे ।
उपप्रयन्तु मरुतः सुदानव प्रासूर्भवा सचा ॥

४ भद्रं कर्णेभिः शृणुयामदेवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेम महिदेवहितं यदायुः ॥

अर्घ्यादिताम्बूलान्तं संपूज्य उष्णोदकफलमार्जनाक्षतरत्नलोहगन्धयवपाद्यार्घ्याचमनपञ्चगव्यदधिपयोमधुकषायकुम्भेषु पुरुषसत्याच्युतानन्तकेशवनारायण माधवगोविन्दविष्णुमधुसूदनत्रिविक्रमवामनश्रीधरहृषीकेशपद्मनाभदामोदरान् क्रमेण आवाह्य अभ्यर्च्य, अर्घ्यादिताम्बूलान्तं संपूज्य, सर्वेषु शुद्धोदकुम्भेषु च अष्टाक्षरेण आवाह्य अभ्यर्चयेत् ।

तदनु ओं धान्याधिदेवतायै भूम्यै नमः ओं कूर्चाधिदेवताय अस्त्राय फट्, ओं चक्रिकाधिदैवताय सुदर्शनाय नमः, ओं वासोधि दैवताय विष्णवे नमः, अन्येषां यागद्रव्याणां ओं जनार्दनाय नमः इति च आवाह्य अभ्यर्च्य देवस्य विष्णुगायत्र्या अर्घ्यं, त्रीणि पदेति पाद्यं, आपः पुनन्तु इति आचमनं, तद्विष्णोः इति दन्तधावनं, विष्णुगायत्र्या जिह्वानिर्लेपनं, वामदेव्यं इति अभ्यङ्गं, विष्णोर्नुकं इति आमलकवारि, न ते विष्णुः इति अभिषेकं, अग्निः मूर्धेति सोतवस्त्रं, प्रणवेन वस्त्रं उत्तरीयं च दत्त्वा, पुनः अर्घ्यादिदीपान्तं अर्चयित्वा, छिन्नैकतन्तुं सपुष्पं समर्चितं पाद्यकुम्भं विष्णुगायत्र्या उद्धृत्य, मूर्तिपदत्तां आचार्यः करे गृहीत्वा, पाद्यकुम्भस्थावाग्रकूर्चाहृतजलेन देवस्य शिरसि प्रणवेन संप्रोक्ष्य, विष्णुगायत्र्या पाद्यवारिणा, प्रविष्णुरस्तु इति अर्घ्यजलेन, न ते विष्णुः इति आचमनाम्बुना, विष्णोः कर्माणि इति पञ्चगव्येन, दधिक्राविण्णोति दध्ना, पयोव्रतसाम्ना पयसा, मधुवातेति मधुना, ओषध्यः इति कषायेन, त्वं विष्णुः इति

उष्णजलेन याः फलिनीः इति फलवारिणा, शन्नो देवीः इति मार्जनांभसा, सावित्र्या अक्षतोदकेन, त्रातारमिति रत्नोदकेन, महाव्याहृत्या लोहवारिणा, गन्धद्वारेति गन्धाम्बुना, शतधारेति यवोदकेन, घृतस्नातेति साम्ना घृतेन च, अथवा पुरुषसूक्तस्य ऋग्भिः षोडशभिः इदं विष्णुः इत्यनयार्चा च वा, द्वादशाक्षरेण षडक्षरेण विष्णुगायत्र्या स्वैः स्वैः मूर्तिमन्त्रैः वा पाद्यादि-घृतान्तं प्रतिद्रव्यकुम्भस्नपनं उपस्नानस्रोतवस्त्रोत्तरीयार्घ्याद्या-चमनगन्धपुष्पधूपदीपान्तं देवं अभ्यर्च्य अभिषिच्य, द्रव्य-कुम्भोद्धरणान्तरान्तरा शुद्धोदकुम्भान् द्वादशाक्षरेण उद्धृत्य अभिषिच्य, तदनु नव सप्त पञ्च त्रीन् वा कुम्भान् एकं वा कुम्भं पुण्याहपुरस्सरं हरिद्रापूर्णतण्डुलस्वर्णचूर्णैः संपूर्य, धान्यपीठे निधाय, तान् सवस्त्ररत्नलोहकूर्चपल्लवापिधानान् कृत्वा, तत्र श्रियं आवाह्य अभ्यर्च्य, श्रीसूक्तेन तैः अभिषिच्य,

ततः देवं प्रदक्षिणीकृत्य, नत्वा, सहस्रधारया स्नापयित्वा, प्रणवेन अलङ्कारासनं दत्त्वा, अर्घ्यं आरभ्य नीराजनान्तं इष्ट्वा, खारिद्रोणं तदर्धं वा तण्डुलं दत्त्वा, चतुर्विधं अन्नं निवेद्य, नित्यहोमं कृत्वा, ततः सुखासीनं देवं नत्वा, स्तुत्वा, मनोरथं प्रार्थयेत् ।

यजमानोऽपि गुरवे शतनिष्कपरिमितां दक्षिणां ऋत्विजां तदर्धं पादं वा परिचारकवेदपाठकादीनां दत्त्वा, पूजार्थं आहृतं शिष्टं सर्वं आचार्याय दद्यात् । एतदधमोत्तमम् । एतेषु एकोत्तराशीतिकुम्भेषु सर्वकोणस्थद्वात्रिंशच्छुद्धोदकुम्भहीनं

अधममध्यमम् । सर्वैः चतुष्पष्टिशुद्धोदकुम्भैः हीनं अधमाधमम् ।

अथ मध्यमोत्तमस्नपनविधिः उच्यते—

मध्ये पूर्वोक्ताधमोत्तमैकाशीतिकलशस्थापने विहितेन सूत्रवर्त्मनैव तद्बहिः चतुर्दिक्षु च तथा सूत्राणि आस्फाल्य, द्वे द्वे पङ्क्ती वीथ्यर्थं तत्परितः सम्मार्ज्य, शिष्टेषु एकाशीतिपदेषु मध्ये कुम्भानां नवकं इन्द्रादिसोमान्तासु दिक्षु प्रतिदिशं षट्कं, आग्नेयादिषु कोणेषु प्रत्येकं चतुष्कं, एवं एकोनपञ्चाशत्कलशान् संस्थाप्य, शेषाणि द्वात्रिंशत्पदानि वीथ्यर्थं परिमार्ज्य, एवं चतुर्दिक्षु कृत्वा, प्राक्स्थितैकोनपञ्चाशत्कलशमध्यनवकमध्यकुम्भं ओं वराहाय नमः इति गुडोदकेन, दक्षिणैकोनपञ्चाशत्कलशमध्यनवकमध्यमं ओं नारसिंहाय नमः इति इक्षुरसेन, पश्चिमैकोनपञ्चाशत्कलशमध्यनवकमध्यमं ओं श्रीधराय नमः इति नालिकेरजलेन, उत्तरैकोनपञ्चाशत्कलशमध्यनवकमध्यमं शान्तिकुम्भं तुलसीवेणुनीवारशालिश्वेतसर्षपतिलैः तुलसीं विना प्रत्येकं कुडुवप्रमाणैः मुष्टिमात्रतुलस्या च शान्तिद्रव्याभावे तुलस्या एकया वा ओं हयग्रीवाय नमः इति च [गुडाभावे च इक्षुरसं तस्य अभावे गुडोदकम् । गुडमानं पलाशीतिः अर्धं अर्धार्धमेव वा । नालिकेरजलाभावे तत्स्थाने क्षीरमिष्यते ।] आपूर्य, गुडोदके ओं वराहाय नमः, इक्षुरसे ओं नृसिंहाय नमः, नालिकेरोदके ओं श्रीधराय नमः, शान्तिवारिणि ओं हयग्रीवाय नमः इति आवाह्य अभ्यर्च्य, 'मधुवातेति' गुडोदकेन 'मधुनक्तं' इति इक्षुरसेन, 'मधुमान्न'

इति नालिकेरांभसा, 'वेदाहम्' इति शान्तिजलेन, जितं ते इति शुद्धोदकुम्भैः संस्नाप्य, तदनु पाद्यादिघृतान्तैः स्नपनं आचरेत्। स्नपनान्ते सर्वत्र निशाचूर्णैः स्नपनं कुर्यात्। इति मध्यमोत्तमस्नपनविधिः।

एकोत्तराशीतिकलशस्थ चतुष्षष्टिशुद्धोदकुम्भान् तत्परितः चतसृषु दिक्षु स्थापितैकोनपञ्चाशत्कलशस्थद्विनवत्युत्तरसंख्याकान् शुद्धोदकुम्भान् च क्रोडीकृत्य, षट्पञ्चाशदुत्तरशतशुद्धोदकुम्भेषु अर्धशुद्धोदकुम्भहीनं मध्यममध्यमं सर्वशुद्धोदकुम्भैः विना मध्यमाधमम्।

अथ तावत् उत्तमोत्तमस्नपनविधिः उच्यते—

पूर्वोक्तैकाशीतिकलशास्पदस्य पूर्वाद्यासु चतसृषु दिक्षु प्रतिदिशं च एकोनपञ्चाशत्कुम्भेषु स्थापितेषु सत्सु, एकाशीतिकलशस्थानस्य आग्नेयादिषु चतुर्षु कोणेषु प्रतिकोणं तत्तत्सूत्रवर्त्मनैव पूर्ववत् सूत्राणि आस्फाल्य, तथैव एकोनपञ्चाशत्कलशान् संस्थाप्य, आग्नेयैकोनपञ्चाशत्कलशमध्यनवकमध्यमकुम्भं मङ्गलाख्यं इन्द्रवल्ल्यङ्कुराश्वत्थपल्लवकुशेशयैकपत्राम्बुजचन्दनकुष्ठकुङ्कुमरोहिण्द्रुमयूथिकामल्लिकोत्पलत्रयजातीचंपककेतकीभिः द्वौ इन्द्रवल्ल्यङ्कुरौ अश्वत्थपल्लवं मुष्टिमात्रं एकपत्राम्बुजमेकं कुशेशयमेकं पुष्पाष्टकं मुष्टिमात्रं चन्दनादि एकैकं पलं ओं नमो भगवते वासुदेवाय इति, नैर्ऋतैकोनपञ्चाशत्कलशमध्यनवकमध्यकुम्भं सर्वौषधाख्यं मांसीकुष्ठहरिद्राद्वितयमुराशैलेयचम्पकमुकुलमुस्तावचाकर्पूरैः प्रत्येकं पलमितैः

चूर्णैः ओं नमो भगवते संकर्षणाय इति, वायव्यैकोनपञ्चाशत्कलशमध्यनवकमध्यमकुम्भं सर्वगन्धाख्यं कर्पूरकुङ्कुमकुष्ठमांसीमलयजमुराप्रियङ्गुकेसरमुस्तातमालनागकेसरमूलाद्वितयकच्चोरसुरपर्णीकेसरोशीरतारलोध्रहरिचन्दनागरुद्वितयासितकुष्ठकालेयग्रन्थिपल्लवचम्पकमुकुलैः चूर्णितैः प्रत्येकं पलसम्मितैः ओं नमो भगवते प्रद्युम्नाय इति, ऐशानैकोनपञ्चाशत्कलशमध्यनवकमध्यमकुम्भं मूलौषधाख्यं व्याघ्रीसिह्मीबलाशरपुंखाशतावरीबिल्वमूलवचाशुण्ठीगोरण्डीशतमूलैः पृथक्पलमितैः चूर्णितैः ओं नमो भगवते अनिरुद्धाय इति [मङ्गलोदकवस्तूनां अलाभे चन्दनं वरं। सर्वौषधीनां एतासां अलाभे कुष्ठमुच्यते। अलाभे सर्वगन्धानां शस्यते चन्दनं वरं। मूलौषधीनां सर्वासां अलाभे शस्यते बला।] आपूर्य, मङ्गलोदके वासुदेवं, सर्वौषधिकुम्भे संकर्षणं, सर्वगन्धकुम्भे प्रद्युम्नं, सर्वमूलौषधिकुम्भे च अनिरुद्धं आवाह्य, संपूज्य, विष्णोर्नुकमिति मङ्गलाम्बुना, ओषध्य इति सर्वौषधिजलेन, नारायणानुवाकेन सर्वगन्धाम्बुना, वा ओषधीरिति सर्वमूलौषधिजलेन, अष्टाक्षरेण शुद्धजलैश्च संस्नाप्य, अनन्तरं घृतान्तं स्नापयेत्। इत्युत्तमोत्तमम्।

सर्वत्र क्रोडीकृत्य अष्टाचत्वारिंशदुत्तरचतुश्शतशुद्धोदकुम्भेषु अर्द्धशुद्धोदकुम्भैः हीनं उत्तममध्यमम्। सर्वैः अष्टाचत्वारिंशदुत्तरचतुश्शतशुद्धोदकुम्भैः विना पञ्चविंशतिद्रव्यकुम्भैरेवकृतं उत्तमाधमम्।

"इतिस्नपननवकम्"

अथ अष्टोत्तरशतकलशस्नपनविधिः उच्यते—

कलशस्थापनाय प्रागायतेषु षट्सु उदगायतेषु च तथा सूत्रेषु आस्फालितेषु पञ्चविंशतिपदानि भवेयुः। तेषु मानुषे द्वादश पदानि हित्वा मध्ये ब्राह्मदिव्यस्थपदनवकं एकीकृत्य, सूत्रवर्त्मना कोष्ठानां यथाशतं भवति तथा कृत्वा, तत्र प्राच्यां अवाच्यां प्रतीच्यां उदीच्यां द्वे द्वे पङ्क्ती हित्वा, तत्परितः द्वे द्वे पङ्क्ती सम्मार्ज्य, तत्र ब्रह्मादीशांतासु दिक्षु विदिक्षु च चत्वारि कुम्भास्पदानि, मानुषे स्थाने ऐन्द्रादीशान्तासु दिक्षु विदिक्षु च नव पदानि कुम्भास्पदानि, एवं अनया रीत्या अष्टोत्तरशतकलशास्पदानि कल्पयेत्। एवं कलशान् संस्थाप्य, ब्राह्ममध्यकलशचतुष्टयाग्नेयपदकुम्भं पूर्वोक्तप्रमाणेन घृतेन, अवशिष्टान् त्रीन् शुद्धोदकेनापूर्य, तत्परितः पूर्वादीशान्ताष्ट-दिक्स्थिताष्टचतुष्काग्नेयकुम्भाष्टकं पाद्यदध्यर्घ्यक्रमेण उष्णोद-करत्नफललोहमार्जनगन्धाक्षतयवद्रव्यैः पूर्वोक्तमानैः आपूर्य, मानुषभागे प्राच्यादीशानान्तस्थिताष्टनवककुम्भाष्टकं क्षीरा-चमनमधुपञ्चगव्यकषायैः पूर्वोक्तमानैः क्रमेण आपूरयेत्।

एवं कृते द्रव्यकलशाः सप्तदश शुद्धोदकुम्भानां एकोत्तरा-शीतिः। एवं सर्वमपि क्रोडीकृत्य अष्टोत्तरशतं कलशानां भवति। देवमन्त्राभिषेकाश्च पूर्ववत्।

अथ एकोनपञ्चाशत्कलशस्नपनविधिः उच्यते—

प्रागायतानि दश तथा उदगायतानि च सूत्राणि आस्फा-लयेत्। एवं चेत् एकोत्तराशीतिपदानि भवेयुः। कलशास्पदस्य

चतसृषु दिक्षु द्वे द्वे पङ्क्ती हित्वा, ततः एकस्यां एकस्यां पङ्क्तौ सम्मार्जितायां मध्ये नवकं दिक्षु प्रतिदिशं षट्कानि विदिक्षु प्रत्येकं चतुष्कानि एवमेकोनपञ्चाशत्कलशास्पदानि भवेयुः। मध्ये नव, दिक्षु चत्वारः, विदिक्षु चत्वारः द्रव्यकुम्भाः भवन्ति। एवं चेत् सप्तदशद्रव्यकुम्भाः द्वात्रिंशत्शुद्धोदकुम्भाः मन्त्रदेवताः स्नपनं च पूर्ववत्।

## अथ पञ्चविंशकलशस्नपनविधिः—

यथा एकोत्तराशीतिपदानि भवेयुः, तथा सूत्राणि आस्फाल्य, चतसृषु दिक्षु एकैकां पङ्क्तिं हित्वा, ततः द्वे द्वे पङ्क्ती सम्मार्ज्य, मध्ये नव प्रतिदिशं त्रीन त्रीन प्रतिकोणं एकैकं कलशानां संस्थाप्य, मध्यस्था नव त्रिकचतुष्टयमध्यस्थाश्च कोणचतुष्टयस्थाः चत्वारश्च द्रव्यकुम्भाः सप्तदश अष्टौ कुम्भाः शुद्धोदकपूरिताः। द्रव्यमन्त्रदेवताः स्नपनं पूर्ववत्।

यद्वा चन्दनागरुकाश्मीरकुष्ठतगरवीणासितागरुहार-चन्दनह्रीवेरैः गन्धद्रव्यैः मध्यकुम्भनवकं, दिक्षु स्थितान चतुरः विदिक्षु स्थितान चतुरश्च तमालसितकुष्ठसुरपर्णीरस-कर्पूरनागकेसरमुस्ताचम्पकमुकुलप्रियङ्गुपुष्पकालेयग्रन्थिपल्लव-बीजमांसीखर्जूरशैलेयह्रीवेरसुरद्रुममुरैः वा सर्वान कुम्भान पूरयेत्।

## अथ षोडशकलशस्नपनविधिः—

प्रागायतानि नव तथा उदगायतानि च सूत्राणि तथा सति चतसृषु दिक्षु एकैकां पङ्क्तिं हित्वा, द्वयोः द्वयोः पङ्क्त्योः

सम्मार्जितयोः मध्ये चत्वारि दिक्षु द्वे द्वे विदिक्षु च एकैकं. एवं षोडश कलशास्पदानि भवेयुः। मध्यचतुष्कस्य आग्नेयं कुम्भं पूर्वोक्तैः नवभिः रत्नैः नैर्ऋतं तथा सप्तलोहैः, वायव्यं तथा गन्धद्रव्यैः ऐशानं तथा आज्येन च आपूर्य पूर्वादिस्थित-द्वादशकुम्भान् पाद्यार्घ्यदध्याचमनपञ्चगव्यक्षीराज्यमार्जनमधु-कषायकुशोदकयवैः पूर्वोक्तमानैः क्रमेण आपूर्य, पुरुषादि-दामोदरान्तान् आवाह्य, नृसूक्त षोडशर्ग्भिः स्नपनं कुर्यात्।

## अथ द्वादशकलशस्नपनविधिः—

प्रागायतानि सप्त तथा उदगायतानि च सूत्राणि. तथा सति मध्ये चतुष्कं विहाय चतसृष्वपि दिक्षु एकैकां पङ्क्तिं संमृज्य, कोणेषु चतुर्षु त्रिषु त्रिषु पदेषु मृष्टेषु, चतुष्कस्य बहिः प्राच्यां अवाच्यां प्रतीच्यां उदीच्यां द्वे द्वे पदे भवतः। एवं सति द्वादश कलशास्पदानि भवेयुः। मध्यचतुष्कस्य आग्नेयं कुम्भं पूर्वोक्तैः नवभिः रत्नैः नैर्ऋतं लोहैः, वायव्यं गन्धद्रव्यैः, ऐशानं सर्पिषा च आपूर्य. तत्पूर्वाद्युत्तरान्तपदस्थितान् अष्टौ कुम्भान् क्रमेण पाद्यदध्यर्घ्यक्षीराचमनमधुपञ्चगव्यफलैः पूर्वोक्त-मानैः आपूरयेत्। मन्त्रदेवताः पूर्ववत्।

एतेषां अलाभे तु मध्यचतुष्कं आग्नेयं आरभ्य बहि-स्स्थितसोमकुम्भान्तं कोष्ठागरुकालीयग्रन्थिपल्लवबीजचन्दन-काश्मीरमांसीतमालमुरपर्वतोत्थसुवर्णरज ~ कणचम्पकमुकुलख-र्जूरद्रवैः प्रादक्षिण्येन आपूरयेत्।

अथ नवकलशस्नपनविधिः—

प्रागायतानि सूत्राणि चत्वारि तथा उदगायतानि च, तथा सति पदानि नव भवेयुः। मध्यकुम्भं आरभ्य ऐशानान्तं घृतपाद्यदध्यर्घ्यक्षीराचमन मधुपञ्चगव्यफलैः क्रमेण, नवरत्नैः वा, पूरयेत्। मन्त्रदेवताः पूर्ववत्।

अथ पञ्चकलशस्नपनविधिः—

एकः मध्ये चतसृषु अपि दिक्षु चत्वारः, मध्यं आरभ्य सौम्यपर्यन्तमणिप्रवालमौक्तिकवज्रवैदूर्यपञ्चलोहैः, यद्वा मधुगुडाज्यदधिपयोभिः, पञ्चामृतैः क्रमेण, अथवा प्रत्येकशः पञ्चगव्यैः वा पूरयेत्। पञ्चगव्यस्य मन्त्रदेवताः पञ्चोपनिषदः।

अथ एककलशस्नपनम्—

एकं कलशं मध्ये संस्थाप्य पञ्चामृतैः पञ्चगव्यैः वा पूरयेत्।

गुरवे यथाशक्ति दक्षिणा निष्कमाना देया।

इति श्रीवराहगुरुविरचितायां क्रियाकैरवचन्द्रिकायां
उत्तमादिस्नपनविधिः नाम
एकत्रिंशः परिच्छेदः



## अथ द्वात्रिंशः परिच्छेदः

# एकोत्तरसहस्रकलशस्नपनविधिः

अथ एकोत्तरसहस्रकलशस्नपनविधिः उच्यते—

पूर्वेद्युः एव भगवतः पूर्ववत् अङ्कुरप्रतिसरअधिवासान् च कृत्वा, द्वात्रिंशद्धस्तविस्तारं द्विगुणेन आयतं कलशास्पद-भूभागवैपुल्यअनुगुणं महत् अन्यत् मण्डपं कल्पयित्वा, यथापुरं द्वारादीनि च, कलशास्पदभूमिं पञ्चविंशतिधा विभज्य, मध्यमं ब्राह्मं पदं एकोत्तराशीतिघटास्पदं यथा भवति तथा विभज्य, ब्रह्मादीशानान्तं नव नव पदानि एकाशीतिघटा-स्पदानि हित्वा, शिष्टानि अष्टोत्तराशीतिपदानि संमार्ज्य प्रतिपदं व्रीहीणां आढकेन तण्डुलानां तदर्धेन तदर्धेन तिलानां पीठिकां कृत्वा, तदुपरि द्वौ द्वौ दर्भौ विन्यस्य, तदनु सुवर्णादि-लोहजान् मृण्मयान् पूर्वोक्तलक्षणयुतान् द्रोणेन वा जलानां तदर्धेन वा पूर्यान्— द्रव्यकुम्भान्, जलानां आढकेन पूर्यान् च, कलशान् विष्णुगायत्र्या प्रक्षाल्य, मृण्मयान् तु वामे करतले विन्यस्य, तदितरेण करेण तन्तुं गृहीत्वा वेष्टिततन्तूनां अन्तरालं यवमात्रं अर्धाङ्गुलमात्रं वा यथा भवेत् तथा 'इन्द्रं नत्वे' ति मन्त्रेण आवेष्ट्य, कलशास्पदमेदिन्याः पश्चिमे भूतले धान्यपीठं विधाय, पुण्याहं वाचयित्वा प्रोक्ष्य, तस्मिन् प्रागग्रान् उदगग्रान् वा दर्भान् संस्तीर्य, तत्र ब्रह्मादीशानपर्यन्तं कुम्भान् अधोमुखान् 'ओं' इति विन्यस्य, तेषां उपरि पूर्ववत्

त्रीन् त्रीन् दर्भान् परमेष्ठिमन्त्रेण विन्यस्य, अर्घ्यतोयेन पुरुषमन्त्रेण प्राङ्मुखः प्रोक्ष्य, विश्वमन्त्रेण अक्षतान् विकीर्य, निर्वृत्तिमन्त्रेण उत्तानीकृत्य, तदनु विधिवत् अग्निं संसाध्य सर्पिषा विष्णुगायत्र्या अष्टोत्तरशताहुतीः हुत्वा संपातेन स्नपनद्रव्याणि संसिच्य, वस्त्रापूतैः स्नपनद्रव्यैः तत्तद्देवतामन्त्रैः कलशान् संपूर्य, द्रव्यकलशान् उद्धृत्य विष्णुगायत्र्या यथास्थानं वक्ष्यमाणेन विधिना स्थापयेत् ।

मध्ये ब्राह्मे भागे एकोत्तराशीतिघटाः, दिव्ये ऐन्द्रे दिव्ये याम्ये वारुणे दिव्ये सौम्ये च प्रतिदिशं एकोत्तराशीतिकलशाः, दिव्यभागाग्नेयादिकोणचतुष्टयेष्वपि प्रतिकोणं एकोनपञ्चाशत्संख्याकाः कलशाः ।

तेषां तु प्रागुदगग्राणि दश सूत्राणि आस्फाल्य पूर्वादिदिक्षु द्वे द्वे पङ्क्ती हित्वा, परितः एकैकां पङ्क्तिं संमार्ज्य, मध्ये नव पूर्वाद्युत्तरान्तं षट् षट् , आग्नेयादीशान्तं चत्वारि चत्वारि कलशाः स्थाप्याः ।

तत्परितश्च मानुषे भागे षोडशस्थानेषु च प्रतिस्थानं पञ्चविंशतिकलशाः स्थाप्याः । तेषां तु प्रागुदगग्राणि दश सूत्राणि आस्फाल्य, चतसृषु दिक्षु एकैकां पङ्क्तिं हित्वा, तदनु द्वे द्वे पङ्क्ती सम्मार्ज्य, मध्ये नवदिक्षु त्रीणि त्रीणि विदिक्षु एकैकां, एवं पञ्चविंशतिकलशान् स्थापयेत् ।

एवं चेत् कलशानां सहस्रं एकोत्तरं भवति ।
ब्राह्मे मध्यनवके नवकमध्यमे सर्वलोहान् ॥

सुवर्णरजतताम्रसीसत्रपुकांस्यायस्सारान् निष्कमात्रान्, माणिक्यपद्मरागनीलवज्रपुष्यकप्रवालमुक्तामरतकवैदूर्याणि, कदलीबीजपूरकाम्रामलकबिल्वनालिकेरपनसमातुलुङ्गानि मांसीकुष्ठहरिद्राद्वितयमुरशैलेयचम्पकमुकुलमुस्तावचाकर्पूराणि पृथक् पृथक् पलमात्राणि, कर्पूरकुङ्कुमकुष्ठमांसीचन्दनमुराप्रियङ्गुकेसरमुस्तातमालनागकेसरमूलद्वयकचोरसुरपर्णीकेसरोशीरतगरलोध्रहरिचन्दनअगरुद्वयसितकुष्ठकालेयग्रन्थिपल्लवचम्पकमुकुलानि प्रत्येकं पलमानानि चूर्णीकृतानि, श्रीवत्सवनमालाशङ्खचक्रगदाम्बुजखड्गशार्ङ्गाणि स्वर्णनिर्मितानि प्रत्येकं निष्कमानानि च सजले कुम्भे 'ओं नमो भगवते वासुदेवाय' इति विनिवेश्य, तं 'युवा सुवासा' इति वासोभ्यां आवेष्ट्य, सकूर्चपिप्पलदलापिधानं कृत्वा, तत्र योगपीठं संकल्प्य, तस्मिन् साङ्गं सपरिवारं वासुदेवं आवाह्य अर्घ्यादिदीपान्तं अभ्यर्च्य, ब्राह्मे तस्य प्राचीनकुम्भनवकमध्यमे कुम्भे सूर्यकान्तपद्मरागौ, तस्य पुरुषो देवता, ब्राह्मे आग्नेयकुम्भनवकमध्यमे कुम्भे वैदूर्यचन्द्रकान्तौ, तस्य वासुदेवः देवता, ब्राह्मे याम्यकुम्भनवकमध्यमे कुम्भे इन्द्रनीलायस्कान्तौ तस्य सत्यो देवता, ब्राह्मे नैर्ऋतकुम्भनवकमध्यमे कुम्भे प्रवालगरुडौ तस्य संकर्षणो देवता, ब्राह्मे वारुणकुम्भनवकमध्यमे कुम्भे पुष्यस्फटिकौ तस्य अच्युतः देवता, ब्राह्मे वायव्यकुम्भनवकमध्यमे कुम्भे पद्मरागमरतके तस्य प्रद्युम्नो देवता, ब्राह्मे सौम्यकुम्भनवकमध्यमे कुम्भे वज्ररजते तस्य आनन्दः देवता, ब्राह्मे रौद्रकुम्भनवकमध्यमे कुम्भे

ताम्रमौक्तिकं तस्य अनिरुद्धः देवता, सर्वेषु शुद्धोदकेषु मौक्तिकानि तेषां देवता नारायणः।

तस्य प्राच्यां दिव्ये भागे एकाशीतिघटास्पदे मध्यनवक-मध्यमे कुम्भे कदलीपनसाम्रमातुलुङ्गभव्यजंबूकेसरबदरीफलानि, तस्य देवता तत्त्वात्मा, तस्य ऐन्द्रनवकमध्यमे कुम्भे मातुलुङ्ग दाडिमफले, तस्य देवता पृथ्वी, यस्य आग्नेयनवकमध्यमे घटे जम्बूनारङ्गफले, तस्य देवता अपां अधिष्ठात्री, तस्य याम्यनवकमध्यमे घटे तक्कोलैलाफले, तस्य तेजस्वीपुरुषः देवता, तस्य नैर्ऋतकुम्भनवकमध्यमे कुम्भे क्षीरिकामलकफले, तस्य वायुर्देवता, तस्य वारुणनवकमध्यमे घटे द्राक्षाखर्जूरफले, तस्य आकाशात्मा देवता। तस्य वायव्यनवकमध्यमे घटे चूतपारावतफले, तस्य देवता मनः। तस्य सौम्यनवकमध्यमे घटे, क्षुद्रं पनसफलं, तस्य देवता अहङ्कारः, तस्य ऐशाननवक-मध्यमे घटे बिल्वकदलीफले तस्य देवता बुद्धिः, सर्वेषु शुद्धोद-कुम्भेषु बदरीफलानि, देवताः पूर्ववत्। अष्टाक्षरेण पञ्चोपनिषदैः कुम्भानां अभिमन्त्रणम्।

दिव्ययाम्ये एकाशीतिघटास्पदे मध्यनवकमध्यमे कुम्भे उशीरकुङ्कुमकुष्ठमांसीमलयजमुरह्रीवेरागरुपिष्टानि प्रत्येकं पलमात्राणि तस्य देवता त्रैलोक्यमोहनः, तस्य ऐन्द्रनवक-मध्यमे कुम्भे जलदवारेणमूले, तस्य देवता बभ्रुः, तस्य आग्नेयनवकमध्यमे घटे कर्पूरकाश्मीरे, तस्य देवता शौरिः। तस्य याम्यनवकमध्यमे घटे चम्पकमुकुलमांसीपिष्टे तस्य देवता

दाशार्हः, तस्य नैर्ऋतनवकमध्यमे कुम्भे चन्दनरक्तचन्दनतोयौ, तस्य देवता अन्नाधिपतिः, तस्य वारुणनवकमध्यमे कुम्भे सुरपर्णीगौररजसी तस्य देवता वैकुण्ठः, तस्य वायव्यनवकमध्यमे घटे गिरिजमूलप्रैयङ्गवमूलरजसी तस्य देवता पुरुषोत्तमः, तस्य सौम्यनवकमध्यमे कुम्भे कृष्णसितकुष्ठपिष्टे, तस्य देवता मुकुन्दः, तस्य ऐशाननवकमध्यमे कुम्भे कृष्णधवलागुरुतोयौ तस्य देवता वृषाकपिः अत्रशिष्टेषु शुद्धोदकेषु तमालपत्राणि, देवताः पूर्ववत्। पुरुषमन्त्रेण वा पवमानादिभिः सूक्तैः वा कुम्भाभिमन्त्रणम्।

दिव्यवारुणे एकोत्तराशीतिघटास्पदे मध्यनवकमध्यमे कुम्भे वापीसरित्कूपह्रदवृष्टिहिमआपगासमुद्रतटाकपाथांसि नव, तस्य ऐन्द्रनवकमध्यमे कुम्भे वापीजलं, आग्नेयकुम्भनवकमध्यमे कुम्भे सरिज्जलं, तस्य याम्यनवकमध्यमे कुम्भे कूपजलं, तस्य नैर्ऋतनवकमध्यमे कुम्भे ह्रदजलं, तस्य वारुणनवकमध्यमे कुम्भे हिमजलं, तस्य सौम्यनवकमध्यमे कुम्भे आपगाजलं, तस्यैशाननवकमध्यमघटं समुद्रजलं। एतेषां देवतास्तु क्रमेणभार्गवरामरहिताः मत्स्यादयः। शुद्धोदकानां पूर्ववत्।

दिव्ये सौम्ये मध्यनवकमध्यमे कुम्भे यवगोधूमव्रीहिशालिमुद्गप्रियङ्गुमाषश्यामाकनीवाराणि, तस्य गरुडारूढः पद्मनाभः देवता, तस्य ऐन्द्रनवकमध्यमकुम्भे यवं तस्य देवता वनमाला, तस्य आग्नेयनवकमध्यमकुम्भे गोधूमः, तस्य देवता शङ्खः, तस्य याम्यनवकमध्यमकुम्भे व्रीहिः तस्य देवता

चक्रं, तन्नैर्ऋतनवकमध्यमघटे शालिः तस्य देवता कौस्तुभः, तस्य वारुणनवकमध्यमघटे मुद्गं, तस्य देवता पद्मं, तस्य वायव्यनवकमध्यमघटे प्रियङ्गुः, तस्य देवता शाङ्गः। तस्य सौम्यनवकमध्यमघटे माषं, तस्य देवता गदा, तस्य ऐशाननवकमध्यमघटे श्यामाकनीवारः, तस्य देवता खड्गः, शिष्टाः शुद्धोदकाः देवताश्च तथा।

दिव्ये आग्नेये एकोनपञ्चाशद्घटास्पदे मध्यमनवके घृतं, तस्य ऐन्द्रषट्के गोमूत्रं, तस्य याम्यषट्के क्षीरं, वारुणषट्के दधि, सौम्यषट्के गोमयरसः, तस्य आग्नेयकुम्भचतुष्टये उष्णोदकं, नैर्ऋतचतुष्टये पञ्चगव्यं, तस्य वायव्यकुम्भचतुष्टये पञ्चामृतं, तत्तु क्षीरदधिघृतमधुशर्कराः तस्य ऐशानकुम्भचतुष्टये सक्तवः, तेषां देवता नारायणः।

दिव्यनैर्ऋते एकोनपञ्चाशत्कलशास्पदे मध्यनवके तैलं, देवता मत्स्यमूर्तिः, तस्य ऐन्द्रषट्के घनसारद्रव्यं, याम्यषट्के लाजं, वारुणषट्के मार्जनांभः, सौम्यषट्के च मार्जनद्रव्याणि तु रजनीसूर्यवर्तिनीसहदेवीशिरीषसदाभद्रकुशाग्राणि पृथक् मुष्टिमात्राणि। तस्य आग्नेयादीशानान्तकोणचतुष्टयकुम्भचतुष्केषु षोडशसु गुडवारि, तेषां देवता वासुदेवः

दिव्यमारुतैकोनपञ्चाशत्कलशास्पदेमध्यमनवके मध्ये सर्षपतैलं, तत्प्राच्यां षट्के पूर्वोक्तपाद्यद्रव्याणि, तस्य याम्यषट्के अर्घ्यद्रव्याणि पूर्वोक्तानि, वारुणषट्के च आचमनं पूर्वोक्तं सौम्यषट्के मङ्गलोदकं इन्द्रवल्ल्यादि, आग्नेयादीशान्तकोण-

चतुष्टयषोडशकुम्भेषु इक्षुरसः। तेषां सर्वेषां अनिरुद्धः देवता।

दिव्यैशानैकोनपञ्चाशत्कलशास्पदे मध्यमनवके मधु, तस्य ऐन्द्रषट्के सर्वगन्धोदकं कर्पूरकुङ्कुमादि, तस्य याम्यषट्के शार्ङ्गतवारि तुलसीवेणुनीवारादि, वारुणषट्के सौम्यषट्के च तथा, तस्य आग्नेयचतुष्के नैर्ऋतचतुष्के वायव्यचतुष्के च नारिकेरजलं, तस्य ऐशानचतुष्के क्षीरं, तेषां देवता हरिः।

मानुषे पदे प्राच्यां कुम्भानां पञ्चविंशतौ मध्यनवकमध्यमे कुम्भे क्षेत्रतीर्थाब्धिशैलगजसूकरदन्ताग्रवल्मीकवृषशृङ्गाग्रमृत्तिकाः अष्टौ, तत्परितः स्थिते कुम्भाष्टके प्राच्यादीशानान्ते पूर्वोक्ताः क्रमेण एकैकाः, नवकस्य देवता केशवः। शिष्टषोडशशुद्धोदकुम्भेषु देवता नारायणः।

तत्र ऐन्द्राग्नेयान्तरालपञ्चविंशतौ नवकमध्यमकुम्भे सहदेवीवचाशतमूलशतावरीकुमारीगुडूचीसिंहीव्याघ्रीत्यष्टौ मूलक्षोदाः। तत्परितः स्थिते कुम्भाष्टके क्रमेण सहदेव्यादिमूलिकाः एकैकाः। नवकस्य देवता नारायणः। शिष्टेषु षोडशशुद्धोदकुम्भेषु च।

तत्र आग्नेयपञ्चविंशतौ नवकमध्यमकुम्भे न्यग्रोधौदुम्बराश्वत्थजम्बूबिल्वपलाशमधूकशिरीषाणां त्वचोऽष्टौ तद्रसाः। तत्परितः स्थितकुम्भाष्टके क्रमेण न्यग्रोधादित्वग्रसाः। नवकस्य देवता माधवः। शिष्टशुद्धोदकुम्भानां नारायणः।

आग्नेययाम्ययोः अन्तराले कुम्भानां पञ्चविंशतौ नवकमध्यमे कुम्भे पालाशबिल्ववकुलकदम्बाम्रशिरीषन्यग्रोधाश्व-

स्थजाः पल्लवाः अष्टौ। तत्परितः स्थितेषु अष्टसु कलशेषु पलाशपल्लवाद्येकैकं पल्लवं क्रमेण। तस्य नवकस्य देवता गोविन्दः। शिष्टषोडशशुद्धोदकुम्भानां नारायणः।

याम्ये कुम्भानां पञ्चविंशतौ नवकस्य मध्यमे कुम्भे जातीमल्लिकाप्रियङ्गुपद्मबकुलनन्द्यावर्तकचम्पककुन्दजानि अष्टौ पुष्पाणि। तत्परितः स्थितकलशेषु अष्टसु जात्यादिपुष्पं एकैकं क्रमेण। तस्य नवकस्य देवता विष्णुः। शिष्टानां पूर्ववत्।

याम्यनैर्ऋतयोः अन्तराले कुम्भानां पञ्चविंशतौ नवकमध्यमकुम्भे सिद्धार्थराजसिद्धार्थवंशगोरोचनेन्द्रवेणुषाष्ठयवशमीचणकानि अष्टौ। तत्परितः स्थितेषु कलशेषु अष्टसु सिद्धार्थाद्येकैकं क्रमेण, तस्य नवकस्य देवता मधुसूदनः। शिष्टानां पूर्ववत्।

तत्र नैर्ऋते कुम्भानां पञ्चविंशतौ नवकस्य मध्यमे कुम्भे ग्राम्यतिलारण्यकतिलकभीरककृष्णजीरकातसीसंभवच्छिन्नशतपुष्पकुठारर्षि विम्बानि अष्टौ द्रव्याणि। तत्परितः स्थितेषु अष्टसु कलशेषु तिलादिक्रमेण एकैकम्। तस्य नवकस्य देवता त्रिविक्रमः। शिष्टानां नारायणः।

नैर्ऋतवारुणयोः अन्तराले कुम्भानां पञ्चविंशतौ नवकस्य मध्यमे कुम्भे श्यामाकषाष्टिकशालिनीवारतण्डुलदूर्वाङ्कुरकुशाङ्कुरइन्द्रवल्ल्यङ्कुराश्वत्थाङ्कुराणि अष्टौ द्रव्याणि। तत्परितः स्थितकलशेषु अष्टसु श्यामाकाद्येकैकं क्रमेण। तस्य नवकस्य देवता वामनः। शुद्धोदकानां पूर्ववत्।

तत्र वारुणे कुम्भानां पञ्चविंशतौ नवकस्य मध्यमे कुम्भे कुशादिद्रव्येषु काशोशीरशरपुंखतगरापामार्गमूलानि अष्टौ, तत्परितः स्थिताकुम्भाष्टके कुशादिमूलद्रव्यं एकैकं क्रमेण, तस्य नवकस्य देवता श्रीधरः। शुद्धोदकानां पूर्ववत्।

वारुणवायव्ययोः अन्तराले कुम्भानां पञ्चविंशतौ नवकमध्यमे कुम्भे तुलसीकृष्णतुलसीवेणुकेसरिकेतकबिल्वशमीजातीपत्राण्यष्टौ, तत्परितः स्थितकलशाष्टके तुलस्याद्येकैकं क्रमेण, तस्य नवकस्य देवता हृषीकेशः। शिष्टानां पूर्ववत्।

तत्र वायव्ये कुम्भानां पञ्चविंशतौ नवकस्य मध्यमे कुम्भे मुस्ताढ्यकचोरककुमुदोत्पलकल्हारशीतलीयककुवलयकन्दान्यष्टौ, तत्परितः स्थितेषु अष्टसु मुस्तादिद्रव्यं एकैकं क्रमेण तस्य नवकस्य देवता पद्मनाभः शिष्टानां पूर्ववत्।

वायुसोमयोः अन्तराले कुम्भानां पञ्चविंशतौ नवकस्य मध्यमकुम्भे मुद्गमाषयवनिष्पावतुवरीव्रीहिकुलुत्थाढकानि अष्टौ, तत्परितः स्थितेषु अष्टसु कुम्भेषु मुद्गादिद्रव्यं एकैकं क्रमेण, तस्य नवकस्य देवता दामोदरः। शिष्टानां पूर्ववत्।

तत्र सौम्ये कुम्भानां पञ्चविंशतौ नवकमध्यमे कुम्भे शंखपुष्पीबलाविष्णुक्रान्तासदाभद्रैकपत्राम्बुजवरसहासहदेवीद्वयानि अष्टौ, तत्परितः स्थितेषु अष्टसु कुम्भेषु शंखपुष्पाद्येकैकं क्रमेण। तस्य नवकस्य देवता यज्ञ नारायणः। शिष्टानां पूर्ववत्।

तत्र सोमेशानयोः अन्तराले कुम्भानां पञ्चविंशतौ नवक-

मध्यमे कुम्भे श्वेतार्काग्निभद्राब्राह्मी सुवर्चलासरसासरत्त्वापृश्निपर्णीस्थिरैः अण्डान् अष्टौ, तत्परितः स्थितेषु अष्टसु श्वेतार्काद्यं कैकं क्रमेण, तस्य नवकस्य देवता हरिः, शिष्टानां पूर्ववत्।

तत्र ऐशाने कुम्भानां पञ्चविंशतौ नवकमध्यमे कुम्भे सुरभिपद्मकेसरपत्रैलालवङ्गत्वङ्नागकेसरलताजातीफलान्यष्टौ, तत्परितः स्थितेषु अष्टसु सुरभ्याद्ये कैकं क्रमेण, तस्य नवकस्य देवता कृष्णः, शिष्टानां पूर्ववत्।

ऐशानैन्द्रयोः अन्तराले कुम्भानां पञ्चविंशतौ नवकस्य मध्यमे कुम्भे सुवर्णरजतताम्राणि प्रत्येकं पञ्चनिष्कप्रमाणानि पद्माकृतीनि च, कांस्यदर्पणं चषकाणि च अयोर्लवित्राद्याकाराणि त्रपुसीसकांपित्तलानि च प्रकृतिरूपेण पृथक् पृथक् एतानि अष्टौ, तत्परितः स्थितेषु ऐन्द्रादीशानान्तेषु कलशेषु अष्टसु सुवर्णाद्ये कैकं क्रमेण, तस्य नवकस्य देवता हयग्रीवः, शिष्टानां षोडशशुद्धोदकुम्भानां देवता नारायणः।

एवं द्रव्याणि विन्यस्य तत्तद्देवताश्च आवाह्य अभ्यर्चयेत्। एतस्मिन् एकोत्तरसहस्रकलशस्नपने अष्टौ चत्वारः वा आचार्याः। मूर्तिपाः तु षोडश। पुण्याहपूर्वकं विधिवत् एवं देवताः अभ्यर्च्य, 'सर्वारिष्टशान्त्यर्थं होमं करिष्ये' इति संकल्प्य, पञ्चोपनिषन्मन्त्रेण सर्पिषा आहुतीनां सहस्रं मूलविद्यया समिद्भिश्च तथा नृसूक्तेन चरुणा षोडशाहुतीनां च हुत्वा, मानुषे स्थाने पञ्चविंशतिमध्ये मृत्पूरितनवकुम्भान् आरभ्य, ब्रह्मपदैकोत्तराशीतिघटेषु नवकमध्यम्नवकमध्यसर्व-

रत्नोकान्तं एकोत्तरसहस्रकलशैः क्रमेण वक्ष्यमाणमन्त्रैः प्रतिद्रव्यघटं उपस्नानस्नोतवस्त्रोत्तरीयार्घ्यपाद्याचमनगन्धपुष्प-धूपदीपार्चनयुतं स्नापयेत् ।

मानुषे ऐन्द्रे पञ्चविंशतिमध्यमृत्पूरितकुम्भनवकस्य सशुद्धोदकस्य 'विष्णोर्नुकम्' इति मन्त्रः। तत्समीपस्थित-सशुद्धोदकमूलवारिकुम्भानां 'तद्विष्णोः' इति मन्त्रः। तन्मानु-षाग्नेये पञ्चविंशतिकुम्भानां 'प्रतद्विष्णुः' इति मन्त्रः। तत्समीपस्थितपञ्चविंशतिकुम्भेषु पल्लवाम्बुपूरितकुम्भनवकस्य सशुद्धोदकस्य 'देवस्यत्वे' ति मन्त्रः। तत्समीपस्थितानां तावामिति मन्त्रः। मानुषे नैर्ऋतपञ्चविंशतिकुम्भानां 'ध्रुवः पातु' इति मन्त्रः। तत्समीपस्थितानां 'भद्रं कर्णे' इति मन्त्रः।

मानुषवारुणस्थितपञ्चविंशतिकुम्भानां न ते विष्णुः' इति मन्त्रः। तत्समीपस्थितानां 'इरावती' इति मन्त्रः। मानुष-वायव्यस्थितानां 'अतो देवाः' इति मन्त्रः। तत्समीपस्थितानां 'इदं विष्णुः' इति मन्त्रः। मानुषसौम्यस्थितानां 'त्रीणि पदा' इति मन्त्रः। तत्समीपस्थितानां 'विष्णोः कर्माणि' इति मन्त्रः।

मानुषैशानस्थितानां 'तद्विष्णोः परमं पदम्' इति मन्त्रः। तत्समीपस्थितानां 'तद्विप्रासः' इति मन्त्रः। दिव्यैन्द्रे एकाशीतिवटास्पदे फलाम्बुपूरितनवकस्य मध्यमस्य 'यज्ञा-यज्ञियम्' इति मन्त्रः। तत्समीपेन्द्राद्यैशानान्तानां 'इन्द्राविष्णू पदे' ति, 'मनीषा' इति, 'वषट्ते विष्णो' इति, 'तिस्रो वाच' इति 'इषेत्वोर्जेत्वा' इति, 'स्तरीरुत्वद्भवती' ति, 'यस्मिन्

विश्वानी' ति, 'पर्जन्याय' इति च मन्त्राः क्रमेण। दिव्ये याम्ये एकोत्तराशीतिघटनवकमध्ये गन्धोदकस्य नारायणानुवाकस्य आदितः आरभ्य अष्टाभिः, एकैकया ऋचा, ऐन्द्राद्यैशानान्तं क्रमेण। दिव्ये पश्चिमे एकाशीतिघटास्पदे मध्ये नवकमध्यमे वापीजलादिजलकुम्भानां मन्त्राः— या आपः, सिन्धुद्वीपः, एष ते देवं, इमे मे वरुण, शन्नोदेवीः, यासाम् राजा, समुद्रज्येष्ठ, यासां देवाः, वारुणसूक्तेन ऐन्द्रादिब्रह्मपर्यन्तम्।

दिव्ये सौम्ये एकाशीतिघटास्पदे मध्ये कुम्भनवकस्य ऐन्द्रादिब्रह्मान्तं धान्यादिवस्तुकुम्भानां नवानां मन्त्राः— त्रातारं आत्वावहन्तु, जितं ते, आपो वर्हति, तावती, सत्त्वं नो अग्ने, त्वन्नोअग्ने, महाव्याहृतयः, अणोरणीयान्, इति क्रमेण। दिव्ये अग्निकोणे एकोनपञ्चाशत्घटास्पदे मध्यनवकस्य ऐन्द्रादिब्रह्मान्तं गोमूत्रादिघटेषु गायत्री, पयोव्रतसाम, दधिक्रावूण्ण, गन्धद्वारां, विष्णोरराटमसि, मूर्धानं दिवः, हिरण्यगर्भः, आप्यायस्व घृतस्नाता इति मन्त्रेण, दिव्ये नैर्ऋते एकोनपञ्चाशत्घटास्पदे मध्ये नवकस्य ऐन्द्रादिब्रह्मपर्यन्तं—रक्षोघ्नं, आद्यं साम, पवित्रं ते, भगवान् वासुदेवः, वेदव्रतसाम, वैराजसाम, अपराजिताः इति क्रमेण। दिव्ये वायुकोणे एकोनपञ्चाशत्घटास्पदे मध्ये नवकस्य ऐन्द्रादिब्रह्मान्तं— द्वादशाक्षरः, द्रुपदादिव, अष्टाक्षरः, शन्नोदेवीः, हिरण्यपाणिं, वेदाहं, इत्यादिचतस्रः ऋचः क्रमात्। दिव्ये ऐशाने एकोनपञ्चाशत्घटास्पदे मध्ये नवकस्य ऐन्द्रादिब्रह्मान्तं—

आनोनियुद्भिः, श्रीसूक्तं, मधुमान्नः, मधुनक्तम्, मधुवाता— इति मन्त्रेण, ब्राह्मे पदे इन्द्रादीशानान्तनवकानां मध्यमद्रव्य-कुम्भानां अष्टसु पुरुषसूक्तस्य द्वे द्वे ऋचौ आदितः क्रमात्, शिष्टानां चतुष्षष्टिशुद्धोदककुम्भानां मूलमन्त्रेण, मध्यस्थनवक-मध्यमकुम्भस्य पुरुषसूक्तेन, शिष्टशुद्धोदकुम्भानां मूलमन्त्रेण। तदन्ते हरिद्राचूर्णपरिपूरितैः पञ्चविंशतिभिः सप्तदशभिः षोडशभिः द्वादशभिः वा सरत्नलोहकूर्चाश्वत्थपल्लववस्त्रापिधानैः समाराधितश्रीदेवतैः धान्यराशिस्थैः कुम्भैः श्रीसूक्तेन अभिषिच्य, देवं अर्घ्यादिभिः आराध्य, महाहविः निवेद्य, आज्येन समिद्भिः मूलविद्यया, अष्टोत्तरसहस्रं आहुतीनां हुत्वा, चतुर्विधान्नेन प्रत्येकं षोडश आहुतीश्च पुरुषसूक्तेन जुहुयात्। वस्त्राभरणजीवाजीवधनादिभिः देशिकानां यावत्कलशसंख्यया दक्षिणा, तदर्धं ऋत्विजां तदर्धं परिचारिणां अन्येषां च देया।

इति श्रीवराहगुरुविरचितायां क्रियाकैरवचन्द्रिकायां
सहस्रकलशस्नपनविधिः नाम
द्वात्रिंशः परिच्छेदः

---

## अथ त्रयस्त्रिंशः परिच्छेदः

# अथ तावत् उत्सवविधिः

अथ तावत् उत्सवविधिः उच्यते—

पूर्वं गरुडप्रतिष्ठार्थं अङ्कुरार्पणकर्म कर्तव्यम्। स्वविशेषण-विशिष्टः आचार्यः गरुडप्रतिष्ठाकर्मणः पूर्वं सप्ताहे पञ्चाहे तृतीयेह्नि वा सुमुहूर्ते विष्वक्सेनं गरुडं वा संपूज्य, तेन सह प्राचीं उदीचीं वा दिशं गत्वा, 'अस्य देवदेवस्य नवदिनमहोत्सवकर्मणि अङ्कुरार्पणकर्माङ्गभूतं मृत्संग्रहणकर्म करिष्ये' इति संकल्प्य, पुण्याहं कृत्वा यथाविधि पूर्ववत् मृदं संगृह्य अङ्कुरार्पणमण्डपं प्रविश्य तत्र पूर्ववत् विधिवत् अङ्कुरार्पणं कृत्वा, तदनु गरुडप्रतिष्ठां कुर्यात्।

अथ ध्वजारोहणविधिः उच्यते—

पूर्वं ध्वजार्थं तन्तूत्थं निर्दोषं सूक्ष्मं क्षौमं कार्पासं वा, दशभिः हस्तैः आयतं तदर्धेन विस्तृतं यद्वा नवभिः अष्टभिः सप्तभिः वा मूलबेरसमायामं द्वारायामं वा आयामार्धेन विस्तीर्णं तत्पादेन कृतशेखरं शेखरसमपुच्छयुतं तदर्धकर्णपुच्छकं तथा निर्णेजितं खलियुक्तं शोषितं एवं भूतलक्षणविशिष्टं ध्वजपटं आदाय, तस्मिन्,

आहृत्य मध्ये वस्त्रस्य गरुडं काञ्चनप्रभम्।
नवतालप्रमाणेन द्विभुजं कृतकञ्चुकम्॥

धृतपुष्पाञ्जलिपुटं श्वेताम्बरधरं विभुम् ।
दंष्ट्राकरालवदनं भ्रुकुटीकुटिलेक्षणम् ॥
नीलनासाग्रसंयुक्तं कुञ्चितासव्यपादकम् ।
पृष्ठे निविष्टसव्यांघ्रिं पक्षविक्षेपशोभितम् ॥
गगने गमनारंभं सुवृत्तं घोरदर्शनम् ।
करण्डकामकुटिनं ललाटे रचितालकम् ॥
हारकेयूरवलयनूपुराभरणोज्ज्वलम् ।
अनन्तो वामकटकः यज्ञसूत्रं तु वासुकिः ॥
उरसिन्यस्तकार्कोटं कटिसूत्रिततक्षकम् ।
बिभ्राणं दक्षिणे कर्णे पद्माह्वयसरीसृपम् ॥
महापद्मं तथान्यत्र शङ्खं शिरसि भोगिनम् ।
गुलिकं चाङ्गदे सर्पं वर्णास्तेषां च कथ्यते ॥
स्फटिकाभः शोणिताभः पीताभः धूम्रवर्णकः ।
रक्तांबुजनिभश्चैव पिङ्गलस्तुहिनप्रभः ॥
भ्रमराभः क्रमाच्छत्रं मुक्तादामपरिष्कृतम् ।
उपरिष्टाच्च कर्तव्यं पार्श्वयोः चामरद्वयम् ॥
अधस्तादंबुजंपूर्णकुम्भमर्धाद्भिश्च पालिकाः ।
साङ्कुराः लिखितव्याः स्युः दीपौ द्वौ पार्श्वयोः द्वयोः ॥
पञ्चवर्णैः लिखेदेवं अन्तरं श्यामवर्णकम् ।
अन्तरालं न कृष्णेन चित्रयेच्चित्रवित्तमः ॥

इति गरुडं आलिख्य, अधिवासदिने तमिस्रायां आचार्यः मूर्तिपैः सह कारुशालां प्रविश्य, पटस्थस्य देवस्य शिल्पिना

नयनोन्मीलं कारयित्वा, शिल्पिनि तस्मिन् ईप्सितैः धनैः तोषिते विसृष्टे सति, तदा पटं ओं इति गृहीत्वा, सुवर्णपात्रे निधाय, तत् मूर्तिपस्य शिरसि निक्षिप्य, तूर्यघोषैः सह धाम प्रदक्षिणी-कृत्य, गर्भमन्दिरं नीत्वा, भगवन्तं अर्घ्यादिभिः अभ्यर्च्य पुण्याहजलेन अस्त्रमन्त्रेण पटं संप्रोक्ष्य, अस्त्रमन्त्राभिमन्त्रितैः सिद्धार्थैः पुष्पैश्च सन्ताड्य दाहनाप्यायने कृत्वा देवं प्रणम्य इमां गाथां उदीरयेत्।

भगवन् पुण्डरीकाक्ष सर्वेश्वरजगन्मय।
त्वया यथा तु कथितं तथा कर्तुं न शक्यते॥
अस्वातन्त्र्यात् असामर्थ्यात् श्रद्धादीनां अभावतः।
तस्मात् मानादिसर्वेषां न्यूनाधिकोपशान्तये॥
समालोक्य नेत्राभ्यां शीतलाभ्यां पटस्थितम्।
सर्वदोषापहारिभ्यां वैनतेयं प्रसीद य॥

इति भगवन्तं विज्ञाप्य, तूर्यघोषपुरस्सरं प्रादक्षिण्येन यागमण्डपं प्रविश्य, शालिपीठे पटं स्थापयित्वा विस्तार्य छायाधिवासादिप्रतिष्ठान्तानां कर्मणां सिद्ध्यर्थं रक्षाबन्धन-कर्म करिष्ये इति संकल्प्य, पुण्याहं वाचयित्वा प्रोक्ष्य, पटस्थस्य प्रतिसरं यथाविधि बध्वा, तस्य दक्षिणतः उपविश्य प्राणायामपुरस्सरं भूतिशुद्धिं अष्टाक्षरमन्त्रन्यासं च कृत्वा, तदनु अस्य श्रीगरुडपञ्चाक्षरमन्त्रस्य काश्यपः ऋषिः पङ्क्तिश्छन्दः श्रीगरुडो देवता, क्षीं बीजं, स्वाहाशक्तिः श्रीगरुडप्रसादसिद्ध्यर्थे विनियोगः, ओं क्षीं अङ्गुष्ठाभ्यां नमः,

ओं पं तर्जनीभ्यां नमः स्वाहा, ओं ओं मध्यमाभ्यां वषट्, ओं स्वां अनामिकाभ्यां हुं, ओं हां कनिष्ठिकाभ्यां फट्, ओं क्षिप ओं स्वाहा नखमुखेभ्यः वौषट्, ओं ज्वल ज्वल महामते स्वाहा, ओं क्षां हृदयाय नमः, ओं गरुडचूडानने स्वाहा, ओं क्षीं शिरसे स्वाहा, ओं गरुडशिखायै वौषट्, ओं क्षूं शिखायै वषट्, ओं गरुडप्रभञ्जय प्रभञ्जय प्रभेदय प्रभेदय वित्रासय वित्रासय विमर्दय विमर्दय स्वाहा, ओं क्षैं कवचाय हुं, उग्ररूपधर सर्वसर्पभयङ्करसर्वविषं दारय दारय भीषय भीषय दह दह भस्मीकुरु स्वाहा, ओं क्षौं नेत्राभ्यां वौषट्, ओं अप्रतिहतशासनाय ओं नमः सुदर्शनाय हुं फट् स्वाहा, ओं क्षः अस्त्राय फट्।

ध्यानम्—

आजानुतः सुवर्णाभं आनाभेः तुहिनप्रभम्।
कुङ्कुमारुणमाकण्ठात् आकेशान्तात्सितेतरम्॥
स्वस्तिकं दक्षिणं पादं वामपादं तु कुञ्चितम्।
कपिलाक्षं गरुत्मन्तं सुवर्णसदृशप्रभम्॥
दीर्घबाहुं बृहत्स्कन्धं नागाभरणभूषितम्।
नीलाग्रनासिकात्मानं महापक्षं स्मरेत्बुधः।
दंष्ट्राकरालवदनं किरीटमकुटोज्ज्वलम्॥
सर्वाभरणसंयुक्तं सर्वावयवसुन्दरम्।
अनन्तो वामकटकः यज्ञसूत्रं तु वासुकिः॥
तक्षकः कटिसूत्रं तु हारः कार्कोटकः तथा।

पद्मो दक्षिणकर्णे तु महापद्मस्तु वामतः।
शङ्खः शिरःप्रदेशे तु गुलिकस्तु भुजान्तरे॥
एवं ध्यायेत् त्रिसन्ध्यायां आत्मानं गरुडाकृतिम्।
विषं नाशयते क्षिप्रं अग्निं क्षिप्तमिवांभसि॥
ओं नमः पक्षिराजाय वेदपक्षयुगप्रभो।
वैनतेय नमस्ते श्रीगरुडाय नमो नमः॥

एवमात्मानं गरुडं ध्यात्वा हृत्पुण्डरीकाव्यक्तपद्मे गरुडं ध्यात्वा मानसैः उपचारैः अभ्यर्च्य, तदनु तस्य पुरतः छायाधिवाससिद्ध्यर्थं धान्यराशौ स्वर्णादिलोहजं मृण्मयीं वा जलद्रोणीं तादृशं कटाहं वा संस्थाप्य, गन्धतोयेन संपूर्य, पुण्याहं वाचयित्वा प्रोक्ष्य, शोषणदहनप्लावनानि कृत्वा, तोरणध्वजकुम्भपूजनं च विधाय, पटस्थं कूर्चे समावाह्य, तस्मिन् संहारक्रमेण प्रविष्टरसं शायायित्वा, सुदर्शनमन्त्रे ग्र चक्रमुद्रां प्रदर्श्य, तत्रैव यमस्य दिशि धान्यराशौ रक्षाकुम्भं सकरकं विन्यस्य, तस्मिन् ब्रह्माणं करके सुदर्शनं च स्वस्वमन्त्रेण आवाह्य अभ्यर्च्य, परितः कुम्भाष्टके इन्द्रादीन् च, सुदर्शनमन्त्रेण चक्रमुद्रां[1] प्रदर्श्य, एवं यामं यामार्धं वा अधिवास्य सद्यो वा तदनु कूर्चं जलादुद्धृत्य पटे समावाह्य, नयनोन्मीलनार्थं सुवर्णरजतपात्रे आढकपूरणयोग्ये तादृश्यौ शलाकिके च समादाय, पुरतः धान्यपीठे पूर्वे सौवर्णं पश्चिमे

---

१ स्पष्टौ प्रसारितौ हस्तौ परस्परनियोजितौ।
भ्रमणाच्चक्रवच्चौ तु चक्रमुद्रेति कीर्तिता॥

राजतं च पात्रं सशलाकं निधाय, तत्परितः पात्रेषु नीवारशालि-
: दूश्यामाकप्रियङ्गुयवतिलगोधूमानि अष्टधान्यानि पृथक् पृथक्
निधाय, आद्यं मधुना द्वितीयमाज्येन च पात्रं आपूर्य
'नयनोन्मीलनकर्म करिष्ये' इति संकल्प्य, पुण्याहं वाचयित्वा,
तानि प्रोक्ष्य परिस्तीर्य, मधुनि सूर्यं आज्ये चन्द्रमसं च
आवाह्य अभ्यर्च्य, नवेन वाससा आच्छाद्य, 'मधुवाता'[1] इति
मधु, 'सविराजंपर्येति' इति आज्यं च अभिमन्त्र्य, सवेदवाद्य-
घोषं मध्वक्तमुखया सुवर्णशलाकया 'चित्रं देवानां' इति दक्षिणं
घृताक्तया राजतशलाकया, 'तच्चक्षुः इति' वामलोचनं च
उन्मूल्य, आच्छादनपटं व्यपोह्य, मधुसर्पिषी च अष्टधान्यानि
दर्शयित्वा, अष्टनागानां अपि एवं कृत्वा, 'छायास्नपनकर्म
करिष्ये' इति संकल्प्य, पुरतः धान्यीपीठे सलक्षणान् षोडश-
कुम्भान् संस्थाप्य, पूर्वोक्त विधिना, तत्तद्द्रव्यैः आपूर्य,
परिस्तीर्य देवतावाहनं पुण्याहवाचनपूर्वकं कृत्वा, सकूर्चे
दर्पणे पटस्थं गरुडं समावाह्य, अर्घ्यादिपूजनपुरस्सरं पुरुष-
सूक्तस्य षोडशर्ग्भिः घृतान्तैः षोडशकुम्भैः संस्नाप्य, गरुड-
गायत्र्या संपूज्य, पटे पुनः आवाह्य, शालिभारद्वितयेन तदर्धेन
तण्डुलेन, तण्डुलार्धेन तिलेन धान्यपीठं कृत्वा, नवैः वासोभिः
आच्छाद्य, दर्भान् आस्तीर्य, नववस्त्रव्याघ्रचर्मतूलिकारत्न-
कम्बलक्षौमचित्रवस्त्राणि च गन्धद्रव्यैः अधिवास्य, दर्भैः

---

१ मधुवाता ऋतायते मधु क्षरन्ति सिन्धवः।
माध्वीर्नः सन्त्वोषधीः॥

परिस्तीर्य, पुण्याहजलेन प्रोक्ष्य, तस्यां शय्यायां शाययित्वा, द्वारतोरणपूजां कृत्वा, ततः शायितस्य पटस्य दक्षिणपार्श्वे धान्यराशौ सकरकं महाकुम्भं उपकुम्भाष्टकं च सलक्षणं संस्थाप्य, गन्धोदकेन आपूर्य, सकूर्चवस्त्ररत्नतत्तद्देवताङ्कप्रतिमाश्वत्थपल्लवापिधानान् तान् सर्वान् कृत्वा, परिस्तीर्य, प्रोक्ष्य, महाकुम्भे आधारादिपद्मान्तं इष्ट्वा, तस्मिन्,

एहि खेश महाबाहो वैनतेय वयोधिप।
सान्निध्यं कुरु पक्षीन्द्र प्रसीदात्र नमोऽस्तु ते॥

क्षिप ओं स्वाहा आगच्छागच्छेति गरुडं आवाह्य, तद्गायत्र्या अभ्यर्च्य, करके सहस्रार हुं फट् आगच्छागच्छेति आवाह्य अभ्यर्च्य, पूर्वादिषु कलशेषु इन्द्रादीन् च, पटस्थगरुडं शोषणादिभिः संशोध्य तत्त्वानि क्रमात् संहृत्य, पुनः उत्पाद्य, कुण्डेषु चतुर्षु स्थण्डिलेषु वा यद्वा एकस्मिन् कुण्डे महानसे नित्याग्निकुण्डे वा अधिवासहोमं कुर्यात्। कुण्डचतुष्टये तु प्राच्यां कुण्डे सत्यं आवाह्य बृहत्साममन्त्रेण, दक्षिणस्यां दिशि कुण्डे सुपर्णं आवाह्य गारुडमन्त्रेण[1] च, प्रतीच्यां कुण्डे गरुडं आवाह्य रथन्तरसाम्ना, उदीच्यां कुण्डे तार्क्ष्यमावाह्य, गरुडमन्त्रेण च, यद्वा सर्वेषु कुण्डेषु तत्तद्देवतामन्त्रैः वा समिद्भिः आज्यैश्च चरुणा पुरुषसूक्तेन च, एकस्मिन् कुण्डे तु 'ओं नमो भगवते वैनतेयाय नमः' इति आवाह्य, गरुडमन्त्रेण

---

१ ओं सुपर्णाय विद्महे पक्षिराजाय धीमहि
तन्नो गरुडः प्रचोदयात्॥

च हुत्वा, पूर्वादिषु चतुर्षु कुण्डेषु ओं भूः स्वाहा, ओं भुवः स्वाहा, ओं सुवः स्वाहा, ओं भूर्भुवस्सुवस्स्वाहा, इति मन्त्रैः क्रमेण मधुपयोदध्याज्यैः प्रत्येकं शतसंख्यया आहुतीः हुत्वा, अन्यस्मिन् पात्रे संपातं पृथक् पृथक् संगृह्य, पटस्थस्य पादजठरमूर्धसु हुतमन्त्रैरेव स्वाहारहितैः क्रमेण कूर्चेन सर्वांगं च संस्पृश्य, औत्तरे कुण्डे विष्णुगायत्र्या गुडाज्यमधुभिः हुत्वा, संपातेन मुखं च संस्पृश्य, होमं निर्वर्त्य, पालाशखादिराश्वत्थबिल्वशाखाभिः चतसृभिः क्रमात् अब्लिंगैः मन्त्रैः महादिक्कलशाम्बुभिः कोणस्थकलशाम्बुभिर्वा एतस्याः शाखया विष्णुगायत्र्या च पटस्थं प्रोक्ष्य, मन्दिराभिमुखं पटं विस्तार्य, तस्मिन् योगपीठं संकल्प्य, गन्धादिभिः अभ्यर्च्य, स्वाञ्जलौ योगपीठं विचिन्त्य, तस्मिन् हृत्पुण्डरीकस्थगरुडं रेचकेन अवतार्य, ध्यात्वा, तस्य गायत्र्या पटस्थस्य ब्रह्मरन्ध्रेण प्रविष्टं विचिन्त्य, ब्रह्मरन्ध्रं प्रणवेन पिधाय, मुद्रया सन्निरुध्य, ध्यात्वा सन्निधिं प्रार्थयेत् ।

महाबलमहाबाहो वैनतेय वयोधिप ।
सन्निधत्स्व पटे तुभ्यं नमः प्रणवमूर्तये ॥
कर्मणां सिद्धिमाहूतः कुरुष्व विहगेश्वर ।
आहूतव्याः त्रयो लोकाः देवस्य उत्सवसम्पदि ।

इति गरुडं प्राथ्यं अर्घ्यादिभिः उपचारैः तद्गायत्र्या उपचर्य, चतुर्विधं अन्नं निवेद्य, महाकुम्भाय च तथा कृत्वा, तदनु ओं,

वाहनाय महाविष्णोः तार्क्ष्यायामित तेजसे ।
गरुडाय नमस्तुभ्यं सर्वसर्पेन्द्रमृत्यवे ॥
नमो नमस्ते पक्षीन्द्र स्वाध्यायवपुषे नमः ।
विहगेन्द्र नमस्तेऽस्तु समुत्पाटितकल्पक ॥
आहृतामृतकुम्भाय जननीदास्यमोचने ।
सुरासुरेन्द्रजयिने नागेन्द्राभरणाय ते ॥
यदाधारमिदं सर्वं तदाधाराय ते नमः ।
पक्षौ यस्य बृहत्साम रथन्तरमपि द्वयं ॥
अक्षिणी चापि गायत्री त्रिवृत्साम शिरःस्मृतं ।
स्तोम आत्मा नमस्तस्मै वामदेव्यांगसंपदे ॥
नमः प्राणादिवायूनां ईशानाय गरुत्मते ।
दोषान् अपनय अखण्डान् गुणान् आवह सर्वतः ॥
विघ्नानि जहि सर्वाणि आत्मसात् कुरु मामपि ।

एवं स्तुत्वा, गारुडमूलमन्त्रं यथाशक्ति जप्त्वा, वेदघोषैः तूर्यघोषैः निशां जागरेण नीत्वा, ततः प्रभाते गुरुः नित्यकर्म समाप्य, गर्भगेहं प्रविश्य, मूलबेरं अर्घ्यादिभिः अभ्यर्च्य तस्मात् कर्मार्चायां आवाह्य, तां च अभ्यर्च्य, तस्मात् उत्सव-बिम्बे समावाह्य, उद्वासनरहितैः षोडशोपचारैः आराध्य, तं पटस्थं गरुडं च माल्यादिभिः अलङ्कृत्य, हस्तिपृष्ठे, रथे, शिविकादौ वा यात्राबिम्बं च पृथक् याने च समारोप्य, भेरीमृदङ्गपटहशङ्खकाहलनृत्तगेयसहितं शिरोभिः साङ्कुरपालि-काशतधारकैः ब्राह्मणैः च ग्रामधाम्नोः प्रादक्षिण्येन ध्वजस्तंभ-समीपं नीत्वा,

ध्वजस्तंभस्तु, अन्तस्सारः बहिस्सारः निस्सारश्चेति दारुः त्रिविधः। चम्पकदेवदारुचन्दनखदिरसालबिल्वककुभा-मलकादयः अन्तस्साराः। क्रमुकनालिकेरतालहिन्तालवेण्वादयः बहिस्साराः। निस्सारं वर्जयित्वा अन्तस्सारं बहिस्सारं वा मानाङ्गुलमानेनशततालायतं शुभं अशीतितालमानं वा प्रासादो-च्छ्रायमानं, यद्वा गोपुरमानं वा स्तंभं समानीय चतुर्धा विभज्य, अग्रैकांशकेन मस्करं तदाधारभूतानि द्वितालेनायतानि तदर्धेन विस्तीर्णानि तदर्धेन घनानि पीठत्रितयात् मूले स्थूलानि अग्रे सूक्ष्माणि मूलतच्छिद्रितानि कृत्वा, स्तंभाग्रे तानि विनिवेश्य. अग्रपीठद्वये छिद्रिते तत्र ध्वजयष्टिमस्करं एवं स्तंभे विनिवेश्य, ध्वजयष्ट्यां एकं वेणुकं वा नवसप्तपञ्चवेणु-कान्वा निवेश्य इत्थंभूतध्वजस्तंभं पीठस्य उत्तरपार्श्वे विनिवेश्य आचार्यः वेदविद्भिर्विप्रैः सह अब्लिङ्गैः मन्त्रैः प्रक्षाल्य कुशैः दर्भैः ऊर्ध्वमुखैः प्रच्छाद्य दर्भमालाभिः संवेष्ट्य, शोधिते स्तंभावटे लोहबीजादीनि विन्यस्य, तत्र आवटे ध्वजस्तंभं विष्णुसूक्तेन दृढं यथा भवेत् तथा प्रासादाभिमुखं स्थापयित्वा, स्तंभमूलस्थने सप्तभिः पञ्चभिः त्रिभिः वा हस्तैः आयतां तावद्विस्तीर्णां एकहस्तसमुच्छ्रितां चतुरश्रां वेदिकां कारयित्वा तां त्रेधा विभज्य एकांशे मध्ये चतुष्टयअङ्गुलोत्सेधमेखलात्रय-युतं पीठं, तस्यापि तृतीये भागे कर्णिकामध्ये यथास्तंभविनि-वेशनं भवेत् तथा पद्मं कृत्वा, पीठस्य परितः षोडशस्तंभयुतां तिरस्कारिणीं चित्रदर्भमालादीपपुष्पमालावितानाद्यलङ्कृतां

चतुर्द्वारयुतां प्रपां कारयित्वा, पुण्याहं वाचयित्वा, प्रोक्ष्य, स्तंभदक्षिणे धान्यपीठं कृत्वा, तस्मिन् सलक्षणं कुम्भनवकं विन्यस्य मध्ये गरुडं परितः अष्टदिक्षु इन्द्रादीन् आवाह्य अभ्यर्च्य, तत्तन्मन्त्रेण स्तंभं यथाक्रमं प्रोक्ष्य, तद्वदेवगर्भावरैः तन्तुभिः त्रिगुणीकृतेन अङ्गुष्ठानाहेन पाशेन ध्वजपटं पुरुषमन्त्रेण संयोज्य वक्ष्यमाणेन विधिना ध्वजं आरोपयेत्। यद्वा बद्धध्वजाग्रं स्तंभं वा स्थापयेत्।

तदनु गुरुः शोभने मुहूर्ते पटस्थं गरुडं प्रासादाभिमुखं संस्थाप्य सर्वतः दिक्षु वेदतूर्यघोषेषु प्रवर्तितेषु स्वयं गरुडमालामन्त्रादि जपन् गरुडं अर्घ्यादिभिः अभ्यर्च्य, महाकुम्भजलेन तद्गायत्र्या कूर्चेन संप्रोक्ष्य, गारुडमन्त्रेण कुम्भात् पटस्थं अनुचिन्त्य, प्राणप्रतिष्ठां यथाविधि कृत्वा, तन्मूलमन्त्रं विन्यस्य, तद्गायत्र्या तन्मुद्रां प्रदर्श्य, अर्घ्यादिभिः अभ्यर्च्य, अष्टासु दिक्षु इन्द्रादीन् च आवाह्य, गन्धपुष्पादिभिः अभ्यर्च्य, पृथुकापूपनालिकेरमुद्गान्नादीनि पटस्थस्य निवेद्य, वेदघोषैः वाद्यघोषैः सह 'सुपर्णोसि'[1] इति मन्त्रेण ध्वजं आरोप्य, यावदुत्सवअवभृथं ध्वजोदरे गरुडस्य स्थितिं वक्ष्यमाणगाथया प्रार्थयेत्।

पक्षीन्द्र पक्षविक्षेपतरङ्गानिलसंपदा।

---

१ सुपर्णोऽसि गरुत्मान् पृष्ठे पृथिव्याः सीद। भासान्तरिक्षमापृण ज्योतिषा दिवमुत्तभान तेजसा दिश उद्दृंह॥

निरस्तासुरसन्नाहसमरे शत्रुसूदने ॥
सन्निधत्स्व पटे यावत् उत्सवावभृथक्षणम् ।

इति प्रार्थ्य, उत्सवप्रतिमां ध्वजस्तंभसमीपं आनीय, खगं दर्शयित्वा, समस्तदेवताह्वानार्थं गरुडं नियुज्य, उत्सवबिम्ब-सन्निधौ एव पुष्पाञ्जलिं समादाय,

अस्माद्दिनात्समारभ्य यावत्तीर्थदिनान्तिमम् ।
सन्निधिं कुरु पक्षीन्द्र राज्ञः जनपदस्य च ॥
ग्रामस्य यजमानस्य वैष्णवानां विशेषतः ।
तुष्ट्ये पुष्ट्ये चैव सर्वशत्रुजयाय च ॥
अपमृत्युजयार्थाय वैनतेय प्रसीद ओं ।

इति गाथां उदीरयन् गरुडोपरि पुष्पाञ्जलिं वितीर्य, तदनु भगवन्तं विज्ञापयेत् ।

ज्ञानतोऽज्ञानतोवापि स्थोकं न कृतं मया ।
तत्सर्वं पूर्णमेवास्तु सुतृप्तो भव सर्वदा ॥
ओमच्युतजगन्नाथ मन्त्रमूर्ते जनार्दन ।
रक्ष मां पुण्डरीकाक्ष क्षमस्वाज ऽसीद ओं ॥

इति विज्ञाप्य, भगवन्तं मण्डपान्तरं नीत्वा यथाविधि संपूजयेत् । ध्वजसमीपे नक्तंदिवं अनिर्वाणं दीपं आरोप्य ध्वजारोहणाद्यवरोहणान्तं प्रतिदिनं गरुडं संपूजयेत् ।

## अथ भेरीताडनम्—

अथ भेरीताडनविधिः उच्यते—

आचार्यः तद्रात्रौ देवं प्राणायामन्तर्यागपुरस्सरं पूज-

यित्वा, निवेद्य, होमं च कृत्वा, ध्वजपीठस्य पुरतः, क्षितिं गोमयवारिणा चतुरश्रां आलिप्य, सुधाचूर्णैः अलङ्कृत्य, द्रोणपञ्चकशालिना धान्येन पीठं चतुरश्रं विधाय तत्र कालचक्रं लिखित्वा, तन्मध्ये मूलबेरात् आवाहितशक्तिं बलिबिम्बं ध्वजसम्मुखं निवेश्य पूजयित्वा, तस्य पुरतः आलिप्ते भूतले धान्यपीठके नववाससा वेष्टितां महाभेरीं संस्थाप्य, तस्याः दक्षिणे कोणं च निधाय, भेर्याः पूर्वभागे शङ्खनिकरं, वह्नौ काहलसञ्चयं, याम्ये मर्दलं, नैर्ऋते मुखतन्त्रीवंशानि, वारुणे उड्डुक्कमृदङ्गह्रस्वमर्दलानि, वायव्ये करटीं कांस्यतालं च, सौम्ये पटहह्रस्वपटहौ, ऐशान्यां डुडुकान् वल्लीहस्तघण्टान् च, एतेषां अलाभे संभवानुगुणं संस्थाप्य तेषां बाह्ये दक्षिणे गणिकाजनं गायकान् च अग्रतः नर्तकान् उत्तरे वन्दिबृन्दकान् स्वे स्वे स्थाने च अन्यान् वाद्यवादनकान् संस्थाप्य, भेर्याः पश्चिमे देशे सलक्षणं कुम्भं धान्यराशौ संस्थाप्य, पुण्याहं वाचयित्वा, भेर्यादिवाद्यानि स्नातं शुचिं अलङ्कृतं दर्भपाणिं सोपवीनोत्तरीयं पारशवं च प्रोक्ष्य, भेरीमध्ये ओं त्रिगुणात्मिकायै प्रकृत्यै नमः, दक्षिणे ओं विष्णवे नमः, ओं श्रीं श्रियै नमः, मध्ये ओं ब्रह्मणे नमः, दक्षिणे ओं विष्णवे नमः, वामे ओं रुद्राय नमः, दक्षिणमुखे ओं सूर्याय नमः, वाममुखे ओं चन्द्रमसे नमः, चर्मसूत्रे ओं वासुकये नमः, दक्षिणपार्श्वे नवरन्ध्रेषु ओं वागीश्वर्यै नमः, ओं क्रियायै नमः, ओं कीर्त्यै नमः, ओं लक्ष्म्यै नमः, ओं सृष्ट्यै नमः, ओं विद्यायै नमः,

ओं कान्त्यै नमः, ओं दुर्गायै नमः, ओं गणपतये नमः, इति वामपार्श्वनवरन्ध्रेषु ओं अत्रये नमः, ओं भृगवे नमः, ओं वसिष्ठाय नमः, ओं भार्गवाय नमः, ओं नारदाय नमः, ओं गौतमाय नमः, ओं भरद्वाजाय नमः, ओं विश्वामित्राय नमः, ओं मरीचये नमः, इति अष्टसु दिक्षु ओं रंभायै नमः, ओं मेनकायै नमः, ओं ऊर्वश्यै नमः, ओं तिलोत्तमायै नमः, ओं सुमुख्यै नमः, ओं सुन्दर्यै नमः, ओं रमण्यै नमः, ओं यामवर्धिन्यै नमः, इति, कोणाधिदेवताय नमः, ओं वायवे नमः, ओं शङ्खाधिदेवताय विष्णवे नमः, ओं काहलाधिदेवतायै वागीश्वर्यै नमः, ओं मर्दलाधिदेवतेभ्यः त्रिमूर्तिभ्यः नमः, ओं मुखाधिदैवताय ब्रह्मणे नमः, ओं मृदङ्गाधिदेवताय रुद्राय नमः, ओं झल्लर्यधिदैवताय विष्णवे नमः, ओं पटहाधिदेवतायै श्रियै नमः,

ओं डमरुकाधिदैवताय ईशानाय नमः, ओं उडुक्काधिदैवताय षण्मुखाय नमः, ओं करट्यधिदैवताय धर्मराजाय नमः, ओं तिमिलाधिदैवताय वायवे नमः, ओं ढक्कर्यधिदैवताय चन्द्रशेखराय नमः, ओं तालाधिदेवताय ब्रह्मणे नमः, ओं व महस्तखण्डाधिदैवतायै श्रियै नमः, ओं दक्षिणहस्तखण्डाधिदेवतायै पार्वत्यै नमः इति गन्धादिभिः अभ्यर्च्य, कुम्भे यज्ञाश्व इति आवाह्य अभ्यर्च्य पूर्वादिदिक्षु इन्द्रादीन् आवाह्य अभ्यर्च्य निवेद्य शोभने मुहूर्ते ओं नं नमः पराय शब्दतन्मात्रात्मने नमः, इति मन्त्रेण यज्ञाश्व इति उक्त्वा कोणेन भेर्याः

ताडनं कुर्यात्। तदनु तां भेरीं पारशवः गृहीत्वा वहन्, गुरुणा इन्द्रादौ मरुद्गणे हूयमाने घोषयेत्।

दिव्यायुधानां आह्वानं तथा वैकुण्ठवासिनाम्।
विष्णुपारिषदाः सर्वे विष्वक्सेनाभिरक्षिताः॥
आहूतव्या मखे तस्मिन् कुमुदाद्याः सनत्यकाः।
ऋषिभिश्च मरीच्याद्यैः ब्रह्मलोकनिवासिभिः॥
समाह्वानं विरिञ्चस्य रुद्रलोकनिवासिभिः।
सार्धं प्रथमसंघैश्च रुद्रश्च वृषवाहनः॥
आहूतव्याः तथा चान्ये तत्तल्लोकनिवासिनः।
वाहनैः परिवारैः च साकं तस्मिन् महोत्सवे॥
विद्याश्च मूर्तिधारिण्यः त्रयीचाङ्गैश्च पुष्टिदा।
आहूतव्याः समाह्वानं सर्वेषां च स्वनामभिः॥

इति सर्वदेवताह्वानं कृत्वा, ततः दिग्देवताबल्यर्थं परितः आवरणेषु नित्योत्सवार्चां परितः वीथिकासु सुदर्शनं अस्त्रमूर्तिं वा प्रतिदिशं भेरीताडनपूर्वकं ग्रामं गमयित्वा, प्रदक्षिणीकृत्य ग्राममध्यं समासाद्य, तत्र ब्रह्माणं आवाह्य अर्चयित्वा प्रतिदिशं इन्द्रादीन् च बल्यर्थं आवाह्य अभ्यर्च्य सन्निधिं प्रार्थ्य, तेषां स्वस्वतालादिसहितं एवं कृत्वा, अन्यत्र अन्तरालेषु गारुडं तालं घोषयित्वा, मन्दिरं प्रविश्य, यथापुरं निवेशयेत्। यद्वा उत्सवबिम्बेन वा केवलं सुदर्शनेन अस्त्रमूर्तिना वा, यद्वा केवलां भेरीं वा आदाय रथ्यासु तत्र तत्र यथाविधि देवताह्वानं कुर्यात्।

देवताह्वानवेलायां भेरीं शृण्वन्ति ये जनाः ।
तैः नदीतरणं नैव यानं वा योजनात्परम् ॥
अनादृत्ये त्सवं मोहात् दूरं यायात् जनो यदि ।
स याति निरयं स्थानं प्रेत्य दुःखमिहापि च ॥
तस्मादवभृथं यावत् वसेत्तत्रैव नो व्रजेत् ।
ध्वजार्थं अङ्कुराः येन न्यस्ताः स यदि कारणात् ॥
कुतश्चिदसमर्थो वा मृतो वा देशिकोत्तमः ।
शेषं समापयेत् अन्यः पुत्रो वा तदनुज्ञया ॥
शिष्यो वा यदि वा भ्राता ऋत्विग्वा गुणवत्तरः ।

इति श्रीवराहगुरु विरचितायां क्रियाकैरवचन्द्रिकायां
ध्वजारोहणविधिः नाम
त्रयस्त्रिंशः परिच्छेदः

---

## अथ चतुस्त्रिंशः परिच्छेदः

# अथ उत्सवविधिः उच्यते

उत्सवारंभादिवसात् अर्वाक् सप्तमे पञ्चमे अहनि वा गुरुः
"व्रतेषु स्नपने सर्वप्रायश्चित्तेषु कर्मसु ।
वेदव्रतेषु चतुर्षु प्रारंभे यागकर्मणाम् ॥
वसुधासंग्रहे काले शिलासंग्रहकर्मणि ।
शङ्कुस्थापनकाले च ध्वजारोहणकर्मणि ॥
विविधासु प्रतिष्ठासु बाह्याभ्यन्तरकर्मसु ।

आचार्यत्वे कृते कर्ता वपनं स्नानं आचरेत् ॥
वपनेन विना कर्म यदि तन्निष्फलं भवेत् ॥"

इति वचनात् पूर्वं तथा कृत्वा, तदनु शुभे मुहूर्ते पालिकादिपात्रवर्गत्रयाष्टोत्तरशते त्रिवर्गपात्रषट्त्रिंशतौ वा विधिवत् उत्सवाङ्कुरार्पणं अधिवासानन्तरं कारयेत् ।

गेहमण्डपप्रासादगोपुरवीथिकाः तोरणध्वजवितानकदलीक्रमुकपूर्णकुम्भसाङ्कुरपालिकाशतदीपागरुधूपादिभिः अलङ्कारैः अलङ्कृत्य, प्रथमावरणे द्वितीयावरणे दिशां अन्तरालेषु सर्वासु दिक्षु अवकाशानुगुणं सप्तहस्तायतं पञ्चहस्तायतं वा विस्तारायामसदृशं चतुर्द्वारसमन्वितं यागमण्डपं कल्पयित्वा, तस्य परितः प्रपां कारयित्वा, त्र्यंशे तस्य मध्ये हस्तसमुच्छ्रितां द्विहस्तेन त्रिहस्तेन वा विस्तीर्णां वेदिं कारयित्वा, तस्याः प्राच्यां आहवनीयस्य अग्नेः चतुरश्रं कुण्डं, दक्षिणस्यां दक्षिणाग्नेः चापसमाकृतिं, प्रतीच्यां गार्हपत्यस्य वृत्तं, कौबेर्यां दिशि सभ्यस्य त्रिकोणं ऐशाने अग्निकोणे वा आवसथ्यस्य चतुरश्रं कुण्डं यद्वावसथ्यरहितं यद्वैकमाहवनीयं वा कुण्डं कल्पयित्वा, पूर्ववत् तोरणस्तु वस्त्रु वाष्टमङ्गलविविधहोमपात्रासनादीनि अन्यानि यागोपकरणानि कारयित्वा, यागमण्डपं वितानदर्भमालातोरणपुष्पमालाधूपदीपाद्यतस्तंभास्तंभादिपरिष्कारैः भूषयित्वा, पूर्वं चतुर्णां आचार्याणां वरणं, ततः षोडशानां ऋत्विजां, तदनुपरिचारकाणां च कृत्वा, यजमानः तान् कटककर्णिकाङ्गुलीयकक्षौमवस्त्रोत्तरीयोष्णीष-

गन्धानुलेपनादिभिः अलङ्कारैः भूषयेत्।

उत्सवारंभे तदन्ते च यथोदितं स्नपनं कुर्यात्। उत्सवदिनात्पूर्वेद्युः गुरुः उत्सवाधिवासार्थं मूर्तिपैः सह गर्भमन्दिरं प्रविश्य, मूलबेरं अर्घ्यादिभिः अभ्यर्च्य, मूलात् उत्सवबिम्बे समावाह्य, अभ्यर्च्य अधिवासार्थं रक्षाबन्धनकर्म करिष्ये इति संकल्प्य, पुण्याहपूर्वकं देवस्य देव्याश्च यथाविधि रक्षाबन्धनं कृत्वा, अर्घ्यादिभिः अभ्यर्च्य महापूपादि निवेद्य, अन्यत्र स्थाने त्रिभिः भागवतैः विनिवेश्य, यथाविधि स्नपनकर्म कृत्वा, क्षौमवसनादिभिः अलङ्कृत्य, परमान्नं निवेद्य, प्रतिष्ठायामिव यथाविधि शय्यां कल्पयित्वा, तस्यां देवीभ्यां सह देवं शाययित्वा, कोणेषु दीपान् साङ्कुरपालिकाश्च स्थापयित्वा, अग्निं संस्कृत्य समिदाज्यचरुभिः मूलेन पुरुषसूक्तेन च यथाविधि अधिवासहोमं कृत्वा, तूर्यघोषैः वेदघोषैः सह देवं स्तोत्रैः स्तुत्वा, गुरुः समाहितचित्तः सन् जागरेण निशां नीत्वा, ततः प्रभाते सुमुहूर्ते गुरुः 'उत्तिष्ठ'[1] इति मन्त्रेण देवं उत्थाप्य, संपूज्य इमां गाथां विज्ञापयेत्।

"प्रसीद देवदेवेश उत्सवः क्रियते मया।
अस्मात्काललवाद्यावत् पुष्पयागदिनान्तिमम्॥
त्वत्प्रीतये जगन्नाथ यद्यत्कर्म करोम्यहम।
तत्सर्वमात्मसात्कृत्वा कृपया मे प्रसीद ओं॥"

---

१ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वे महे। उपप्रयन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा।

इति विज्ञाप्य, द्विजेषु ब्राह्मणेषु शाकुनसूक्तं[1] पठत्सु, देवं इदं विष्णुः[2] इति मन्त्रेण शिबिकादिकं यानं आरोप्य, यानं वहत्सु भूसुरेषु, गरुडं आवाह्य, सर्वालङ्कारसर्वोपचारसहितं देवं सर्वावरणभूमिकाः प्रदक्षिणं नीत्वा, यानात् अवरोप्य, मण्डपे सौवर्णे भद्रासने विनिवेश्य सर्वमुत्सवार्थं आहृतं प्राभृतद्रव्यं जनसंसदि इतो यातं इदं सर्वं इतो यातं इति दर्शयित्वा, मन्त्रासनपुरस्सरं पूर्वोदितक्रमात् स्नानकर्म कृत्वा, आचार्यः यजमानश्च विभवोदयं समीक्ष्य, महाहविः निवेद्य,

---

१ अनूहृयं परिहृवं परीवादं परिक्षयम् ।
दुःस्वप्नं दुर्हितं तद्विषद्भ्यो दिशाम्यहम् ॥१॥
अनुहूतं परिहूतं शकुने यदशाकुनम् ।
मृगस्य श्रुतमक्षणया तद्विषद्भ्यो दिशाम्यहम् ॥२॥
आरात्ते अग्निरस्त्वारात्परशुरस्तु ते निवाते त्वभिवर्षतु ।
स्वस्ति तेऽस्तु वनस्पते स्वस्ति मेऽस्तु वनस्पते ॥३॥
नमः शकृत्सदे रुद्राय नमो रुद्राय शकृत्सदे ।
गोष्ठमसि नमस्ते अस्तु मा माहिं ठँ सीः ॥४॥
सिगसिनसि वज्रे नमस्ते मा माहिं ठँ सीः ॥५॥
उद्गानेव शकुने साम गायसि ब्रह्मपुत्र इव सवनेषु शंससि
वृषेवाजी शिशुमतीरपीत्या सर्वतो नः शकुने भद्रमावद
विश्वतो नः शकुने पुण्यमावद स्वस्ति नः शकुने अस्तु प्रति
नः सुमना भव ॥६॥

२ इदं विष्णु विंचक्रमे त्रेधा निदधे पदम् । समूढमस्यपांसुरे ॥

यथाविधि हुत्वा, देवं मन्दिरान्तर्भुवं नीत्वा, ततः अपराह्णे ...प्ते, गरुडेन विष्वक्सेनेन वा साकं बहिः निर्गत्य, यथाविधि पूर्ववत् मृत्संग्रहणं कृत्वा, यागमण्डपं प्रविश्य, त्रिवर्गेषु पालिकादिपात्रेषु उत्सवाङ्कुरार्पणं कृत्वा, सुदर्शनस्नपननित्यो-त्सवबलिबिम्बानां कल्याणकौतुकस्य इव कौतुकबन्धनाधिवास-स्नपनकर्माणि पृथक् कृत्वा, यागमण्डपं प्रवेश्य, तत्रासने विनिवेश्य, ततः गुरुः यजमानेन सदनं प्रविश्य, देवं दण्डवत् प्रणम्य,

"भगवन् पुण्डरीकाक्ष करिष्ये कौतुकक्रियाम्।
महोत्सवार्थं देवेश तदर्थं त्वं प्रसीद मे॥

इति विज्ञाप्य, मूलोत्सवस्नानबलिबिम्बचक्राणां यथाविधि ...त्सवप्रतिसरं बध्वा, तदनु वेदिकायां शालीनां पञ्चभारेण तदर्धेन तण्डुलेन, तदर्धेन तिलेन च धान्यपीठं कृत्वा अन्तरा-न्तरयोगेन वस्त्रैः आच्छाद्य, तत्र प्रक्षालितान् ससूत्रान् सगन्धोदकान् न्यस्तनवरत्नान् सौगन्धिकरजोयुतान् सकरकान् प्रत्येकं न्यस्तनिष्कमात्रसुवर्णान् साश्वत्थपल्लवकुशकूर्चा-पिधानान् नवकुम्भान्, मध्यमं वस्त्रयुग्मेन शिष्टान् एकेन वाससा सप्तभिः षड्भिः पञ्चभिः वा हस्तैः आयतेन तदर्धेन विस्तृतेन आच्छाद्य, वेदिकाभूमौ धान्यराशिषु संस्थाप्य, वैष्णवैः सह पुण्याहं वाचयित्वा, प्रोक्ष्य, द्वारतोरणध्वजकुम्भान् अभ्यर्च्य, करके सुदर्शनं च, पूर्वाद्याशागतेषु कुम्भेषु वासुदेवादीन् आग्नेयादिकोणगतेषु पूर्ववत् पुरुषादीन् च

आवाह्य, अभ्यर्च्य, सुदर्शनवलित्रिम्बयोश्च अष्टमङ्गलानि पृथक् वासोभिः आवेष्ट्य, वेदेः अधस्तात् धान्यराशिषु विन्यस्य अभ्यर्च्य वेदिकायां यथाविधि पूर्वोक्तवर्त्मना चक्राब्जं वर्तयित्वा, तस्मिन् सांगं सपरिवारं वासुदेवं यथाविधि पूर्ववत् अभ्यर्च्य, संपूज्य, चतसृषु दिक्षु वेदघोषे च प्रवृत्ते गुरुः आहवनीयाग्नौ वासुदेवं दक्षिणाग्नौ संकर्षणं गार्हपत्ये प्रद्युम्नं, सभ्याग्नावनिरुद्धम्, आवसथ्ये मूलमूर्तिं च तत्तत्कुण्डाग्निमध्यगतभद्रासनपद्मेषु आवाह्य, अभ्यर्च्य, तीर्थावसानिकं सन्निधिं प्रार्थ्य, कुण्डेषु घृतप्रसूनधूपद्रव्यसमित्पयोदधितिलव्रीहियवैः तत्तद्देवतामन्त्रेण पृथक् अष्टोत्तरशतं आहुतीनां अष्टाविंशतिं वा हुत्वा, आहवनीयाद्यनुक्रमेण पायसक्रुसरगुडहरिद्रान्नमुद्गान्नैः पुरुषसूक्तस्य षोडशभिः प्रत्येकं हुत्वा, पञ्चमाग्नौ ब्रह्मादिदेवान् उद्दिश्य, पायसेन तत्तन्नाम चतुर्थ्यन्तं स्वाहान्तं उच्चार्य परिवारपदान्वितं वक्ष्यमाणेन विधिना हुनेत्। ओं ब्रह्मणे सपरिवाराय स्वाहा, ओं प्रजापतये सपरिवाराय स्वाहा, ओं रुद्राय सपरिवाराय स्वाहा, ओं सर्वेभ्यः देवेभ्यः सपरिवारेभ्यः स्वाहा, ओं छन्दोभ्यः सपरिवारेभ्यः स्वाहा, ओं वेदेभ्यः सपरिवारेभ्यः स्वाहा, ओं ऋषिभ्यः सपरिवारेभ्यः स्वाहा, ओं गन्धर्वेभ्यः सपरिवारेभ्यः स्वाहा, ओं सरीसृपेभ्यः सपरिवारेभ्यः स्वाहा, ओं यक्षेभ्यः सपरिवारेभ्यः स्वाहा, ओं अप्सरोभ्यः सपरिवारेभ्यः स्वाहा, ओं मासादिभ्यः सपरिवारेभ्यः स्वाहा, ओं

वत्सरेभ्यः सपरिवारेभ्यः स्वाहा, ओं सर्वेभ्यः देवेभ्यः सपरिवारेभ्यः स्वाहा, ओं समुद्रेभ्यः सपरिवारेभ्यः स्वाहा, ओं पर्वतेभ्यः सपरिवारेभ्यः स्वाहा, ओं आपगाभ्यः सपरिवाराभ्यः स्वाहा, ओं भूतेभ्यः सपरिवारेभ्यः स्वाहा, ओं पशुभ्यः सपरिवारेभ्यः स्वाहा, ओं वृक्षेभ्यः सपरिवारेभ्यः स्वाहा, ओं ओषधीभ्यः सपरिवाराभ्यः स्वाहा, ओं वनस्पतिभ्यः सपरिवारेभ्यः स्वाहा, ओं उद्भिद्भ्यः सपरिवारेभ्यः स्वाहा, ओं स्वेदजेभ्यः सपरिवारेभ्यः स्वाहा, ओं अण्डजेभ्यः सपरिवारेभ्यः स्वाहा, ओं जरायुजेभ्यः सपरिवारेभ्यः स्वाहा, ओं भूरादिसप्तलोकेभ्यः सपरिवारेभ्यः स्वाहा, ओं अतलादिसप्तपातालेभ्यः सपरिवारेभ्यः स्वाहा, ओं चण्डादिदेवेभ्यः सपरिवारेभ्यः स्वाहा, इति हुत्वा प्रायश्चित्तार्थं पञ्चोपनिषन्मन्त्रैः व्याहृतिभिश्च, पूर्णाहुतिं इदं विष्णुरिति[२] हुनेत्। एवं तत्तद्दिनविहितबलिद्रव्यैः उपरिष्टात् तत्र तत्र तत्तद्देवतोद्वासनरहितं प्रत्यहं यावत्तीर्थदिनावधि सायं प्रातः हुनेत्। एकाग्नौ वा होमद्रव्यं त्रये चतुष्टये वा अग्नौ हुनेत्। तावता च अग्निं सम्यक् रक्षेत्।

बलिदानं तु प्रथमं यागमण्डपे कर्तव्यम्। तत्प्रकारस्तु चक्रबलिबिम्बान्नमूर्तिसहितं यागमण्डपात् निष्क्रम्य, तद्द्वारेषु पुरतः कुमुदादीनां शुचौ भूमौ आवाह्य अभ्यर्च्य, बलिं दत्त्वा,

२ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्।
समूढमस्य पांसुरे॥

बलिद्रव्यपात्रघण्टापुष्पभाजनतोय करकधूपदीपपात्रदीपिका-धारकेषुपरिचारकेषु अग्रे गच्छत्सु, तदनु अन्नमूर्तिः, ततः चक्रं, तदनु नित्योत्सवार्चा च इत्येवं कृत्वा, वितानछत्रादि-समन्वितं द्वारेषु चण्डादीनां आवरणेषु तत्तद्देवतानां तोयपूर्वोत्तरं बलिं निक्षिप्य, बलिमुद्रां मङ्गलाष्टकं च दर्शयित्वा, ग्राममध्यं आरभ्य ब्रह्मादीशानपर्यन्तं क्रमात् तत्तद्देशेषु तौर्यत्रिकसहितं तत्तद्देवताः अभ्यर्च्य बलिं दत्त्वा, महाबलिपीठे तु अशेषतः अवशिष्टं बलिद्रव्यं सर्वान् पार्षदान् उद्दिश्य बलिं दत्त्वा, बलिं प्रदक्षिणीकृत्य आलयं प्रविशेत्। एवं ध्वजारोह-णादितीर्थान्तं सायं प्रातः बलिं दद्यात्। आरंभदिवसे रात्रौ समाप्तिदिवसे अहनि बलिमेकामेकां मध्यदिवसेषु अह्नि रात्रौ च बलिद्वयं कुर्यात्। तीर्थदिवसे ग्रहणायनविषुवादिषु प्राप्तेषु तस्मिन् बलिद्वयं कुर्यात। ग्रामादिरहिते स्थानमध्ये महा-पीठस्य पुरतः ब्रह्मणे बलिं वितरेत्।

बलिद्रव्याणि तु प्रथमेहनि पललरजनीचूर्णकरंभलाजान् चरुणा संयोज्य, द्वितीये अहनि चरुणा तिलतण्डुले संयोज्य, तृतीये तु लाजधान्यापूपिकाः चरुणा संयोज्य, चतुर्थे चरुणा सक्तुशालिपिष्टनालिकेरजलानि संयोज्य, पञ्चमे पद्मबीजपायस-शालितण्डुलं चरुणा संयोज्य, षष्ठे तु अपूपं चरुणा संयोज्य, सप्तमादिषु त्रिषु दिवसेषु चतुर्विधमन्नं अपूपैः सक्तुभिः संयोज्य क्रमात् बलिं दद्यात्।

तदनु सुमुहूर्ते प्राप्ते गुरुः शयनस्थं उत्सवकौतुकं

'उत्तिष्ठे'[1] ति मन्त्रेण उत्थाप्य, स्वस्तिसूक्तं पठद्भिः ब्राह्मणैः सह तस्मात् मन्दिरात् निर्गम्य, रथन्तरसाम उच्चार्य, स्यन्दनेन गजेन वा अन्येन वा यानेन मण्डपान्तरं नीत्वा, तत्र "भद्रं कर्णेभिः"[2] इति तद्दिनविहितं यानमारोप्य, तत्र देवं न्यासपूर्वकं अभ्यर्च्य, पृथुकादिकं निवेद्य, क्षौमाभरणमाल्यादिभिः अलङ्कृत्य, देवस्य चरणयोः निशाचूर्णं निक्षिप्य, घृतादिपरिषिक्तैः दीपैः सर्वतः वीथिकाश्च अलङ्कृत्य, वालव्यजनतालवृन्तबर्हिबर्हमुक्तातपत्रालिधूपदीपधारिभिः स्वलङ्कृतैः ब्राह्मणैश्च पुरतः यानारूढेन साञ्जलिना ध्वजारूढेन तार्क्ष्येण पृष्ठतश्च कनकशिबिकां आरूढेन वेत्रहस्तेन विरिञ्चादीन् समुत्सारयता प्रणमता विष्वक्सेनेन च कनकपात्रे पादुके समारोप्य पुरतः धारयद्भिः विप्रैश्च राजचिह्नैः अन्यैः सकलवेदशास्त्रागमज्ञैः परस्परजिगीषुभिः वादनिपुणैः विप्रैः गद्यपद्यमिश्राणि स्तोत्राणि पठद्भिः वन्दिभिश्च नृत्यता गायता गाणिक्येन च अन्यैः तत्तद्विद्याविशारदैश्च साकं आनद्धततसुषिरघनादिचतुर्विधवाद्यघोषैः च आवरणं सर्वं परिक्रम्य, बहिः तथा वीथिकाश्च प्रदक्षिणं परिक्रम्य प्रवेशसमयेऽपि प्राकारवलयं प्रदक्षिणयेन गत्वा, मण्डपालयं अन्तः प्रवेश्य तत्र

---

१ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे। उपप्रयन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा।

२ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः॥

थानात् आसने देवं अवरोप्य, बलिबेरमन्दिरे चक्रं यागसदने बहिःस्थिते बलिपीठे च अन्नमूर्तिं निवेश्य ध्रुवबेरं नित्यैः द्विगुणैः वस्तुभिः अर्चयेत्। प्रत्यहं देवस्य वीथिकापर्यटनानन्तरं यथाविधि स्नपनकर्म कुर्यात्।

एकबेरविधाने तु मूलबिम्बे, बहुबेरे तु उत्सवकौतुके वा स्नपनकौतुके वा यथाशक्ति यथावस्तु स्नपनं कुर्यात्। मण्डपे सिंहविष्टरे देवं निवेश्य, देहशुद्धिपुरस्सरं अर्चयित्वा स्नपनकर्म समाप्य, महाहविः निवेद्य, मण्डनालयं आसाद्य, देवं भूषणादिभिः अलङ्कृत्य, बिम्बे तत्र स्थिते, देशिकः यागमण्डपं प्राप्य, द्वारतोरणकुम्भमहाकुम्भोपकुम्भमण्डलाराधनं कृत्वा यथोदितं निवेद्य, पूर्ववत् हुत्वा, यथाविधि पूर्ववत् बल्यर्चादिबिम्बयुतं बलिकर्म कृत्वा, तदनु उत्सवार्चां अलङ्कृत्य, यानं आरोप्य पूर्ववत् सर्वालङ्कारसहितं ग्रामधामादि प्रादक्षिण्येन नीत्वा, तत्र स्थाने स्थाने समाहृतताम्बूलवीटिकाः पृथुकादीन् भक्ष्याणि नालिकेरफलानि पानीयाचमनादीनि यथाविधि अखिलं नैवेद्यं च अस्त्रमन्त्रेण अद्भिः प्रोक्ष्य निवेदयेत्। पक्वं फलं तूष्णीं प्रदर्शयेत्। पुष्पाभरणादिकं पथि समागतं सर्वं मन्त्रेण प्रोक्ष्य देवाङ्गे नियोजयेत्। एवं ग्रामं धाम च प्रदक्षिणं नीत्वा, धाम प्रवेश्य, देवं यानात् शिबिकां आरोप्य मण्डपं प्रवेश्य, तत्र पूर्ववत् सर्वोपचारसहितं अर्चयेत्। एवं अपूर्वाभरणमालाम्बरयानोद्यानाद्यैः तीर्थदिनावधि प्रतिदिनं यथाकौतूहलं तथा देवं तोषयेत्। ग्रामादौ नित्यं देवस्य श्रीनृसिंहभ्यां

सह विना वा महोत्सवं कुर्यात्। षष्ठे अहनि स्नानबिम्बसहितं यात्राकौतुकं भद्रासनं आरोप्य, तस्य पुरतः धान्यराशौ कुम्भान् संस्थाप्य संपूज्य, देवं मन्त्रासनादिस्नानासनान्तैः उपचारैः उपचर्य, कलशैः संस्नाप्य, वस्त्रादिदीपान्तैः उपचारैः संपूज्य, एकबेरविषये मूलबेरे सर्वमेवं कृत्वा, तदनु क्षालितं उलूखलं वस्त्रादिभिः अलङ्कृत्य तण्डुलपीठे संस्थाप्य, श्रीसूक्तेन लक्ष्मीं ध्यायन् मन्त्रितं अर्चितं कृत्वा मूलमन्त्रेण मुसलं प्रक्षाल्य अभिमन्त्र्य मूर्तिपैः सार्धं गुरुः उलूखले निशाचूर्णं निक्षिप्य मुसलं आदाय देवदासीषु मङ्गलं पठन्तीषु निशाचूर्णं यथा सूक्ष्मतरं भवेत् तथा मुसलेन कृत्वा, तदादाय वेष्टितवाससि कुम्भे निक्षिप्य, सकूर्चमल्लकवस्त्रं कुम्भं स्थण्डिलपीठे संस्थाप्य मूलमन्त्रेण गन्धादिभिः अभ्यर्च्य, कुम्भं उद्धृत्य, तैः चूर्णैः श्रीसूक्तेन देवं अभिषिच्य, मूर्तिपैः सह गुरुः देवं प्रदक्षिणं कृत्वा, अष्टाङ्गप्रणिपातेन प्रणिपत्य, पुष्पाञ्जलिं विकीर्य, स्तोत्रैः स्तुत्वा, सर्वालङ्कारयुतं उत्सवं कुर्यात्।

सप्तमे दिवसे रथं पुण्याहजलेन प्रोक्ष्य, शिखरे ब्रह्माणं, अयने हंसं, द्वितीयतले अनन्तं, उपकण्ठे वासुदेवं, प्रथमतले तक्षकं महापीठे गरुडं मध्यपीठे इन्द्रादीन् च प्रथमपीठे कुमुदादीन, चक्रेषु वायुं, रथे वैनतेयं च आवाह्य अभ्यर्च्य, हविः निवेद्य, इन्द्रादिकुमुदादिभ्यः बलिं दत्त्वा, देवं रथं आरोप्य, पूर्ववत् उत्सवं कुर्यात्।

तदनु देवस्य प्रातः उत्सवं कृत्वा, अपराह्णे देवस्य

जलद्रोण्यां अवगाहनं कुर्यात्। जलद्रोणीं कटाहं वा सरसि सोपानदेशे सौवर्णं धान्यराशौ निधाय, गन्धोदकेन आपूर्य, परितः अक्षतानि विकीर्य, पुण्याहं वाचयित्वा, परिस्तीर्य, तज्जलं शोषणादिभिः संशोध्य, तत्र गंगाद्याः सरितः आवाह्य अभ्यर्च्य, जलं अब्लिङ्गैः[1] मन्त्रैः अभिमन्त्र्य, देवं प्रार्थयेत्।

"भगवन् पुण्डरीकाक्ष शरणागतवत्सल।
अस्मिन्नहनि कर्तव्या जलक्रीडा त्वया विभो॥
शुद्धये सर्वलोकानां देवानां प्रीतयेऽपि च।
यात्रा तदर्थं कर्तव्या मदनुग्रहकाम्यया॥"

इति विज्ञाप्य देवं प्रणम्य, मन्त्रासनादिस्नानासनान्तैः उपचारैः उपचर्य, वाद्य घोषेषु प्रवर्तितेषु वारुणसूक्ताद्यब्लिङ्गैः मन्त्रैः तत्र देवं अवगाह्य, तदनु यानं आरोप्य, अन्यं मण्डपं आनीय, तत्रापि देवं हविरन्तं अभ्यर्चयेत्।

यद्वा अष्टमे अहनि वा प्रातरुत्सवं कृत्वा तदनु मृगयाकर्म, तदनु जलद्रोण्यवगाहनं वा कुर्यात्। तस्मिन् दिने देवं मृगयानुगुणायुधालंकारसन्नाहैः सह, गजे वा कृत्रिमाश्वे वा आरोप्य, देवीभ्यां सह विना वा, हस्त्यादिभिः सैन्यैः सह ग्रामसीमादीन् प्रादक्षिण्येन नीत्वा, देवं उद्यानमण्डपं प्रापय्य, तत्र मध्ये

---

१ आपो हिष्ठा मयोभुवस्तान ऊर्जे दधातन। महेरणाय चक्षसे॥ यो वः शिवतमोरसस्तस्य भाजयते हनः॥ ऊशतीरिव मातरः तस्मा अरङ्गमामवो यस्य क्षयाय जिन्वथ। आपोजन यथा चनः।

सौवर्णविष्टरे विनिवेश्य, स्नानपूर्वं अभ्यर्च्य, अन्यस्मिन् आसने विनिवेश्य, महाहविः निवेद्य, यानं आरोप्य, तद्रात्रौ मन्दिरान्तर्मुखं नीत्वा,

तदनु यथापूर्वं नित्योत्सवं कृत्वा, अपररात्रिभागे तीर्थार्थं अङ्कुरार्पणं करिष्ये इति संकल्प्य, अङ्कुरावापनं यथाविधि कृत्वा, देवं संपूज्य इमां गाथां उदीरयेत्।

तीर्थयात्रा त्वया देव श्वः कर्तव्या सुरेश्वर।
तत्र प्रतिसरारंभं त्वमनुज्ञातुमर्हसि॥

इति विज्ञाप्य, मूलात् तीर्थबिम्बे समावाह्य, तीर्थबिम्बे प्रतिसरं तदभावे नित्योत्सवबिम्बे तस्यापि अभावे स्नानार्चायां, तदभावे च उत्सवबिम्बे वा बद्ध्वा, धान्यराशौ पूर्ववत् यथाविधि अधिवास्य, ततः प्रातः उत्सवं कृत्वा, तदनु शायितं बिम्बमुत्थाप्य स्नानमण्डपे स्नानपीठिकायां तं निवेश्य, यागमण्डपभूमिषु स्थापितान् कुम्भान् आदाय धामप्रादक्षिण्येन वेदघोषैः वाद्यघोषैः सह नीत्वा, तीर्थबिम्बस्य सन्निधौ धान्यराशौ संस्थाप्य, देवं मन्त्रासनपूर्वकं पूर्वं संस्नाप्य, तदनु सुमुहूर्ते गुरुः स्थापितैः कुम्भैः मूलमन्त्रेण पूर्वादिमध्यकुम्भान्तैः वेदघोषेषु प्रवर्तितेषु अभिषिच्य, वस्त्रादिदीपान्तैः उपचारैः उपचर्य, एकबेरविधाने तु सर्वं एतत् मूलबिम्बे कृत्वा, तदनु पूर्ववत् देवस्य चूर्णस्नानं यथाविधि कृत्वा, देवं स्तुत्वा, प्रदक्षिणीकृत्य, अष्टाङ्गप्रणिपातेन प्रणिपत्य पुष्पाञ्जलिं विकीर्य, तदनु कल्याणकौतुकं यानं आरोप्य, तीर्थबिम्बपुरस्सरं चक्रेण

सह छत्रध्वजचामरदीपवाद्यघोषसहितं समुद्रं नदीं तटाकं वा प्रापय्य, तत्र तीरे प्रपायां विष्टरे विनिवेश्य, अग्रतः पञ्चविंशतिः, सप्तदश, यद्वा कलशान् नव, यथाविधि तत्तद्द्रव्ययुतान् संस्थाप्य, संपूज्य, नद्यादिजलानां शोषणादि कृत्वा, पुण्याहं वाचयित्वा, प्रोक्ष्य, तत्र गङ्गाद्याः सरितः आवाह्य अभ्यर्च्य निवेद्य, तीर्थबिम्बं मन्त्रासनपूर्वकं संपूज्य, कलशैः यथाविधि संस्नाप्य, चक्रं शिष्टवारिणा च, तीर्थार्थं समानीतं कल्याण-कौतुकं कूर्चेन नद्यादिजलेन प्रोक्ष्य, कल्याणकौतुकसन्निधौ तद्बिम्बं गुरुः शिरसि कृत्वा, चक्रं वा तदभावे कूर्चं वा तथा कृत्वा, चक्रमन्त्रं उच्चरन् जले निमज्जेत्। ततः गुरुः तदानीमेव बिम्बानां स्वस्य च रक्षासूत्राणि विसृज्य, जले क्षिप्त्वा, तदनु मण्डपे देवं आनीय यथापुरं पूजयित्वा यानं आरोप्य आलया-भ्यन्तरं प्रापयेत्। तद्रात्रौ देवं मण्डपे नीत्वा यथाविधि अभ्यर्च्य प्रभूतं निवेद्य;

भगवन् पुण्डरीकाक्ष शरणागतवत्सल।
ध्वजार्थाङ्कुरमारभ्य उत्सवावभृथान्तिमम्॥
यन्मयानुष्ठितं कर्म तव सुप्रीतये विभो।
तथान्यैः मदनुज्ञातैः देशिकैश्चापि यत्कृतम्॥
साधकैश्च तथान्यैश्च विविधैः परिचारकैः।
तत्तत्संपूरणार्थं च न्यूनाधिक्योपशान्तये॥
त्वामद्यवासरे यष्टुं चतुस्स्थानस्थितं विभो।
अद्यत्वमनुजानीहि मदनुग्रहकाम्यया॥

इति देवेशं विज्ञाप्य, तदनुज्ञां अवाप्य, ततः प्रभाते भक्तैः भागवतैः सेविते मण्डपान्तरे क्वचिद्भूतले चक्राब्जं आवरणान्वितं उक्तवर्त्मना संकल्प्य, तुलस्यादिभिः नानावर्णैः प्रसूनैः यथाविधि चित्रयित्वा, तत्र मध्यतः सप्रभं भद्रपीठे निधाय, तस्मिन् कल्याणकौतुकं आरोप्य अर्घ्यादिभिः अभ्यर्च्य सर्वतः दिक्षु वेदघोषेषु वाद्यघोषेषु च प्रवर्तितेषु द्वादशाक्षरेण[1] भगवन्तं अर्चयेत् ।

ओं द्वादशाक्षरमन्त्रस्य परमेष्ठिसनन्तसनकप्रजापतिभृगुसनत्कुमारपुलस्त्यपुलहक्रतुमरीच्यत्र्यङ्गिरसऋषयः, गायत्रीयस्तदेवप्रजापतित्रिष्टुप्पङ्क्तिबृहतीविराड्बष्ठत्रिवत्सकोष्णितः श्रियश्छन्दांसि, विष्ण्वादिगोविन्दान्ता द्वादश देवताः, त्रिजीवप्रकृतिबुद्धिमनस्सात्त्विकराजसतामसव्योमाग्निमरुदापस्तत्त्वानि, परमव्योमवाय्वग्निजलसत्यतपोजनमहस्स्वर्गभुवर्भूसिपातालानि क्षेत्राणि, सितकृष्णधूम्रश्यामताम्रस्फटिकशङ्खरक्तशुक्ललोहिततमः पीता वर्णाः ।

द्वादशसु अक्षरेषु एकैकं, हरिं ध्यात्वा, अर्घ्यादिभिः भूषान्तैः नवभिः उपचारैः कल्याणकौतुकं अभ्यर्च्य, पुष्पैरपि हृदयाद्यङ्गानि उद्दिश्य च पुष्पैः फलं भवतु मे पुष्पैः नमः इति अवसानकं च, ततः श्रीवत्सकौस्तुभादिभूषणानि उद्दिश्य दिव्यायुधानि चक्रादीनि च यथाक्रमं आवरणस्थानां देवतानां च; विष्ण्वादिमूर्तिदशकं, केशवादिचतुर्विंशतिमूर्तींश्च उद्दिश्य

---

१ ओं नमो भगवते वासुदेवाय ।

तत्तन्मन्त्रैश्च, पुरुषसूक्तनारायणानुवाकविष्णुसूक्तैश्च, पञ्चोपनिषन्मन्त्रैश्च, पादयोः पुष्पसमर्पणं कृत्वा सितादिभिः पुष्पैः एवं देवं तोषयित्वा, चतुर्विधं अन्नं निवेद्य, मण्डपे तत्र आग्नेये अग्निं उपसमिध्य, समिदाज्यचरुभिः पायसादिचतुर्विधान्नैश्च मूलमन्त्रेण पृथक् अष्टोत्तरशतवारान् हुत्वा, ततः देवं प्रदक्षिणीकृत्य स्तुत्वा भूतले दण्डवत् प्रणम्य कल्याणकौतुकं यानं आरोप्य, प्रथमावरणं प्रापय्य, तत्र स्थित्वा सेवार्थं आगतान् ब्रह्मादिदेवान् भक्तान् भागवतान् अन्यान् वैष्णवान् च स्वं स्वं आलयं गन्तुं नियुज्य, तदावरणं प्रदक्षिणं परिक्रम्य, मन्दिराभ्यन्तरं नीत्वा, तस्य दिवसस्य निशि प्रथमयामे मण्डपे स्नानासने देवं निवेश्य उत्सवान्तोचितं स्नपनं यथाविधि कृत्वा, मण्डपान्तरं नीत्वा, महाहविः निवेद्य, गुरुः यागमण्डपं आसाद्य, तत्र यथाविधि होमं कृत्वा, शान्तिहोमं च पूर्वोक्तविधानेन प्रायश्चित्तार्थं पञ्चोपनिषन्मन्त्रेण आज्येन सहस्रं शतं वा आहुतीनां हुत्वा, ततः पूर्णाहुतिं च, अग्निं विसृज्य, तत्र तोरणादिषु देवान् मण्डलस्थं च उद्वास्य, ध्वजस्तंभं आसाद्य, खगाधिपं पूजयित्वा, महाहविः निवेद्य, प्रदक्षिणं कृत्वा, संहारक्रमेण कुम्भे समावाह्य, तन्मूलबेरे नियुज्य, कल्याणकौतुकस्य सन्निधावेव महानिशि ध्वजं अवरोप्य, स्तंभं ध्वजं च गुरुः स्वयं गृहीत्वा, तदनु तत्र तत्र आवाहितान् देवान् अपि स्थाने स्थाने सकृत् सकृत् तूर्यघोषैः सह मूकैः परिकरैः सार्धं बलिं दत्त्वा, स्वस्वनाममन्त्रैः उद्वास्य, गुरुः अष्टाक्षरं

जगन् देवस्य धाम प्रविश्य, देवं विज्ञाप्य, शकटादिकं यानं आरोप्य, मङ्गकौतुकं धामान्तः प्रापय्य संपूज्य, तच्छक्तिं मूलबिम्बे नियोज्य, मूलबिम्बं संपूज्य, स्तुत्वा, प्रणिपत्य, प्रार्थ्य प्रदक्षिणं कृत्वा, स्वगृहं प्रविशेत्। यजमानोऽपि गुरुं जीवाजीवात्मकैः धनैः यथामनस्तुष्टि तथा तोषयित्वा, तथैव अन्यान् मूर्तिपान् परिचारकान् च गुरुं प्रणम्य, तं यानं आरोप्य सर्वालङ्कारैः सह ग्रामप्रदक्षिणं कृत्वा तद्गृहं प्रापयेत्।

इति श्रीवराहगुरुविरचितायां क्रियाकैरवचन्द्रिकायां
महोत्सवविधिः नाम
चतुस्त्रिंशः परिच्छेदः

---

अथ पंचत्रिंशः परिच्छेदः

# अथ जीर्णोद्धारणविधिः उच्यते

स्वायंभुवार्षदिव्यमानुषेषु चतुर्ष्वपि रत्नजेषु अङ्गहानिः यदि तत्तदङ्गं पुनस्तपनीयैः समाधातव्यमेव, न त्यागो युज्यते। शैलजेष्वपि तद्वदेव। दार्वादिषु पञ्चसु हीनाङ्गेषु तान् सन्त्यज्य पुनस्सृजेत्। सर्वात्मना सृष्टौ अङ्गमात्रसमाधाने च तच्छक्तिं कुम्भे समावाह्य, यथापुरं निर्माय जलाधिवासादिकं सर्वं प्रतिष्ठायामिव कारयेत्। स्थित्यासनशयनारूढेषु बिम्बेषु

समाधिः शक्यते यदि तेषां त्यागः न युज्यते। लोहजं बिम्बं त्यक्तं द्रावयित्वा पुनः सृजेत्। देवे जीर्णे पुनस्सृष्टौ देव्यौ यथावत् स्थिताश्चेत् देवस्ताभिरेव योज्यः, न अन्याः पुनः सृजेत्। तासु पूजने सन्तते पुनः उद्वाहश्च न कार्यः। प्रभापद्मासनश्चायुधादीनां वैकल्ये चलने वापि असमाहित प्रतिमाशक्ति मूलबिम्बे घटे वा उद्वास्य तानि यथापुरं समाधाय यथाविधि संप्रोक्ष्य तां शक्तिं पुनः बिम्बे समावाह्य पुनः पूजयेत्। बालगेहं निर्माय तत्र शैलादिषु जीर्णेभ्यः शक्तिं आवाह्य पूजयेत्। समाधानानन्तरं ततः पुनः आवाह्य पूजयेत्। तत्रापि सन्धानयोग्यं सन्धेयम्, अयोग्यं तु क्षितौ अंभसि वा निक्षिपेत्। प्रासादे शिथिले स्वैः परिवारैः उपेतं देवं बालवेश्मनि यथापुरं पूजयेत्। अजीर्णे ध्रुवबिम्बे धामनि जीर्णे सति तत्स्थितान् देवान् देवपरिवारान् मूलबिम्बे निवेशयेत्। अजीर्णे धामनि जीर्णे ध्रुवबिम्बे तन्निष्ठदेवतानां उद्वासः न अन्यत्र कर्तव्यः। अजीर्णे वा अङ्गभङ्गादिरहिते धामादौ सति न पुनः कल्पनं कार्यम्। यदि कल्पयेत् आत्महानिः भवति। पुरा प्रमादात् प्रमाणरहितं कल्पितं प्रासादादि पुनः कल्पने लक्षणान्वितं कुर्यात्। बहुबेरैकबेरेषु यथापुरमेव कल्पयेत्। विपरीतकरणे महान् दोषो भवति। बहुबेरं पूर्वं देवीभ्यां रहितं यदि, भूयः कल्पने ताभ्यां सह विना वा कुर्यात्।

अमानुषे तु बिम्बादिकं पूर्वं लक्षणवर्जितं यदि जीर्णोद्धारेपि तथैव, न तदन्यथा। अमानुषे तु बिम्बानां

आसनशयनस्थानयानानि पुनः उद्धारे यथापूर्वमेव। मानुषे तु तेषां पुनः सृष्टौ यथेच्छाकरणं न दोषाय।

दिव्यं विमानं पुरा यद्वस्तु यन्मानं यादृशं पुनः सृष्टौ तादृगेव, न अन्यथा। आर्षं मानुषं सदनं ऐष्टकं मृण्मयं वा जीर्णं पुनः कल्पने शैलेन इष्टकया वा कार्यं। क्लृप्तानां उपपीठादीनां रक्षार्थं बहिः वर्धने न दोषः सालगोपुरपीठादौ चलिते जीर्णेऽपि शिलाभिः दृढं विस्तीर्णं अन्यथा वा कुर्यात्। नद्यादिजलवेगेन नष्टं चलितं वा प्रासादादि निर्बाधे अन्यत्र स्थाने पुनः कल्पयेत्। प्रथमकल्पने मूर्तिमन्त्राधिकारिणः यादृग्विधाः तथैवद्वितीयकल्पने च। न अन्यथा। ग्रामादीनां पूर्वकल्पने जीर्णोद्धारे च फलं तुल्यमेव। तत्र मूर्तिव्यत्ययं न कुर्यात्। बहुबेरावयवमात्रजीर्णोद्धारे तु प्रतिष्ठायामिव कर्मार्चां वेद्यां संस्थाप्य शय्यायां शाययित्वा जलाधिवासनयनोन्मीलन-तत्त्वसंहारोत्पादनानि विना सर्वकर्माणि कुर्यात्।

अथ बालालयप्रतिष्ठाविधिः उच्यते—

आचार्यः यजमानेन सह वैष्णवान् सकलशास्त्रवेदागम-पुराणज्ञान् ब्राह्मणानपि स्वयं आहूय, प्रणिपत्य, प्रार्थयन् एतान् भोजयित्वा, स्वर्णाभरणवस्त्रगन्धताम्बूलाद्यैः उपचर्य, तान् प्रदक्षिणीकृत्य, प्रणम्य, कृताञ्जलिः सन् वासुदेवं ध्यात्वा च इत्थं विज्ञापयेत्।

पूजाबिम्बमिदं विष्णोः स्थापितं पूर्वसूरिभिः।
पूज्यमानेऽङ्गवैकल्यदूषणं चेहवर्तते॥

अस्य जीर्णस्य बिम्बस्य चोद्धारं कर्तुमुद्यमे ।
आगमस्यवशात् कर्तुं व्यवसायमुपास्महे ॥
यथैव देवपूजायां विनियुक्तं अनिन्दितम् ।
गन्धपुष्पादिकं पश्चात् निर्माल्यं इति निन्द्यते ॥
तथैवाजीर्णितं बिम्बं पूजायामुपयुज्यते ।
पश्चात्तज्जीर्णितं बिम्बं निर्माल्यमितिनिन्द्यते ॥
अस्य बिम्बस्यचोद्धारं कर्तुमिच्छामि सम्प्रति ।
भवन्तो नः अनुजानन्तु भवदाज्ञां करोम्यहम् ॥

इति विज्ञाप्य, तैः अनुज्ञातः सन् प्रासादाग्रे दूर्वाभिः मधुयुक्ताभिः आहुतीनां लक्षं सहस्रं अष्टोत्तरं शतं वा व्याहृतिभिः[1] हुत्वा, पश्चोपनिपन्मन्त्रैः शान्तिहोमं विधाय, ब्राह्मणैः सह पुण्याहं वाचयित्वा, शान्तिं च, आत्मसमर्पण-पूर्वकं गुरुं नमस्कृत्य, दक्षिणां दत्त्वा, लोहजं दारुजं वा बिम्बं पूर्वलक्षणोपेतं कल्पयित्वा, जलाधिवासादीनि कर्माणि मण्डपे कृत्वा, पूर्वोक्तप्रदेशे इष्टकया दारुणा मृदा वा विमानानुगुण्येन एकहस्तसमुच्छ्रयवतीं कर्णिकादन्नयुतां वेदिकां आपाद्य, तदुपरि बालबिम्बं संस्थाप्य अपरेऽहनि प्रतिष्ठाप्य, तत्परेऽहनि रात्रौ मूलगेहं प्रविश्य, स्नपनादिभिः यथाक्रमं संपूज्य, रक्षाबन्धनं कृत्वा, प्रासादस्य चतसृषु दिक्षु पूर्ववत् शान्तिहोमं च विधाय, कर्मार्चायाः पुरतः स्थण्डिलं कृत्वा, लोहजं मृण्मयं वा महाकुम्भं, तत्परितः कलशाष्टं च विन्यस्य, तान् समन्त्र-

१ ओं भूः ओं भुवः ओं सुवः ।

वस्त्रापिधानकूर्चान् सनिष्कप्रमाणदलाष्टकयुतस्वर्णपद्मान् कृत्वा, महाकुम्भे मूलमन्त्रेण मूलमूर्तिं कलशेष्वपि इन्द्रादीन् आवाह्य अभ्यर्च्य, कुम्भस्य उत्तरदेशे गुरुः शयीत। तदनु प्रभाते स्नात्वा, आचार्यः बालगेहं समासाद्य, पूजयित्वा, प्रलयोदय-मार्गेण शोधयित्वा, योगपीठं संकल्प्य, च, इमां गाथां उदीरयेत्।

कियन्तं कालमेतस्मिन् कल्पगेहे जनार्दन।
निवासं कुरु देवेश कल्पिते बालमन्दिरे॥
अद्यप्रभृति देवेश द्वादशाब्दावधि प्रभो।
त्वदन्यान् केशवादीन् च वासुदेवोनुमन्यते॥

इति प्रहृष्टेन मनसा देवं प्रणम्य, बद्धाञ्जलिपुटः भूत्वा, गाथां इमां उदीरयेत्।

भगवन् देवदेवेश शङ्खचक्रगदाधर।
नीचालयमहं कर्तुं बिम्बं चापि मनोहरम्॥

वाञ्छामि तव देवेश तदनुज्ञातुमर्हसि।

एवं सयजमानः आचार्यः प्रार्थयन् मनसा शनैः कालं विज्ञाप्य, महाकुम्भे पञ्चमन्त्रेण आवाह्य, प्रणवेन निरुद्ध्य, महाकुम्भं पूजयित्वा, उद्धृत्य, देवालयात् विनिष्क्रम्य, प्रासादं प्रदक्षिणीकृत्य, बालगेहं च, तस्य अग्रतः महाकुम्भं निधाय, ब्राह्मणानां अनुज्ञया कालं विज्ञाप्य, पञ्चोपनिषन्मन्त्रेण महाकुम्भजलेन बिम्बं संसिच्य, ततः देवं प्रणम्य, संपूज्य, प्रासादकोणेषु बलिं च दत्त्वा, बिम्बं अलङ्कृत्य, पुण्याहं

वाचयित्वा, सृष्टिसंहारन्यसनं कृत्वा, गन्धपुष्पादिभिः संपूज्य, ब्राह्मणेषु वैदिकतान्त्रिकान् मन्त्रान् जपत्सु, सोष्णीषः अलङ्कृतः गुरुः हैमं लाङ्गलं आदाय, मूलमन्त्रेण पीठबन्धनं मोचयित्वा, विष्वक्सेनं ध्यायन् बिम्बं गेहं वा निर्माल्यवत् स्मृत्वा, वस्त्रैः आच्छाद्य, व्याहृत्या रज्ज्वा बद्ध्वा समुद्धृत्य वाद्यघोषैः सह आचार्यः क्षितौ अंभसि वा निक्षिप्य, विधिवत् स्नात्वा प्रासादं प्रविश्य, पुण्याहं वाचयित्वा, समन्ततः बलिं च दत्त्वा, गेहस्थान् देवान् उद्वास्य, तत्र गाः वासयित्वा, खात्वा, उद्धृत्य वालुकाभिः संपूर्य, प्रासादाग्रे, रक्षाहोमं कृत्वा, ऋचं पश्चिमायां उत्तरस्यां साम प्राच्यां च यजुराथर्वणं दक्षिणस्यां दिशि ब्राह्मणान् पाठयित्वा च, एवं शान्तिहोमं कृत्वा, चतुर्थेऽह्नि बालबिम्बस्य प्रासादादेः वा स्नपनं कृत्वा तदन्ते पुष्पयागावसानिकं उत्सवं कुर्यात्। यजमानः गुरवे यथाविधि दक्षिणां दत्त्वा, मूलगेहं बिम्बं वा यथाविधि समाप्य, प्रतिष्ठां च यथाविधि कुर्यात्।

इति श्रीवराहगुरुविरचितायां क्रियाकैरवचन्द्रिकायां
जीर्णोद्धारणविधिः नाम
पञ्चत्रिंशः परिच्छेदः



## अथ षट्त्रिंशः परिच्छेदः

# अथ संप्रोक्षणविधिः उच्यते

प्रासाद चाङ्गभङ्गादिसन्धाने नूतने कृते।
प्रतिमायां च पीठे च प्रभायां चायुधेषु च ॥
आराधने च विच्छिन्ने भूगुप्ते कमलासन।
रोदने स्वेदने चैव कंपने पतनेपि च ॥
वल्मीकादिसमुत्पत्तौ वर्षवातादिदूषिते।
कुण्डगोलकसंस्पर्शे वेदविक्रयकारकैः ॥
स्पर्शने प्रतिलोमाद्यैः नित्याशौचविगर्हितैः।
प्रतिलोमानुलोमैश्च सूतैश्च रथकारकैः ॥
वैखानसैश्च संस्पृष्टे भार्गवागमपूजकैः।
शैवादिभिश्च पाषण्डैः ब्रह्महत्यादिदूषितैः ॥
क्षय्यपस्मारिकुष्ठाद्यैः कृच्छ्रिभिः मूलरोगिभिः।
उदक्यादिभिरन्यैश्च शिल्पिभिः स्पर्शदूषिते ॥
विण्मूत्ररुधिरापेयस्पर्शदुष्टे च मन्दिरे।
जनने मरणे चैव श्वसृगालखरादिभिः ॥
स्पृष्टे च बिम्बे तन्त्राणां सङ्करे समुपस्थिते।
एवमादिषु चान्येषु संप्रोक्षणविधिः भवेत् ॥
धामादिकमसंप्रोक्ष्य प्रतिमादिक्रमप्यथ।
अर्चने राष्ट्रमधिपः प्रजाश्च सदनं हरेः ॥
शून्यं स्यादिरिणप्रायं उपद्रवसमाकुलम्।

दुर्भिक्षव्याधिकलहमृतिप्रायास्स्युरीतयः ॥

तस्मात् संप्रोक्षणं कार्यं धामादीनां यथाविधि ।

आचार्यः तदर्थं मृत्संग्रहणपूर्वकं अङ्कुरार्पणं कृत्वा, परेह्नि बिम्बप्रासादपीठानि स्वच्छोदकैः शोधयित्वा, पुण्याहं वाचयित्वा, 'विष्णोर्नुकं'[1] 'इदं विष्णुः'[2] इति द्वाभ्यां अब्लिङ्गैः[3] मन्त्रैश्च संक्षाल्य उत्तमादिषु स्नपनेषु यथाविधि एकतरेण पुण्याहपूर्वकं संस्नाप्य, यागमण्डपं अलङ्कृत्य, पुण्याहं वाचयित्वा, द्वारतोरणकुम्भादीन् अभ्यर्च्य, मण्डपमध्ये वेदिकां कृत्वा, विंशतिभारैः व्रीहिभिः, तदर्धेन तण्डुलेन, तदर्धेन तिलेन अन्तरान्तरावस्त्राच्छादनसहितं पीठं कृत्वा, तन्मध्ये पद्मं आलिख्य, पुण्याहं वाचयित्वा, तत्र महाकुम्भं संस्थाप्य, सूत्रवस्त्रादियुतं कृत्वा, प्रतिमां एकनिष्कप्रमाणस्वर्णेन च नव रत्नानि च निक्षिप्य, अस्त्रमन्त्रेण पिधाय, तद्दक्षिणतः करकं च तथा संस्थाप्य, तत्परितः कुम्भाष्टकं च, तदुत्तरे यथाविधि मण्डलं कृत्वा, तस्मिन् मण्डले व्याघ्रचर्माद्युप-करणादिभिः पूर्ववत् शय्यां कृत्वा, वितानाद्यैरलङ्कृत्य, पुण्याहं वाचयित्वा, तत्र देवेशं शाययित्वा, कुम्भे परमात्मानं

---

१ विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि ।
विममे रजाꣳसि ॥

२ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ।
समूढमस्य पाꣳसुरे ॥

३ आपो हिष्ठेत्यादि मन्त्रैः ।

करके सुदर्शनं च उपकुम्भाष्टके विष्वक्सेनादीन् च आवाह्य अभ्यर्च्य, नैवेद्यान्तं संपूज्य, कुण्डे स्थण्डिले वा अग्निं उपसमिध्य यथाविधि समिदाज्यचरुभिः मूलेन च तत्तन्मन्त्रैः मूर्तिहोमं च कृत्वा, पुण्याहपूर्वकं रक्षाबन्धनं च विधाय, ततः प्रभाते शायितं बिम्बं उत्थाप्य, स्थापितकुम्भान् आदाय, मूर्तिपैः साकं सवेदवाद्यघोषं धाम प्रदक्षिणीकृत्य, देवस्य पुरतः धान्यराशौ संस्थाप्य, पुण्याहं वाचयित्वा, कूर्चेन कुम्भतोयं आदाय, मूलमन्त्रेण पञ्चोपनिषदा च अब्लिङ्गैः इतरैः शान्तिमन्त्रैश्च देवं संप्रोक्ष्य, अर्घ्यादिमहाहविः नैवेद्यान्तं यथाविधि पूजयेत् । यजमानः आचार्यमूर्तिपपरिचारकाणां यथार्हदक्षिणां दत्त्वा, ब्राह्मणान् भोजयित्वा, तेभ्योऽपि दक्षिणां दद्यात् ।

इति श्रीवराहगुरुविरचितायां क्रियाकैरवचन्द्रिकायां
संप्रोक्षणविधिः नाम
षट्त्रिंशः परिच्छेदः

---

### अथ सप्तत्रिंशः परिच्छेदः

## अथ तावत् पवित्रारोहणविधिः उच्यते

नित्यनैमित्तिककाम्यानां सर्वेषां कर्मणां न्यूनातिरेकदोषशान्त्यर्थं पूर्णाहुतिवत् पवित्रोत्सवः कार्यः । श्रावणाषाढभाद्रपदाश्वयुजेषु मासेषु सिते पक्षे द्वादशीदशमीप्रतिपत्पौर्णमासी

पञ्चम्येकादशीत्रयोदशीद्वितीयासु तिथिषु पुष्यरोहिणीरेवती-भरणीस्वातीहस्तपुनर्वस्वादिषु ऋक्षेषु पवित्रोत्सवं कुर्यात्। तन्तून् ब्राह्मणकन्याभिः निर्मितान् दोषरहितान् कार्पासान् वा कौशेयान् वा क्रीतान् वा समानीय, मौद्गादिचूर्णैः शुद्धवारिभिः संक्षाल्य आतपे शोषयित्वा, तान् त्रिगुणीकृत्य, तादृशान् पुनः तथा कृत्वा, तावतोपि चतुर्गुणान्, यद्वा त्रिगुणान् वा चातुर्गुण्यं नीत्वा, त्रिगुणान् त्रिगुणीकृत्य वा, अथवा तान् एकतां नीत्वा, भूमिं गोमयेन अनुलिप्य, तत्र यज्ञवृक्षसम्भूतं शङ्कुद्वयं यथोक्तमानानुसारेण संस्थाप्य, आचार्यानुज्ञया, भगवद्भक्ताः स्नाताः तन्निर्माणनिपुणाः प्राङ्मुखाः तत्र तन्तून् आरोप्य, यथा भूषणार्हाणि तथा पवित्राणिकुर्युः। मूलबेरादि बेराणां आद्यं अधिवासार्थं पवित्रं नाभ्यवधिमानं अष्टोत्तरशतैः सूत्रैः द्वात्रिंशत्ग्रन्थिभिः युतं च, मण्डलकुम्भकुण्डानां पद्मगलमेखलामानानि तादृशानि च निर्माय, चक्राब्जस्य पद्मनाभ्यरनेमिबाह्यपवित्राणि चतुश्शतत्रयद्विशतैकशतचतुश्शतैः तन्तुभिः क्रमेण सप्तविंशतिद्विगुणत्रिगुणचतुर्गुणपञ्चगुणैः ग्रन्थिभिश्च, महाकुम्भस्य अष्टोत्तरशततन्तुयुतं, सप्तविंशति ग्रन्थियुतं, करकस्य च एकाशीतितन्तुभिः विंशतिग्रन्थिभिश्च युतं पवित्रं निर्माय, बेराणां तु श्रीवत्सकौस्तुभवनमालाकिरीटाह्वयानि नाभिहृदयजङ्घाकिरीटमानानि क्रमेण अष्टोत्तरशताशीत्यष्टोत्तर-चतुश्शततन्तुभिः द्वात्रिंशत्पञ्चविंशतिद्वात्रिंशत्तावद्भिः ग्रन्थिभिश्च युतानि पवित्राणि च,

उत्तमादिपवित्राणि तु जानूरुनाभिमर्यादानि चतुश्शत-त्रिशतशतद्वयतन्तुभिः अष्टोत्तरशताशीतिषष्टिग्रन्थियुतानि च, हारार्थं त्रिशततन्तुभिः सप्तविंशतिग्रन्थियुतं च, शतद्वयतन्तुभिः द्वात्रिंशत्ग्रन्थियुतं नाभिमर्यादं पवित्रं च अष्टोत्तरसहस्रतन्तुभिः अनेकग्रन्थियुतं चरणमर्यादं पवित्रं च सहजपीठस्य तन्मर्यादं अष्टोत्तरशततन्तुभिः पञ्चविंशतिग्रन्थिभिश्च युतं, प्रभापवित्रं तत्तुल्यतन्मर्यादं अनेकग्रन्थियुतं च पवित्रं एवं सर्वेषां स्वतन्त्र-बिम्बानां परतन्त्रेषु बिम्बेषु तु उत्तमादित्रयमेव। श्र्यादीनां देवीनां च एवमेव अष्टोत्तरशतसूत्रैः बहुग्रन्थिभिश्च युतानि च, अग्निकुण्डस्य प्रतिमेखलं सप्तविंशपञ्चविंशद्द्वाविंशकैः सूत्रैः तन्मानग्रन्थिभिश्च मेखलामर्यादानि पवित्राणि च स्रुक्स्रुवादि-पात्राणां पञ्चविंशतिसूत्रैः बहुभिः ग्रन्थिभिः तन्मर्यादानि च, अर्घ्यादिपात्रधूपदीपपात्रघण्टाक्षमालादिषु सर्वत्र अष्टोत्तरशत-तन्तुभिः यथेप्सितग्रन्थिभिः द्वादशाङ्गुलमानेन युतानि च, सेनेशगरुडदिग्देवताद्रुहिणदुर्गाविनायकरुद्रादिपरिवारेषु अष्टो-त्तरशततन्तुभिः द्वात्रिंशत्ग्रन्थिभिश्च युतानि हस्तमानानि च, चण्डादीनां सप्तविंशतिसूत्रैः तावद्भिः ग्रन्थिभिः तन्मानेन च, कुम्भतोरणादिषु च तथा, बलिपीठस्य कर्णिकामानं तादृशं च, आचार्याणां यतीनां च अष्टोत्तरशततन्तुभिः बहुग्रन्थिभिश्च मूर्तिपानां पूजकानां ब्राह्मणानां च एकाशीतिसूत्रैः नाभिमर्यादानि च, राज्ञः तु अष्टोत्तरशतसूत्रैः बहुग्रन्थिभिः तन्मानेन च, तदुपजीविनां एकाशीतिसूत्रैः वैश्यादीनां चतुर्विंशतितन्तुभिश्च

तेषां उपवीतवदेव पवित्राणि निर्माय, मणिमुक्ताप्रवालादिरत्नैः स्वर्णादिलोहैश्च पूरयित्वा, ग्रन्थीन् शङ्खाकारान् धात्रीफल-सदृशान् वा मुक्ताफलसमान् वा, बद्ध्वा, तदन्तरालानि कस्तूरिकाकुङ्कुमकर्पूरचन्दनावश्यायकर्दमैः आलिप्य, यद्वा ग्रन्थीनां पूरणं मल्लिकाद्यैः पुष्पैः वा कृत्वा, निशाचर्चाभिः अनुरञ्ज्य च एवं पवित्राणि निर्माय, पूर्ववत् मण्डपं समध्य-वेदिकाकुण्डं कल्पयित्वा, तोरणवितानदर्भमालाद्यैः अलङ्कृत्य, तत्र यागोपकरणानि सर्वाणि संपाद्य, तद्दिनात् सप्ताहे पञ्चाहे तृतीये अहनि सद्यः वा सङ्कल्पपूर्वकं विधिवत् अङ्कुरावापनं कृत्वा, तदनु आचार्यः कृतकृत्यः उपोषितः दशम्यां निशामुखे मूर्तिपैः यजमानेन च सह गर्भगृहं प्रविश्य देवं अर्घ्यादिभिः यथाविधि पूजयित्वा, तैः साकं देवं प्रणम्य प्राञ्जलिः सन् इमां गाथां उदीरयेत् ।

न्यूनातिरेकशान्त्यर्थं पवित्रारोपणं परम् ।
अर्चनं भगवन् सर्वदुरितोत्सारणक्षमम् ॥
संपदां चापि सर्वासां उत्पादनमनुत्तमम् ॥
क्रियते तदविघ्नेन यथा स्यात् कर्म चोदितं ।
तथा अनुज्ञापयामि त्वां अनुजानी हि कर्म तत् ॥

इति देवं विज्ञाप्य, मन्दिरात् मण्डपं प्रविश्य, तत्र दर्भान् प्रागग्रान् आस्तीर्य, तेषु प्रागाननः उपोषितः उपविश्य, समाहितमनाः जपध्यान परः रात्रिं जागरेण नीत्वा, अपरेद्युः निशीथिन्यां अधिवासनकर्म वक्ष्यमाणेन विधिना कुर्यात् ।

